॥ अथ श्रीभागवततात्पर्यटिप्पणी छलारीकृता प्रारभ्यते ॥

॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ जन्माद्यस्य यथायोग्यं रमादेर्भवति प्रभोः ॥ यस्मान्निर्दोषकल्याणगुणपूर्णं नतोस्मि तं ॥ १ ॥ वेदान्यो व्यभजद्विष्णुर्भारतब्रह्मसूत्रकृत् ॥ कर्ताभागवतादेश्च वेदव्यासं नमामि तं ॥ २ ॥ योऽकरोद्ब्रह्मसूत्रादिभाष्यं तात्पर्यनिर्णयं ॥ भारतादेश्च तं मध्वं भजाम्यादिगुरुं मम ॥ ३ ॥ अनुव्याख्यानामृताब्धेर्यो बुद्ध्याद्रिमथ तं भजे ॥ निष्कास्यापाययं न्यायसुधां तं जयसंज्ञकं ॥ ४ ॥ श्रीभागवततात्पर्यनिर्णयस्य प्रबोधिनीं ॥ टीका मध्वकृत स्याहं करोम्यार्यकृपाबलात् ॥ ५ ॥ गंगासंगेन नैर्मल्यं रथ्यापैर्लभ्यते यथा ॥ तथा मद्वाग्विशुद्ध्यर्थं संगम्यते गुरोर्गिरः ॥ ६ ॥ इष्टानिष्टप्राप्तिपरिहारसाधनाज्ञेषु सज्जनेषु कृपालुभिः ब्रह्मरुद्रेंद्रादिभिः प्रार्थितो नारायणो व्यासरूपेणाविर्भूय तेषां सज्जनानामिष्ट प्राप्त्यनिष्टपरिहारसाधनज्ञापनाय वेदविभागपूर्वकं ब्रह्मसूत्रादिकं कृत्वा भागवतसंहिता चकार । तस्या अन्यैरन्यथाव्याख्याताया यथावत्तात्पर्यार्थनिर्णयं कर्तुकामो भगवानानंदतीर्थमुनिः स्वयं हरिर्विलीनप्रकृतित्वादंतरायविधुरोऽपि नित्य हरिस्तुतिध्यानकर्तृत्व- स्वभावत्वेन कृतं हरिस्तुतिध्यानरूपं मंगलं प्रारिप्सितपरिसमाप्त्यादिसाधनं शिष्यशिक्षणार्थं सामान्येन भागवताद्यश्लोकव्याख्यान रूपश्लोकेन ग्रंथादौ निबध्नाति ॥ सृष्टीत्यादिना । ईहा चेष्टा यस्मात् विष्णोः श्रीब्रह्मरुद्राः प्रभृतयः आद्यो येषां सुराणां ते तथा ते च ते सुराश्च नराश्च ईशस्य स्वर्गाधिपेंद्रस्य शत्रवः असुराश्च त एव आत्मा स्वरूपं यस्य जगतस्तत्तथा तस्येत्यर्थः॥व्यस्ताः। व्यासेन विस्तारेण साकल्येन युक्ताः ॥ समस्ताः । संकोचेन युक्ता इत्यर्थः ॥ छ ॥ अथेदानीं जन्माद्यस्य यत इति भागवत- प्रथमश्लोके यत इत्यादियच्छब्दस्यानन्वितभ्रांतितया निरस्तकुहकमित्यादिविशेषणाना विशेष्याभावभ्रमेणासंगतत्वभ्रांति चापेक्षि- ताध्याहृतेनान्वयप्रदर्शनेन परिहरति ॥ जन्माद्यस्येति । अत्रेतिशब्द आवर्तनीयः । तत्र द्वितीय इतिशब्द इति प्रकरणे हेतौ प्रकाशादिसमाप्तिष्वित्यमराभिधानादाद्यर्थकः । तेन यः अर्थेष्वभिज्ञः यः स्वराट् इत्यादियच्छब्दयुक्तसंग्रहः कृतो भवति । अनेन

अन्वयादितरतश्च यतो यस्मादस्य जगतः जन्मादि भवति यः अर्थेष्वभिज्ञः यः स्वराट् यः आदिकवय ब्रह्म तेने य सूरया मुह्यति यत्र यस्मिन् त्रिसर्गो मृषा तं स्वेन धाम्ना सदा निरस्तकुहकं सत्यं परं धीमहीत्यन्वयः प्रदर्शितो भवति । एवमन्वयं प्रदर्श्येदानी-मन्वयादित्यस्य संतत्याद्यर्थत्वभ्रांतिनिरासाय तदनूद्य प्रकृतोपयुक्तमर्थमाह ॥ अन्वयादिति । अनेन अनु उपक्रमाद्यनुसृत्य अयति ज्ञापयत्यर्थमिति अन्वयो वेदादिः तस्मात् अय गताविति धातोर्गत्यर्थानां ज्ञानार्थत्वादित्यन्वयपदार्थ उक्तो भवति ॥ इतरतः । इतरस्मात् जीवादिभिन्नात् । यत इत्यन्वयार्थभ्रांतिनिरासाय तदनूद्य यथावद्व्याचष्ट ॥ इतरत इति । व्याप्तिप्रदर्शनेन तर्कमेव दर्शयति ॥ चेतनाद्धीति । अनेन विमत चेतनजन्यं कार्यत्वात्पुत्रादिवदिति तर्क उक्तो भवति । नन्वनेनानुमानेनेश्वरस्य कर्तृत्वं साधितं भवति । तदनुपपन्नं । ईश्वरस्य विमतोपादानादिगोचरज्ञानाभावादित्याशंकापरिहारायार्थेष्वभिज्ञ इति भागवतपदं प्रवृत्तं । तद्व्याख्यानाय तस्य परिहारकत्वं च दर्शयति ॥ अभिज्ञ इति । अतः सर्वज्ञत्वेनोपादानादिगोचरज्ञानवत्त्वाद्युज्यत विमतकर्तृत्वमीश्वरस्येति शेषः । स्वराडित्यस्य वैयर्थ्यशंकापरिहाराय स्वराडित्येतदवतारयति ॥ यं कामये तमिति । अत्रासावित्यतःपरं इत्याहेत्यध्याहार्यं स्वराडित्यतःपरं इतिशब्दश्चाध्याहार्यः ॥ अन्येषां । रमाब्रह्मादीना ॥ तदपेक्षत्वात् । ईश्वरापेक्षत्वात् ईश्वराधीनत्वात् ॥ असौ । हरिः । तु अन्यापेक्षो ॥ नच । नैवेत्यर्थः । अनेन स्वातंत्र्याद्धरेरेव जगज्जन्मादिकारणत्वं रमादेः स्वातंत्र्याभावान्न जगज्जन्मादिकारणत्वमित्युक्तं भवति । तेन हरेरेव जगज्जन्मादिकारणत्व कुतो रमादीनामपि किं न स्यादित्याशंकापरिहारायेदंपदमित्युक्तं भवति । तेने ब्रह्मेत्यादिवाक्यवैयर्थ्यपरिहारायावतारयति ॥ कुत इति । अत्राभिज्ञत्वं स्वराट्त्वं चेति शेष इत्यत आहेति शेषश्च पूरणीयः । आदिकवय इति पदात्परं इतिशब्दश्चाध्याहार्यः । नन्वादिकवय चतुर्मुखाय ब्रह्म वेदं तेने उपदिष्टवानिति हरेश्चतुर्मुखोपदेष्टृत्वमात्रमत्रोच्यते । तेन सर्वज्ञत्वं स्वराट्त्व च हरेः कथ सिद्ध्यतीत्याशंकां तन ब्रह्म-

त्यादिवाक्यसूचितश्रुत्यर्थानुवादेन परिहरति ॥ **सहीति** । हि यस्मात् स चतुर्मुख एवं ता तानि विश्वा विश्वानि जातानि उत्पत्तिमंति वस्तूनि परिबभूव पराभूतानि चकार । नान्यः परिबभूवातो विश्वाधिक इति शेषः । अनेन सर्वजीवजडात्मकप्रपंचोत्तमचतुर्मुखोपदेष्टुरसार्वज्ञ्यस्य पराधीनत्वस्य चासभवात्तदुपदेष्टुं हरेः सर्वज्ञत्वं स्वराट्त्वं च सिद्ध्यतीत्युक्तं भवति। हृदेत्यस्य शरीरावयहृदयार्थत्वभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ **हृदेति** । हृत्स्नेहे च मनः स्निग्धे सुहृद्धर्धौ हरावित्यभिधानादिति भावः । हरिश्चतुर्मुखस्य वेदोपदेष्टेत्यत्र प्रमाणं वदंस्तेनैव प्रमाणेन चतुर्मुखस्यादिकवय इत्युक्तादित्वं च दर्शयति ॥ **य इति** । अनेन यो ब्रह्माण विदधात्युत्पादयतीत्यनेन चतुर्मुखस्य सर्वजीवजडापेक्षया प्रथमोत्पन्नत्वमेवादित्व न तु कारणत्वमित्युक्त भवति । मुह्यति यं सूरय इति वैयर्थ्यशंकापरिहारायावतारयति ॥ **आत्मत इति** । आत्मतः परमात्मत एव तस्य बुद्धिप्रकाशः हरिविषयकबुद्धिप्रकाशरूपः । किमनेनोक्तं भवतीत्यत आह ॥ **न चेति** । शक्य इत्यतःपरं इत्याहेति शेषः पूरणीयः । सूरय इत्यतःपरं इतिशब्दश्चाध्याहार्यः । अनेन हरेर्ने चतुर्मुखोपदेष्टृत्व युक्तं तस्य स्वत एव ज्ञातृत्वादित्याशकापरिहारायेद वाक्यमिति न वैयर्थ्यमित्युक्त भवति । वैयर्थ्यपरिहाराय मृषेत्येतदवतारयति ॥ **न चेति** । अत्र किं तु मृषेत्यतःपरमित्याह । मृषेतीति वाक्यमध्याहार्य॥ **अतृप्तः** । अपूर्णः। सृष्ट्याद्यर्थमिति शेषः । मृषेत्यस्य मिथ्येत्यर्थभ्रांतिं निवारयति ॥ **वृथेति** । अनेन मृषेत्यस्य निष्प्रयोजन इत्यर्थ उक्तो भवति । मृषाशब्दस्य निष्प्रयोजनार्थत्वे प्रयोगं दर्शयति ॥ **भित्वेति** । भित्वामृषाश्रुदृषदश्मना रहो जहासेति दशमस्कंधे कृष्णनेत्राश्रूणां यशोदाद्यबाधितप्रत्यक्षादिप्रमाणसिद्धत्वेन मिथ्यात्वासभवात् निष्प्रयोजनार्थत्वदर्शनात्तद्वदत्रापि मृषापदस्य निष्प्रयोजनार्थत्वमित्यर्थः । नन्वनेन जगत्सष्ट्यादिना हरेर्यः प्रयाजनाभाव उक्तः सोऽयुक्तः । अप्रामाणिकत्वादित्यतस्तत्प्रमाणमाह ॥ **देवस्येति** । एषः इच्छात्मकः अयं जगत्स्रष्टृत्वादिलक्षणो धर्मः देवस्य हरेः स्वभाव एव न तु स्वप्रयोजनाय । कुतः आप्त-

कामस्य प्राप्ताशेषप्राप्तव्यस्य हरेः का स्पृहा न कापीत्यर्थः । नन्वेवं चेत्तर्हि सर्वथा प्रयोजनरहितजगत्सृष्ट्यादिकर्तुरीश्वरस्याप्रेक्षावत्त्वं स्यादित्याशंकां यत्रेति भागवतपदतात्पर्यार्थकथनेन परिहरति ॥ यत्रेतीति । अन्यत्र प्रपंचविषये न वृथा सर्वथा प्रयोजनरहितं जगत्सृष्ट्यादिकं न भवतीति शेषः ॥ तद्विषये । परमात्मविषये । अनेन जगत्सृष्ट्यादेः स्वप्रयोजनाभावेऽपि परप्रयोजनस्य सत्त्वात्सर्वथा प्रयोजनशून्यत्वाभावाद्धरेनाप्रेक्षावत्त्वमित्युक्तं भवति । त्रिसर्ग इत्यस्य त्रयाणां भूम्यंतरिक्षस्वर्गाणां सर्ग इत्यर्थत्वभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ जीवेति । नन्वेवं व्याख्याने तेजोवारीत्यादिदृष्टांतवाक्यमनुपपन्नार्थं स्यादित्यतो दृष्टांतवाक्यं दार्ष्टांतिकसंगतत्वेन योजयति ॥ एकमेवेत्यादिना । प्रतिबिंबवत् । सूर्यादिप्रतिबिंबवत् । धाम्ना स्वेन सदेत्यादिवाक्यस्य प्रकृतासंगतत्वशंकानिरासाय संगतिमाह ॥ न चेति । सृष्टिपदात्परं इत्याहेति वाक्यं कुहकपदात्परं इतिपदं च संयोजनीयं । अनेन तेजआदि दृष्टांतेनोक्तो यो हरेः सकाशात् त्रिसर्गः स मायामय इति न शंकनीयं हरेर्निरस्तमायत्वादित्याशंकापरिहारोऽनेन वाक्येन क्रियतेऽतो नासंगतमित्युक्तं भवति । ननु धाम्ना प्रकाशेन निरस्तकुहकमित्येतावतैव मायामयत्वशंकाया निरस्तत्वात् स्वेन सदेति पदद्वयं व्यर्थमित्यतस्तत्कृत्यमाह ॥ तद्धाम्नेत्यादिना ॥ तद्धाम्ना । विष्ण्वधीनधाम्ना । पूर्वबंधभाक्त्व हरेरिति शेषः । इदमुक्तं भवति । यद्यपि धाम्ना निरस्तकुहकमित्यनेनैव मायामयत्वशंका निरस्ता भवति । तथाऽपि न पदद्वयवैयर्थ्यं । विष्णुस्थस्य धाम्ना निरस्तकुहकत्वस्य लक्ष्मीमुक्ताभ्यां व्यावृत्तिसिद्धये पदद्वयस्य प्रयुक्तत्वेन सार्थक्यात् । व्यावृत्तिरपि किमर्थमितिचेन्न । अधिकारिणस्तयोपासनार्थत्वादिति । सत्यमित्यस्य घटादिसाधारणाबाधितत्वरूपापार्थप्रतीतिनिरासाय साधारणोत्तमार्थमाह ॥ सत्यमिति । सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते इति गीतामनुसृत्य सच्छब्दस्य साधुभावरूपमर्थं गृहीत्वा निर्दुःखेत्यर्थ उक्तः । सद्भावाख्यार्थं गृहीत्वा नित्येत्यर्थ उक्तः । आनंदंतीति वै वदेदिति प्रमाणं मुख्यामुख्ययोर्मुख्ये संप्रत्यय इति न्यायं चानुसृत्य तकारस्य

निरतिशयानंदेत्यर्थ उक्तः । येति ज्ञान समुद्दिष्टमिति प्रमाणमनुसृत्य यशब्दस्यानुभवेत्यर्थ उक्तः। एतत्सामानाधिकरण्यार्थो रूप मिति। आनंदश्च अनुभवश्च आनदानुभवौ निरतिशयौ च तावानदानुभवौ रूपं स्वरूपं यस्य सः । तथा निर्दुःखश्च नित्यश्चासौ निर तिशयानुभवरूपश्चेति निर्दुःखनित्यत्वयोर्हरिविशेषणत्वं । तथा निर्दुःखौ अदुःखसमानाधिकरणौ च तौ निरतिशयानंदानुभवौ चेत्या नंदानुभवविशेषणत्वं च ज्ञातव्यं ॥ छ ॥ परमित्यस्यान्यमित्यर्थभ्रांतिनिरासाय तदनूद्य सम्यग्व्याचष्टे ॥ परमिति । ननु सपूर्णगुणत्वरूपपूर्णत्वं हरेः कुतः सिद्धमित्यत आह ॥ परत्वेति । सत्यपदांतश्लोकग्रहणायादिपदं । एवमुक्तमर्थ प्रमाणेन विवृणोति ॥ तंत्र भागवते चेति। ईहादेरित्यादिपदेनाचार्यकृतमंगलाचरणश्लोकनियत्यादयो ग्राह्याः॥ श्रुतिस्मृतिसमन्वयात् । सम्यक् अनु उपक्रमाद्यनुसारेण ईयते ज्ञायते हरिर्येन श्रुत्यादिना समन्वयः श्रुतिस्मृतिरूपसमन्वयः तस्मादित्यर्थः। ननु यदि श्रुतिस्मृति-रूप एव समन्वयस्तर्हि श्रुतिस्मृतिभ्य इत्येव वक्तव्यं। समन्वयादिति तु व्यर्थमेवेति चेन्न। अत्र समन्वयादित्युक्ते भागवतस्थसमन्व यपदस्य श्रुतिस्मृत्यर्थज्ञापनार्थत्वात् । अत एवैतत्प्रमाणानुसारेणाचार्यैः पूर्वमन्वयादित्यनूद्य श्रुतिस्मृतिभ्य इति व्याख्यातं । अन्यथा श्रुतिस्मृतीनामित्युच्येत । न तु श्रुतिस्मृतिभ्य इति पंचम्यंतत्वेन । यत्तु तत्तु समन्वयादिति सूत्रभाष्येऽन्वय उपपत्त्यादि लिंगमिति समन्वयशब्दस्य उपपत्त्यादिलिंगार्थत्वमुक्तं । तत् शास्त्रयोनित्वादिति सूत्रेण समन्वयशब्दार्थस्य शास्त्रस्य पृथगुक्तत्वा भिप्रायेणैव न तु शास्त्रस्य समन्वयशब्दार्थत्वाभावाभिप्रायेणेति बोद्धव्यं ॥ नृपूर्वादेः । नाचेतनः पूर्वः करणं यस्य तत् नृपूर्वकं । भावप्रधानो निर्देशः । चेतनजन्यत्वसाधका युक्तिरादिर्यस्याः युक्तेः सा तथा नृपूर्वादेः युक्तितः युक्तेश्चेत्यर्थः । चेतृपूर्वादेरिति क्वचित्पाठः ॥ श्रीब्रह्मभवपूर्विणः । श्रीब्रह्मभवाः पूर्वाः येषां ते श्रीब्रह्मभवपूर्वाः ते संत्यस्मिन् जगति तत् श्रीब्रह्मभवपूर्वि तस्येत्यर्थः । श्रीब्रह्मभवपूर्विणः पृथक् यथायोग्यं समासेन व्यासेन च सृष्टिस्थित्यप्ययेहादेः कर्तेत्यन्वयः ॥ वारिस्थतेजः

प्रतिमा जीवाः । तेजसः प्रतिमाः प्रतिबिंबाः वारिस्था च सा तेजप्रतिप्रतिमा च वारिस्थतेजः । प्रतिमावद्विद्यमानाः जीवा इत्यर्थः । तस्मात् हरेर्ज्ञानदुर्लभं येषां ते तथा मिथ्याज्ञानिन इत्यर्थः । ज्ञानदुर्बला इति कचित्पाठः । तषां मिथ्याज्ञानित्वं कुत इति चेत् तज्ज्ञान विषयस्यात्यंतासत्त्वादिति भावेनाह ॥ नित्यमिति । स्वत एव । स्वभावत एव । नित्यनिरस्तेंद्रजाले हरौ कथ भवेत् । इद्रजालविधा सृष्टिरिति शेषः । यदेश्वरप्रसादेन निरस्तेन्द्रजालेषु रमाब्रह्मादिष्विद्रजालप्रकारा सृष्टिर्नास्ति तदा स्वत एव नित्यनिरस्तेंद्रजाले हरौ इन्द्रजालप्रकारा सृष्टिर्न भवेदिति किमु वक्तव्यमिति कैमुत्यद्योतनार्थं स्वत एवत्युक्तं । तदेवोपपादयति ॥ अक्षमा इति । अनंताचिंत्यो विभवः ऐश्वर्यं शक्तिर्यस्य स तथा । तामिद्रजालप्रकारा सृष्टिं ईहते चेष्टते करोतीत्यर्थः । प्रमाणकारो यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकमिति वाक्यं प्रकारांतरेण व्याख्याति ॥ स्वप्नादिकमिति । स्वप्नादिकमित्यादिपदेन जाग्रत्सुषुप्ती ग्राह्ये । प्राणादीत्यादिपदेनापानादिकं मुख्यप्राणरूप ग्राह्यं । तस्यैष आत्मा विशते ब्रह्मधामेत्याथर्वणोपनिषच्छ्रुतौ वायौ ब्रह्मधाम॰ शब्दप्रयोगात्तदनुसारेणात्र धाम्नेति धामशब्दस्य प्राणादिरूपो वायुरर्थ उक्तो ज्ञातव्यः । केवलज्ञानस्याज्ञानामिश्रस्य सदा निरस्त कुहकस्येति यावत् । परस्यास्य हरेः सकाशात् मायासृष्टिर्न युज्यते । तस्माद्बाधायुता इत्यादि स्वोक्तमेव विवृणोति ॥ इदं न बाध्यत इति । इदं स्वप्नादिकं सर्वं जगत् यतः कारणात् केवलस्यास्य हरेः सम्यक् शक्त्या विजृंभितं प्रकटितं तस्त्मात्केवलजं यतश्च केवलजं मोक्षवन्न बाध्यत इत्यर्थः । अनेन यतः कवलाः केवलजाः तस्मात् केवलजातत्वादेव बाधायुता इति योजना द्रष्टव्या । अनेन सदा निरस्तकुहकं सुपां सुपो भवतीति वचनात् द्वितीया षष्ठ्यर्थे । सदा निरस्तकुहकस्य यतो मायासृष्टिर्न युज्यते तस्मात्तज्जातः स्वप्नादिरबाधितः । धाम्ना धामनामकमुख्यप्राणस्थेन स्वेन स्वतंत्रेण हरिणा जातश्च त्रिसर्गः स्वप्नजाग्रत्सुषुप्तिसर्गो यत्र हरौ मृषा निष्फल इति भागवतवाक्यं प्रकारांतरेण व्याख्यातं भवति । तंत्रभागवतप्रकारः सृष्टिस्थित्यप्ययेहादेरित्यादिस्वोक्तं

प्रमेयं नाप्रामाणिकमित्याह ॥ एतद्रहस्यमिति। ब्रह्मसूत्रपदशब्दः सर्वसदागमोपलक्षकः। ब्रह्मसूत्राद्युक्तमौपचारिकमिति न शंकनीयमिति भावेन तत्प्रमेयाज्ञानिज्ञानिनोः फलमाह ॥ ये त्वेवं नेति। मे मतमिति वक्ष्यमाणमत्रापि सबध्यते मम मतमिति वर्तते। तत्र भागवतस्थैतदर्थप्रतिपादकान्यवाक्यसंग्रहार्थमित्यादीत्यादिपद ज्ञेयं। अत्र सृष्टिस्थित्यप्ययेहादेरित्यारभ्य कर्ता विष्णुरजो नित्य इत्यत तात्पर्यप्रमाणवाक्यैर्जन्माद्यस्य यतान्वयादितरतश्चेति भागवतवाक्यं व्याख्यातं। सर्वज्ञत्वान्न चापारोऽनन्याधिपतिश्चासाविति वाक्येन अर्थेष्वभिज्ञः स्वराट् इति वाक्य व्याख्यातं। गरीयान् ब्रह्मणो यत इति वाक्येन तेने ब्रह्महृदायादिकवये इति व्याख्यातं। तत्प्रसादमृत इति श्लोकार्धेन मुह्यंति यं सूरय इति विवृतं। इंद्रजालविद्यासृष्टिमित्यारभ्य कथं तामीहते हरिरित्यंतवाक्येन धाम्ना स्वेन सदा निरस्तकुहकमिति विवृतं। निर्दुःखपूर्णेति श्लोकार्धेन सत्यपदं व्याख्यात। निर्दोषगुणेति तात्पर्यश्लोकार्धेन परशब्दो व्याख्यातः। स्वप्नादिकमित्यारभ्य शक्त्या सम्यक् विजृंभितमित्यंतेन यत्र त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकमिति वाक्यं प्रकारातरेण व्याख्यातं। एतद्रहस्यमिति श्लोकार्धेन स्वोक्तार्थस्य प्रामाणिकत्वमुक्तं भवति। ये त्वेवं न विजानंतीत्यारभ्य ममैवोदितमंजसेत्यतवाक्येन स्वोक्तार्थस्य तात्पर्यविषयत्वमुक्तं भवति। एवं तंत्रभागवतस्मृत्या तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषेति भागवतवाक्यस्य जगन्मिथ्यार्थत्वं निराकृत्येदानीं ब्रह्मसूत्रेणापि निराकरोति ॥ वैधर्म्यादिति। अत्र स्वप्नपदेन स्वाप्नगजादावारोपित जाग्रद्गजाद्यैक्यं गृह्यते। आदिपदेन जाग्रद्रज्जुसर्पादिकं गृह्यते ॥ वैधर्म्यात्। स्वप्नादेर्बाध्यत्वरूपजगद्वैलक्षण्यात्। चशब्देन जगतो बाध्यत्वरूपस्वाप्नादिवैलक्षण्यं गृह्यते। ननु जगत्सत्यत्वे प्रमाणाभावाज्जगन्मिथ्यात्वमेवातो भागवतवाक्यस्य तदर्थत्वं युक्तमित्यता जगत्सत्यत्वे श्रुत्यादिप्रमाणमाह ॥ प्रधान्वस्येति। आदिपदेन विश्वं सत्यं मघवाना इवो इत्यादिश्रुतयः। विश्व सत्य वशे विष्णोरित्यादिस्मृतयश्च गृह्यंते। महतः सर्वोत्कृष्टस्य सत्यस्यास्य हरेः महानि महांति करणानि जगत्सर्जनादिकर्माणि सत्या

सत्यान्येव प्रावोच नु इत्यर्थः। एवं स्ववाक्यप्रमाणाभ्यां भागवताद्यश्लोकं सविस्तरं व्याख्यायेदानीं भागवतग्रंथस्यानन्यार्थत्वेन व्याख्येयनिमित्तं प्रामाण्यादेर्निमित्तभूतं जन्माद्यस्य यतोऽन्वयादित्यादिपदलब्धमर्थमाह ॥ ब्रह्मसूत्रेति । अत्र ब्रह्मसूत्रमहाभारत गायत्रीवेदशब्दैस्तदर्थो ग्राह्यः। वेदैर्वेदार्थैः संबंधो यस्य स वेदसंबंधः। चोऽवधारणे । संबद्ध इति क्वचित्पाठः । स्वोक्ते पदलब्धार्थे स्पष्टं प्रमाणमाह ॥ उक्तं चेति । अयं श्रीमद्भागवताभिधः ग्रंथः ब्रह्मसूत्राणामर्थः व्याख्यानरूपः भारतार्थस्य विष्णुसर्वोत्तमत्वस्य विनिर्णयो यथार्थज्ञानं येन भागवतग्रंथेन स तथा साक्षाद्भगवता नारायणेन शतविच्छेदसंयुतः अष्टादशसहस्रः अष्टादशसहस्रश्लोकयुक्तः ॥ ततश्चायं श्लोकार्थः ॥ अन्वयात् । अनु उपक्रमाद्यानुगुण्येन ईयते ज्ञायते हरिर्येन स अन्वयः वेदादिशास्त्रं तस्मात् ॥ इतरतश्च ॥ विमतं चेतनजन्यं कार्यत्वात् पुत्रादिवदित्याद्यनुमानाच्च प्रमाणात् ॥ यतः । यस्मात् । विष्णोः ॥ अस्य । रमादिजगतः । समासव्यासाभ्यां ॥ जन्मादि । उत्पत्त्याद्यष्टकं भवति । यश्च ॥ स्वराट् । स्वतंत्रः । तेन स्वातंत्र्येण वा ॥ अर्थेषु । तत्तत्कार्योपादानादिकारणपलपरिमाणरेखोपरेखाद्यशेषार्थविषये । अभिज्ञश्च । यः आदिकवये जीवजडापेक्षया प्रथमोत्पन्नाय ज्ञानिने चतुर्मुखाय ॥ ब्रह्म । वेदादि ॥ तेने । उपादिष्टवान् ॥ यं प्रति सूरयो मुह्यंति । यत्प्रसादेन विना य न जानंति ॥ यथा तेजोवारिमृदां विनिमयः त्रिसर्गः। यथैकस्यैव तेजसोऽनेककाष्ठादिप्रविष्टस्य बहुरूपत्व तथाऽनेकजीवजडात्मकप्रपंचप्रविष्टस्यैव विष्णोरनेकरूपत्वं यथा वाय्युपाधिकसूर्यादिप्रतिबिंबानां सूर्यादिभ्य उत्पत्तिस्तथा प्रतिबिंबादीनां जीवानां बिंबरूपहरेरुत्पत्तिः। यथा मृदादिभ्यो घटाद्युत्पत्तिस्तथा प्रकृत्यादिभ्यो जडजगदुत्पत्तिः । एवं त्रयाणा हरिजीवजडानां ॥ सर्गः । सृष्टिः । तथा ॥ धाम्ना । स्वधामभूतप्राणादिस्थन स्वेन रूपेण कृतः ॥ त्रिसर्गः । त्रयाणां स्वप्नजाग्रत्सुषुप्तिपदार्थानां सर्गः । सृष्टिश्च ॥ यत्र । विष्णावेव ॥ मृषा । व्यर्था । अन्यत्र लोके अमृषा न व्यर्था ॥ तं परं । निर्दोषगुणपूर्णं ॥

स्वेन । स्वाधीनेन परानधीनेन ॥ धाम्ना । प्रकाशेन । सदा ॥ निरस्तकुहकं । निरस्तेंद्रजालादिमायं ॥ सत्यं । निर्दुःखनित्यनिरतिशयानंदानुभवरूपं । हरिं सदा वय ॥ धीमहि । स्वरूपत्वेन चिंतयाम इति ॥ १ ॥ ननु शिष्यशिक्षार्थं ग्रंथारंभे कर्तव्यमंगलग्रथनस्य प्रथमश्लोक एव कृतत्वात्किमुत्तरश्लोकेनेत्यतस्तस्य प्रयोजनमाह ॥ अधिकारीति । धर्म इति श्लोकेनेति शेषः । अनेनास्य श्लोकस्य भागवतग्रंथाधिकार्याद्यनुबंधचतुष्टयज्ञापनार्थत्वान्न वैयर्थ्यमित्युक्तं भवति । अत्र श्लोके धर्मः प्रोज्झितकैतवोऽत्र परमो वेद्यं वास्तवमत्र वस्त्विति वाक्येनामुख्यमुख्यविषयो भागवतशास्त्रस्योक्तः । निर्मत्सराणां सतामिति वाक्येनाधिकार्युक्तः । शिवदं तापत्रयोन्मूलनमित्यादिश्लोकशेषेण प्रयोजनमुक्तं । प्रतिपाद्यप्रतिपादकभावादिरूपः संबंधश्च सूचितो ज्ञातव्य॰ । तत्रामुख्य विषयरूपस्य धर्मस्यान्यधर्मसाम्यनिवृत्त्यर्थं प्रोज्झितकैतवः परम इति विशेषणद्वयमुक्तं । तद्विशेषणद्वय धर्मे कथमित्यतस्तद्व्याचष्टे ॥ प्रोज्झितेति । अनेन मोक्षातिरिक्तफलानपेक्षया कृत ईश्वरे समर्पितश्च यो धर्मः सोऽत्रामुख्यविषय इत्युक्तं भवति । अधिकारित्वेनोक्तानां सतां लक्षणं प्रमाणेनैवाह ॥ तितिक्षव इति । भावेन मनसा इत्यादीत्यादिना तृतीयस्कंधस्थकपिलवाक्येन लक्षणमुक्तमिति शेषः । ननु यद्येवं लक्षणवंतः संतस्तर्हि सतामित्येतावताऽलं । निर्मत्सराणामिति विशेषणमयुक्तं । एतल्लक्षणवतां सतां मात्सर्याप्राप्तेस्तन्निषेधायोगात् । यतः प्राप्तस्यैव निषेधो दृष्ट इत्यत सतामपि मात्सर्यप्राप्तिं दर्शयति ॥ सतां चेति । अर्जुनस्यैकलव्ये इव यथा मात्सर्यं तथा सतां चोक्तलक्षणयुक्तसतामपि कुत्रचित्पुरुषे मात्सर्यं दृश्यतेऽतः सत्स्वपि मात्सर्यप्राप्तेः तन्निषेधो युक्त इत्यर्थः । ननु सतां हरिद्वेषिषु मात्सर्यस्य गुणत्वात्तन्निषेधः पुनरुक्त एवेत्यत आह ॥ तद्वर्जनीयमिति । ज्ञानार्थिनेत्यनेनोत्तममात्सर्यस्य तत्त्वज्ञानहानिहेतुत्वमुक्तं । तेन तस्य सर्वथा वर्जनीयत्वं सूचितं भवति । अस्मिन्नर्थे प्रमाणमाह ॥ महासंहितायामिति । आत्मनः स्वस्मादुत्तमेषु उत्तमजीवेषु मात्सर्यं नित्यं परिवर्जयेत् । यत्र यस्मिन् उत्तमजीवे मात्सर्यं कुरुते तस्योत्तमजीवस्य

विषयत्वेन संबंधिनः तत् तस्मात् मात्सर्यात् ततः स मात्सर्यकर्ता विहीयते विज्ञानेनेति शेषः । अस्मिन्नेव श्लोके वास्तवमित्यस्य वस्तुनो भाव इत्यर्थभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ नित्येति । अनेन वस्तूना पारतन्त्र्यादिदोषाभावानामानदादिमहागुणाना चाश्रयत्वेन सवाधि वास्तवमिति तात्पर्यार्थे उक्तो भवति । स्वोक्तार्थे प्रमाणं पठति ॥ नित्यसहिताथामिति । यद्यस्मात्परब्रह्म सर्वदा निरस्ताखिलदोषमानदादिमहागुण तस्माद्वास्तवमितीर्यत इत्यन्वयः । तत्रैव श्लोके वस्तुशब्दस्य पदार्थार्थत्वभ्रातिनिरासाय विवक्षितमर्थमाह ॥ वस्त्विति । नन्विद्र नित्याप्रतिहतत्ववस्तुशब्देन कथ लब्धमिति चेत् । उच्यते । वस निवास इति धातोर्निष्पन्नस्य वस्तुशब्दस्यासति बाधके मुख्यामुख्यन्यायेन स्वातन्त्र्येण सदा सर्वत्रातर्बहिर्व्याप्तस्याप्रतिहतत्व नित्यत्व च नियतमवति वस्तुशब्देनार्थादप्रतिहतत्व नित्यत्व च लब्धमित्याशयवान् प्रमाणनैव तद्दर्शयति ॥ स्कान्दे चेति । यतस्तत् ब्रह्म वसनात् वासनात् सदा सर्व जगति स्वस्य वासनात् सदा सर्व जगतः स्वस्मिन् वासनात् सदा जगतोऽन्तर्बहिर्व्याप्तत्वादिति यावत् । वस्त्विति शब्द्यतेऽतो नित्याप्रतिहत नित्यत्व च तत् अप्रतिहत चेत्यर्थः । अनेन वसति सदा सर्वत्र वासयति सर्व सदा स्वस्मिन्निति वस्त्विति वस्तुशब्दवाच्यार्थ उक्तो भवति । वस्तुशब्दस्य वाच्यार्थातरमाह ॥ वासेनेति । यत इद असुरादिक वासन ब्रह्मणा निवासेन तुन्न व्यथित भवति । अतो ब्रह्म वस्त्विति शब्द्यते इत्यर्थः । अनन वसा स्ववासेन तादयत्यसुरादिकमिति वस्त्विति वस्तुपदव्युत्पत्तिः तथा वसुशब्दोपपदादंतर्णीतण्यर्थात् तुदव्यथन इति धातोः कर्तरि क्विपि पृषोदरादित्वादत्यकारलोप च सति आणादिक डुप्रत्यये वा सति वस्तुशब्दनिष्पत्तिश्चोक्ता भवति । अत्रैव श्लोके किंवा परैरित्येतदनूद्य तत्र परैरिति परशब्दस्यानकार्थत्वाद्विवक्षितार्थो न ज्ञायतेऽतस्तस्य विवक्षितमर्थमाह ॥ किंवेति । आदिपदन प्रवृत्तधर्मो गृह्यत । नन्वर्थकामादीना भागवत कथितत्वादर्थकामादिकथनैः किमिति कथमुच्यत इत्यतस्तदुक्तेरभिप्रायं प्रमाणेनैव दर्शयस्तेनैव प्रमाणेन हृद्यवरुध्यत इति भागवतवाक्य

व्याख्याति ॥ गारुडे चेति । यतोऽत्र भागवते प्रतिपादिताना धर्मार्थकाममोक्षाणामीशस्य हृद्यवरोधाख्यमेकमेव पद पद्यते प्राप्यत इति पद फल । नत्वेदतिरिक्त फल । अत एतत्फलक धर्मादिकमत्र प्रतिपाद्यते पृथगीशस्य मनस्यवस्थितिसाधनधर्मादिभिन्ना ये धर्मादयस्तानहमत्र न वक्ष्य इत्यर्थः । अनेन परैर्मनसीश्वरावस्थितसाधनप्रवृत्तधर्मादिकथनैः किवा प्रयोजन न किमपीति भागवत वाक्याभिप्रायः प्रकटितो भवति । ननु धर्मादेर्मनसीशावरोधफलसाधनत्वेऽपि मोक्षस्य फलरूपस्य तत्साधनत्वाभावः । अतः कथ धर्मार्थकाममोक्षाणामिति मोक्षस्य तत्साधनत्वमुक्तमिति चेन्न । यथा फलरूपस्यापि कर्मक्षयादिरूपमोक्षस्योत्क्रान्त्यादिफलसाधनत्व तथा सर्वानिष्टनिवृत्तिरूपमोक्षस्य स्वरूपभूतभगवद्भक्त्युपासनरूपफलसाधनत्वस्य प्रमाणसिद्धत्वात् । ननु सद्यस्तत्क्षणादीतिशब्दयोरे कार्थत्वादन्यतरवैयर्थ्यमित्यतः क्रमेणैव शब्दद्वयस्य सार्थक्यमाह ॥ सद्यःशब्द इति ॥ न चेति । आपेक्षिकः क्षणाद्यनेकका लाशार्थापेक्षया प्रवृत्त इति हेतोस्तत्र क्षणरूपतद्विशेषार्थज्ञापनाय तत्क्षणादिति शब्दः सार्थकः । तथा सपूर्णाधिकारिणां जीवाना तत्क्षणान्नैवावरुध्यत हरिरिति हेतोस्तत्तद्योग्यतामनुसृत्य प्रयुक्तो द्वित्रिक्षणादिसाधारणार्थकः सद्यःशब्दोऽपि सार्थक इत्यर्थः । नन्वत्र श्लोकेऽधिकारादिकथन किमर्थमित्यता महाफलसाधनतत्स्मरणार्थमित्याह ॥ अधिकारीति । स्वोक्तार्थे प्रमाणमाह ॥ ॥ वामने चेति ॥ २ ॥ उत्तरश्लोकस्यासगतत्वनिरासाय संगतिमाह ॥ ज्ञातेति । भवतीति भावेनेति शषः । प्रशस्य । प्रशंसा कृत्वा । गलितमित्यस्य स्वयमेव गलितमित्यर्थभ्रान्तिनिरासायापेक्षिताध्याहारेणान्वयमाह ॥ भगवतेति । शुकमुखादमृ तद्द्रवसंयुतं । शुकेन द्रवीकृत । एव स्वय तात्पर्यार्थमुक्त्वेदानी प्रमाणेनैव सर्वश्लोकार्थ विवृणाति ॥ उक्तं चेति । धर्मपुष्प इत्या रभ्य महामोक्षफल इत्यतेन तात्पर्यप्रमाणवाक्यन वेदस्य फलपुष्पादियुक्तत्वेन कल्पवृक्षसाम्यमुपपादित भवति ॥ गलित । पति तानि । कृष्णद्वैपायनेनेत्यनेनाचार्यवाक्यस्थभगवच्छब्दो वेदव्यासार्थको ज्ञेयः । भारतादीनीति बहुवचनमाद्यर्थे । तेन सात्विक

पुराणानि ग्राह्याणि । तुरवधारणे । तानीत्यनेन सबध्यते । कृष्णद्वैपायनेन यानि पतितानि तान्येव शुकप्रभृतिभिरार्द्रीकृतानीति पदद्वयोरन्वयः। भारतादीनां गलितफलत्वोक्त्या वेदस्यागलितान्यन्यानि फलानि सतीति सूचित । तदेव स्पष्टयति ॥ कानिचि दिति । भगवान्व्यासो वृक्षस्य वेदवृक्षस्याग्रेऽविषयाणि मुख्यार्थविषयाणि कानिचित्फलानि ब्रह्मसूत्रादीनि तु विशेषण दर्शया मासेत्यन्वयः । एतेषा गलितफलाना तेषामगलितफलाना,। वाशब्दः समुच्चये ॥आमोक्षात् । मोक्ष मर्यादीकृत्य पिबतेत्यन्वयः । तत्पानेन किं फलमित्यत आह ॥ महतीति । मे पश्यता ज्ञानिनः पुरुषस्य मम महती प्रीतिः उत्तमप्रसाद इत्यर्थः ॥ ३ ॥ नैमिषे निमिषे क्षेत्रे इत्याद्युत्तरग्रंथस्य प्रकृतासगतत्वभ्रांतिनिरासाय सगतिमाह ॥ प्रकारातरेणेति । प्रकारातरेण निगमकल्पतरो रिति श्लोकोक्तभागवतादिध्यानरूपप्रकारादन्येन प्रकारेण वाधंतरोक्तप्रकारेण पुरुषार्थः स्यात्किमनेनेति शकानिवृत्त्यर्थमाख्यायि कोच्यते नैमिष इत्याद्युत्तरग्रंथेनेति शेषः । अत्र प्रमाणमाह ॥ पाद्मे चेति । सर्ववेदेषु तथा सर्वशः सर्वेषु तत्फलरूपभागवतादिषु च महतां तत्र तु विशेषेण तात्पर्यं द्योतयंत्य आख्यायिका प्रदर्श्यते तथा प्रोक्तमर्थं भागवतादिपानरूपमर्थमृत पुरुषार्थस्यालाभ इति द्योतनाय च श्रद्धावृद्ध्यर्थमेव च प्रदर्श्यत इत्यर्थः । तन्नः शंसितुमर्हसीत्युत्तरत्र शौनकादिभिस्तत्त्वोपदेश कृविति सूत प्रत्युच्यत । तत्र मदुपदेशो बादरायणमतविरुद्धत्वान्न महाफलसाधनमिति सूतहृदयस्थशकां परिहर्तुमुपोद्घातन्यायेन यानि वेदविदां श्रेष्ठ इति श्लोकः प्रवृत्तः । तत्र बादरायणो यानि वेद प्रमेयाणि वेदान्ये च मुनयो यानि विदुस्तत्सर्वं त्व वेत्थेति शौनकादिभिः सूतज्ञा नस्य सर्वप्रकारेण वेदव्यासमुनिज्ञानसाम्यमुच्यते । तत्तु प्रमाणबाधितमतस्तात्पर्यार्थमाह ॥ यानीति । अपिशब्दोऽवधारणे । भग वज्ज्ञातानीत्यनेन संबध्यते। यानि प्रमेयाणि त्व वेत्थ तान्यन्यैः ऋषिभिर्ज्ञायते तानि सर्वाणि भगवज्ज्ञातान्येव न तु तदज्ञातानीत्यर्थः। अनेन ऋष्यादिज्ञातं यावत्तस्य सर्वस्य भगवज्ज्ञातत्वमुक्तं तेनार्थाद्भगवज्ज्ञातस्य सर्वस्य ऋष्याद्यज्ञातत्व चोक्त । तदुभय प्रमाणेनैव

स्पष्टयति ॥ उक्तं चेति । स वेदव्यासस्तद्बुद्धं वेदव्यासज्ञातं यस्मादन्यगोचरमन्येषां ब्रह्मादीनां गोचर गोचरो ज्ञानविषयो न भवति । तस्माद्ब्रह्माद्यैस्तन्न बुद्ध्यत इति पूर्वेणान्वयः । हे सूत त्व यावत्सर्वं मुनयो विदुस्तत्सर्वं भगवान् बादरायणो वेदेति भागवतवाक्यं योजितं भवति ॥ ४ ॥ आपन्न इनि श्लोकार्धे विवश इत्यस्य परवशमोहित इत्यर्थभ्रातिमभ्याहृतहेत्वन्वयेन परिहरति ॥ विवश इति । बव्हभ्यासरूप हेतु प्रमाणेनैव स्पष्टयस्तेनैव प्रमाणेन विवशो विमुच्यते इति भागवतवाक्य व्याचष्ट ॥ शारीरादिति । अभ्यासादिति शेषः । भवेदिति सर्वत्र सबध्यते । मानसादभ्यासाद्विवश इति शेषः । वि॰ पक्षिपरमात्मनोरित्यभिधानात् विः परमात्मा तस्य वशे भवेत् विवशात् भावप्रधानो निर्देशः । परमात्मवशत्वात् तदनुसधानादिति यावत् ॥ मुच्येत । मुच्येतेत्यर्थः ॥ १४ ॥ लीलेति श्लोकार्धे आत्ममायया आत्माश्रिताज्ञानेन लीलाविदधदीश्वरस्येतीश्वरलीलाया आविद्यकत्वेन मिथ्यात्वमुच्यते इत्यन्यथाप्रतीतिनिरासायात्ममायापदमनूद्यसम्यग्व्याचष्टे ॥ आत्ममायेति । स्वोक्तार्थे प्रमाणमाह ॥महामायेति नन्वनेन प्रमाणेन मायापदस्येच्छार्थत्वमेवागत न तु स्वरूपभूतेच्छार्थत्व । तवेच्छेति भिन्नेच्छाया एवात्र प्रतिपादितत्वादित्यत इच्छाया हरिस्वरूपत्वे प्रमाण वदस्तेनैव प्रमाणेनेच्छादीना शक्तिशब्दवाच्यत्व चाह ॥ विष्णुसंहिताया चेति ॥ १८ ॥ इति श्रीभागवततात्पर्यटिप्पण्या प्रथमोध्यायः ॥ १-१ ॥ छ ॥ छ ॥

॥ हरिः ॐ ॥ य प्रव्रजतमिति श्लोकार्धेऽनुपेतमित्यस्य केनापि संबधरहितमित्यर्थभ्रांतिमध्याहृतेनान्वय प्रदर्श्य परिहरति ॥ अनुपेतमिति । शुकस्य दहादियुक्तत्वस्य प्रत्यक्षादिप्रमाणसिद्धत्वात्तद्राहित्य तत्प्रमाणबाधित । तद्वक्ष्यति ॥ अनभीति । अत्रैव श्लोके विरहकातर इत्यनेन वेदव्यासस्य शुकवियोगेन कातरत्वमुच्यते । तत्साक्षान्नारायणे व्यासे प्रमाणबाधितमित्यतस्तत्पद सम्यग्व्याचष्टे ॥ अकातर इति ॥ अदर्शयत् । आत्मानामिति शेषः । अनेन विरहकातरो विरहेण कातरो धैर्यरहित

इव दर्शयन्निति तत्पदार्थ उक्ता भवति । ननु वदितिशब्दाध्याहारेण कुतो व्याख्यायते । कातर एव किं न स्यादित्यता व्यासे कातरत्वस्य प्रमाणबाधितत्वमाह ॥ उक्तं चेति । तूष्णः अलबुद्धिमान् । पुत्रफल पुत्रात्फलं । यज्जातं यस्माद्धरजात । यदधीन श्रियः यस्य हररधीना च सा श्रीः । तस्या हारिः स्वरूपा व्यासः । यत् पुत्रार्थ । रुद्रस्य तपस्तपे । यच्च वियाग पुत्रवियोग । कातर्य दर्शयामास । तत् । लौकिकं लोकविडबनमेव न तु वास्तवमित्यर्थः । कातर्य कुतो न वास्तवमित्यत आह ॥ कुतः कातरतेति । नित्यानन्दामहोदधेरिति हेतुकथनेनात्र कारणशब्दो दुःख्यर्थक इति सूचित । तपसोऽवास्तवत्वे हेतू रुद्रस्य चेश्वर इति न केवल हरिः कातर्यादिप्रदर्शनरूपकर्मैव लोकविडबनार्थ करोति । किंतु अन्यान्यपि गुरुकुलवासादीनि लोकविडबनार्थं करोतीति प्रमाणेनैव दर्शयति ॥ ईशन्नपीति । सर्वस्य जगत ईशन्नित्यन्वयः । लोकस्य विडबनार्थमिति शेषः ॥ कर्माणि । गुरुकुलवासादीनि । कीनाशः कर्षके क्षुद्रे कृतांते पासुघातिनारिति विश्वप्रकाशाभिधानात् ॥ कीनाश इव । क्षुद्र इव नीच इव । दुर्बलः च कुरुत इत्यन्वयः । हरेर्लोकविडबनचेष्टाऽनेकप्रकारेति प्रमाणन दर्शयति ॥ देवत्व इति ॥ दवत्वे । देवकुलावतारे ॥ मानुषत्वे । मानुषकुलावतारे ॥ मानुषी । मानुषचेष्टासदृशी चेष्टा । हरिणा दर्श्यत इति शेष । अत्रैव श्लोक शुकस्य सर्वभूत हृदयमित्यनेन सर्वभूतहृदयैक्यमुच्यते । तत्तु प्रमाणबाधितमित्यता हेतूक्त्या घटयति ॥ सर्वभूतेति ॥ अहंकारात्मकत्वात् । अहकाराभिमानी अहंकारात्मकस्तस्य भावस्तत्व तस्मात् । ननु रुद्रादेरहकाराभिमानित्वेऽपि शुकस्य तदभिमानित्व कथमित्यतस्तत्प्रमाणनैवोपपादयति ॥ अहंकारात्मकेति । द्वैपायनात्मजः शुकोऽहंकारात्मकोऽहकारतत्त्वस्याभिमानी रुद्रो रुद्रस्वरूप इत्यर्थः ॥ २ ॥ यः स्वानुभावमिति श्लोकार्थे यः शुकः स्वानुभाव स्वस्य सामर्थ्य आहेति स्वानुभवपदन शुकसामर्थ्यमुच्यत इति भाति । तदयुक्तं । तथात्वे तस्याखिलश्रुतिसारत्वाभावेन तदुक्तिरयुक्तास्यादित्यतस्तदनूद्य सम्यग्व्याचष्टे ॥ स्वानुभावमिति ।

अनेन स्वः स्वतंत्रः अनुभावः सामर्थ्यं यस्येति तत्पदार्थं उक्तो भवति ॥ ३ ॥ वदंतीति श्लोकेऽद्वयमित्यनेन द्वितीय शून्यमिति जगन्मिथ्यात्वमुच्यत इति भ्रांतिनिरासाय तदनूद्य सम्यग्व्याख्याय तत्र प्रमाणत्वेन श्रुतिस्मृती आह ॥ अद्वयमिति ॥ एनं । पुरुष हरि ॥ अभिः अभिमुखः । एतत्सदृश इति यावत् । एन ॥ अति । अतिक्रम्य । एतदधिक इति यावत् । यतःकारणात् तस्मात्पुरुषात् । तस्मात्कारणात् । अत्रैव श्लोके तत्त्वशब्दस्यानेकार्थत्वाद्विवक्षितार्थः क इति जिज्ञासाया महासंहितायामेवास्यार्थ उक्त इति प्रतिज्ञाय तद्वाक्य पठति ॥ तत्त्वशब्दार्थ इति । यद्वस्त्विदानीमीदृश तादृशमेवातीतानागतकालेऽप्यस्ति ॥ कुताश्चित् । कस्मादपि कारणात् । अन्यथात्व ॥ नेयात् । न प्राप्नुयात् । तद्वस्तु ॥ तत्त्वतः । तसे॰ सार्वविभक्तित्वात् । तत्त्वाना ॥ तत्त्व । मुख्यं । तत्त्वविदुरित्यर्थः ॥ ११ ॥ सत्तामात्रमिति श्लोके सत्तामात्रमित्यस्य वैशेषिकाद्यंगीकृतपरजातिरूपसत्ता स्वरूपार्थत्वभ्रांतिनिरासाय तदनूद्य सम्यग्व्याख्याय तत्र प्रमाणमाह ॥ सत्तामात्रमिति । अनेन सच्छब्द उत्तम ब्रूयादानदतीति वै वेदेतिति प्रमाणात् सती उत्तमा च सा ता आनदश्च सत्ता । सत्तामात्रमिति । अनुभवति मापयति अनुभावयतीति सत्तामात्र- मिति सत्तामात्रपदार्थं उक्तो भवति । तथा द्वितीयातसत्ताशब्दोपपदात् अंतर्णीतण्यर्थात् मा मान इति धातोः कर्तरि क्तप्रत्यये सत्तामात्रमिति शब्दसिद्धिरिति चोक्तं भवति । अत्रैव श्लोके पूर्वश्लोकोक्तज्ञानरूपस्य हरेर्घटादिज्ञानसाम्यनिरासाय सदसत्त्वा विशेषणमित्युक्तं । तेन स्पष्ट घटादिविषयज्ञानसाम्यनिरासो न प्रतीयतेऽतः साम्यानिरासो यथा भवति तथा तद्व्याचष्ट ॥ न कार्येति । कार्यकारणविषयविशेषितमित्यस्यैव तात्पर्यार्थो वैषयिकमिति । विषयाधीनमित्यर्थः । अनेन विशिष्यते येन सत्ता सत्ता च तद्विशेषणं विशेषापादक न विशेषण अविशेषण यस्य ज्ञानस्येत्यध्याहारेण भागवतवाक्ययोजना सूचितो भवति । ननु तज्ज्ञान वैषयिक न चेत्तर्हि कीदृशमित्यत आह ॥ केवलमिति ॥ केवलं । सर्वोत्तमं स्वतंत्रमित्यर्थः । ननु यज्ज्ञानरूपब्रह्मणः

सदसदविशेषितत्वमुक्तं । तदयुक्तं । यः सर्वज्ञः सर्वविदित्यादौ सदसदात्मकसर्वविशेषितत्वोक्तिरित्याशंकापरिहारायाभाभ्यां भाष्यत इति भागवतवाक्य प्रवृत्त । तत्र तच्छकापरिहारः स्पष्ट न प्रतीयत । अतोऽपेक्षिताभ्याहारण तत्सम्यग्व्याचष्टे ॥ स्रष्टृत्वादिभिरिति । आदिपदेन सहर्तृत्वादिकं ग्राह्य । चोऽवधारणे । स्रष्टृत्वादिभिरित्यनन सबन्यत । ज्ञानरूप ब्रह्म । स्रष्टृत्वादिभिरेव । कार्यकारणस्रष्टृत्वादिभिरेव निमित्तैः । कार्यकारणविशेषित यः सर्वज्ञ इत्यादौ भाष्यते । न तु वृत्तिरूपज्ञानवत्कार्यकारणसृज्यत्वादिनिमित्तेनेत्यर्थः । अनेन यथा चक्षुरादींद्रियजन्यवृत्तिरूपं ज्ञान घटादिजन्यत्वनिमित्तन घटादिज्ञानमित्युच्यत न तथा ज्ञानरूप ब्रह्म सदसदात्मकसर्वजन्यत्वादिनिमित्तेन यः सर्वज्ञ इत्यादौ सर्वविशेषितमुच्यते । किंतु सदसदात्मकसर्वस्रष्टृत्वादिभिर्निमित्तैरेव यः सर्वज्ञ इत्यादौ सर्वशब्दवाच्याभ्या ॥ उभाभ्यां । कार्यकारणरूपविषयाभ्या । विशेषितं भाष्यतेऽता विरोधाभावात् सदसद्वाविशेषणमित्यत्र यज्जन्यत्वादिनिमित्तकसदसद्विशेषितत्वराहित्यमुक्त तद्युक्तमेवेति भागवतवाक्य व्याख्यात भवति । स्वोक्तार्थे प्रमाणमाह ॥ तत्रभागवते चेति । अत्रैव श्लोके यत्किंचिदित्यत्र किमपि न भवतीत्यप्रयोजकत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तदनूद्य सम्यग्व्याचष्टे ॥ यत्किंचिदिति ॥ अलोकसिद्धं । लौकिकप्रत्यक्षाद्यसिद्धमित्यर्थः ॥ १२ ॥ ननु भगवान्केवलति पूर्वग्रथ भगवदाख्यं तत्त्वमुक्तं । अतस्तद्ध्यानमेव वक्तव्यं । तद्विहाय तच्छ्रद्दधाना इत्युत्तर श्लोके य आत्मनि देहे आत्मान जीवं पश्यति इति प्रकृतासंगत जीवज्ञानं कथमुच्यत इत्याशका तच्छब्दार्थप्रदर्शनपूर्वक कर्तृकर्मक्रियान्वयप्रदर्शनेन परिहरति ॥ यस्मादिति ॥ तमेव । परमात्मानमेव । अनेनात्मशब्दः परमात्मवाची । अतो नासगतिरित्युक्त भवति ॥ १३ ॥ भिद्यते हृदय इति श्लोके ईश्वरे ईश्वररूपे आत्मनि जीवे दृष्टे सति हृदयग्रंथिर्भिद्यत एवेति जीवेश्वरैक्यज्ञानेन हृदयग्रथिभेद उच्यत इति केचिद्व्याचक्षत । तद्व्याख्यानं निराकरोति ॥ आत्मनीति । इतीत्यनेन कुतो नोच्यत इति चेन्न । *जीवेश्वरभेदज्ञानस्य हृदयग्रथिभेदकत्वस्य

प्रतिपादकसमाख्याश्रुतिविरोधादिति भावेन भेदप्रतिपादक समाख्याश्रुतिस्थातिमपदं व्याचष्टे ॥ परेषामिति । अनेन परा ब्रह्मादयोऽवरा निचा यस्मात्स परावर इति तत्पद व्याख्यात भवति । न केवल समाख्याश्रुतिविरुद्ध जीवेश्वरैक्यज्ञानस्य हृदय ग्रन्थिभेदकत्व किंतूत्तरग्रन्थविरुद्ध चेति भावेन तद्वाक्यमुदाहरति ॥ भेददृष्ट्येति । अस्य वाक्यस्य सगुण ब्रह्मसगत्यप्राप्त्यत्युत्तर वाक्यान्वयेन भेदज्ञानस्य हृदयग्रन्थिभेदनद्वारा भगवत्प्राप्तिहेतुत्वप्रतिपादकत्व ज्ञातव्य । ननु सगुणमिति विशेषणादमुख्यसगुण ब्रह्मप्राप्तिरेव भेदज्ञानेनोक्ता न तु निर्गुणमुख्यब्रह्मत्वप्राप्तिरतो मुख्यब्रह्मप्राप्तिर्जीवेश्वरैक्यज्ञानेनैवेति युक्त । जीवेश्वरैक्यज्ञानस्य हृदयग्रन्थिभेदकत्वमित्यतो नेदममुख्य ब्रह्म किंतु पूर्वश्लोक प्रकृतमुख्यब्रह्मैवात्र ब्रह्मपदेनान्यत इति भावेन ततः पूर्व वाक्यमुदाहरति ॥ ब्रह्म प्रधानमिति । अनेन भागवतस्थसगुणपद ज्ञानानन्दादिगुणपूर्णत्वार्थक न तु सत्त्वादिगुणप्रति बद्धत्वार्थकमिति सूचित भवति । किंच हृदयग्रन्थिः ससार एव नान्यः । स च विद्ययैव निवर्तत इति सुप्रसिद्ध । विद्या तु भेदज्ञानमेवातो भेदज्ञानमेव हृदयग्रन्थिभेदक नत्वभेदज्ञानमित्याशयवान्भेदज्ञानस्य विद्यार्थत्वे प्रमाणमाह ॥ विद्येति । भिदाया जीवेश्वरादिभेदस्य बोधः ज्ञान आत्मनि जीव विद्या नामेत्यर्थः । एव भेदज्ञानस्यैव हृदयग्रन्थिभेदकत्व प्रमाणान्युक्त्वेदानी जीवेश्वरभेदस्याप्रामाणिकत्वशकापरिहाराय तत्र प्रमाणान्याह ॥ यत्र हीत्यादिना । यत्र यदा । जीवेश्वरयोर्द्वैतमिव द्वैतमेव भवति । तत् तदा । इतर जीवः । इतर परमेश्वरं । पश्यतीत्यर्थः । अन्यं । जीवादिप्रपचादिति शेषः । छायातपाविति वाक्यं जीवेश्वरयोरज्ञानाश्रयत्वानाश्रयत्वाभ्या भेदप्रतिपादकं शाखातरस्थ ज्ञेय । यद्वा । ऋत पिबन्ताविति काठकवाक्यमेवेद । तत्र हरेर्विद्वदविदुषाः सुखदुःखहेतु वमुच्यत । तेन भेदसिद्धिः । एको बहूनामिति वाक्येऽपि एकत्वबहुत्वाभ्या कामप्रदत्वहरि दत्तकामवत्त्वाभ्या च जीवेश्वरभेदसिद्धिः । अनश्नन्नन्य इत्याद्युदाहृतश्रुतिषु विरुद्धधर्माधिकरणत्वमेव प्रतीयते न तु साक्षाद्भेदः ।

न च विरुद्धधर्माधिकरणत्वेनैव भेदसिद्धिः । तद्धर्माणामसत्त्वेन सुतरां तदधिकरणस्यासत्त्वादित्यतस्तद्धर्मसत्यत्वे प्रमाणान्याह ॥ सत्यः स इत्यादिना । यतः यस्य हरेः । सः अनश्नन्नन्य इत्यादिश्रुत्याद्युक्ताऽनश्नत्वादिरूपो महिमा । सत्यः । अतस्तं महिमानं । विप्रराज्येषु यज्ञेषु । श वः सुखमुद्दिश्य । गृणन्नित्यर्थः । गृणतः स्तुवतः । देवस्य प्रधान इन्द्रस्य । राति मित्रं । एवं विष्णुं । अनु अनुसृत्य । विश्वे सर्वे देवादयः । मदति हर्षयुक्ता भवतीति । यत् ईश्वरजीवयोरुपजीव्यत्वोपजीवकत्वरूपं लक्षणं । तत्सत्यमेवेत्यर्थः । यत्र नाके मोक्षे । पूर्वे पूर्वं । मुक्ताः साध्या देवाश्च । सन्तीति निवृत्ताज्ञाने मोक्षेऽपि भेदस्य सत्यत्वोक्तेः सत्यत्वसिद्धिः । दमायन्नित्यादीत्यादिपदेन अन्यमन्यमतिनेनीयमान इत्यादेः संग्रहः । वीरः आरब्धान्तगामी । इंद्रः परमैश्वर्यरूपो हरिः । उग्रं सर्वान् । क्रूरान् दैत्यादीन् । दमायन् दमयन् अंधे तमसि पातयन् । श्रण्व श्रूयते । इत्यर्थः । अत्र जीवानां पृथक् पृथक् मुक्तितमोनित्यसंसारप्राप्तियोग्यस्वरूपत्वोक्त्या भेदस्य तत्तज्जीवस्वरूपत्वमुक्तं । तेन जीवस्वरूपवत्तद्भेदस्यापि सत्यत्वसिद्धिः । ननु भवेदेतत् भेदसत्यत्वं यदि मोक्षे भेदःस्यात् । न चैवं । यत्रत्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिश्रुतौ आत्माभेदस्योक्तत्वेन तद्विरोधादित्याशंक्य प्रमाणेनैव परिहरति ॥ मग्नस्येति । अयं भावः । नानया श्रुत्या मोक्षे आत्माभेदः प्रतिपाद्यते किंतु । यत्र यदि । अस्य मुक्तस्य । सर्वं करणादिकं । आत्मैव परमात्मैव । अभूत् परमात्मातिरिक्तं स्वीयं न स्यात् । तर्हि केन करणेन । कं कर्मकारकं । मुक्तः पश्येत् । केनापि कमपि न पश्येत् । पश्यति च मुक्तः तत्तत्करणेन तं तं पदार्थं । अतो मुक्तस्य सर्वमात्मनेति मोक्षे ईश्वरातिरिक्तकरणादेः सत्यत्वमेव प्रतिपाद्यते । अन्यथा कस्यापि वस्तुनो ज्ञानाभावेन परेऽज्ञाने मग्नस्य मुक्तस्य दुःखतरं किं न भवेत् सर्वमप्यतिशयितदुःखं भवेत् । ततश्च मोक्षस्यापुरुषार्थत्वं भवेत् । अतो नात्म्यैक्यमनयोच्यते । किंतु करणादेः सत्यत्वमेवातो भेदसत्यत्वं सिद्धं । एवं यत्र हि द्वैतमिव भवतीत्यादिश्रुत्या जीवेश्वरभेदं प्रसाध्य यदानीं स्मृतिब्रह्म

सूत्रैश्च साधयति ॥ बहव इति । अत्र पुरुषशब्दश्चेतनपर्यायः । पुरुषाः चेतना' बहव उतैक एवेति जनमेजयेन पृष्टेन वैशंपायनेन एतत् एव पुरुष एकं नेच्छतीति चेतनैक्यं निषिद्ध्य बहूनां पुरुषाणां हीति जीवभेदस्योक्तत्वाद्भेदसिद्धिरित्यर्थः। अभिमानेन हरौ अभिव्याप्यमानेन ज्ञानेन माहात्म्यस्नेहपूर्वकज्ञानेनेति यावत् । जातया भेददृष्ट्या जीवभिन्नत्वादिप्रकारकेश्वरोपासनया पश्यता हर्यपरोक्षज्ञानिनः सतः तत्पदं यातीत्यर्थः । अत्र फलोक्त्या भेदतात्पर्यसिद्धि' ॥ अनुपपत्तेस्तु । एकस्य सर्वशरीरस्थत्वानुपपत्तिरेव ॥ शारीरो । जीवः । न सर्वगत इत्यर्थः । ते ये शतं प्रजापतेरानंदाः स एको ब्रह्मण आनंद इत्यादिभेदव्यपदेशादित्यर्थः । शारीरो जीवोऽपि । नांतर्यामी । य आत्मनि तिष्ठन्नात्मनोऽतरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमंतरो यमयति । यो विज्ञाने तिष्ठन्विज्ञानादंतर इत्युभयेऽपि शाखिन एनं जीवं ईश्वराद्भेदेनाधीयत इत्यर्थः । भिन्नाऽचिंत्यः परमो जीवसंघात्पूर्णः । परो जीवसंघो ह्यपूर्ण इत्यादिसोपपत्तिककौशिकश्रुता भिन्नत्वेन जीवस्यापदेशाज्जीवो हरेर्भिन्न इत्यर्थः' । आदिपदेन भेदव्यपदेशाच्चान्य इत्यादिब्रह्मसूत्रसंग्रहः । यत्र पूर्वे साध्याः सति देवा इत्यादिश्रुतौ भेदस्य मोक्षे सत्त्वप्रतिपादनेनार्थात्सत्यत्वमुक्तं । इदानीं तदेव भेदसत्यत्वं स्पष्टं श्रुत्यंतरे चोक्तमित्याह ॥ सत्यत्वं चेति । न केवलं यत्र पूर्वे साध्याः सतीत्यादिश्रुतावर्थाद्भेदसत्यत्वमुक्तं । किंतु भाल्लवेयश्रुतौ च स्पष्टं भेदसत्यत्वमुक्तं इति चशब्दार्थः । तां श्रुतिमुदाहरति ॥ स्थाणुरिति । अत्र सप्रजापतिमित्यस्यावृत्तिः कल्प्या । तत्रैकत्र सप्रजापतिमिति पदद्वयमपरत्र प्रजापतिना विष्णुना सहितमित्येकमेव पदं ज्ञातव्यं । स्थाणू रुद्र उमापतिरित्यभिधानात् । स' स्थाणुरुमापतिरिंद्रादिभिः सहितः सन् । सप्रजापतिं विष्णुना सहितं । प्रजापतिं चतुर्मुखं । प्रति । उच्चक्राम जगाम । गत्वा त्वं कोऽसि वयं केऽस्म' स कोऽसीत्युवाच च त्वदादयो वयं । सर्वे किमेकप्रकारा उतानेकप्रकारा इत्यपृच्छत् । एवं स्थाणुना पृष्टः प्रजापतिस्तं प्रत्युवाच । हशब्दः स्वोक्तार्थस्य प्रामाणिकत्वं द्योतयति । किमुवाचे

त्यत आह ॥ योऽस्मीति । यःकारः शुसि पवने यम पातरि दातरि त्यागावयवया' शिष्य विनय कल्पपादपत्यऋाक्षररत्नमाला भिधानात् । अत्र यःशब्दः पवनशिष्यदातृकल्पवृक्षार्थकः । अहं यो हरिशिष्यः पूर्वपवनरूपा ब्रह्मास्मि । यूय सर्वे मच्छिष्याः स्थः । स विष्णुर्यो मदादीनां सर्वेषा कल्पवृक्षः । कल्पवृक्षो यथा सर्वाभीष्टप्रदस्तथा मोक्षादिसर्वपुरुषार्थदाताऽस्तीति प्रजापतिः स्थाणु प्रत्युवाच । अथ प्रजापत्युक्त्यनतर । स्थाणुः सत्य भिदां सत्य भिदा सत्यं भिदेति मवारवण्यो मेवारुवण्या मेवारुवण्य इति प्रजापति । उप समीपे । आक्राशन् शब्द कृतवान् । उच्चैरवदिति यावत् । भिदा ब्रह्मादिसर्वचतनाना मिथा हरेश्च भेद' । सत्य सत्यः । हरिश्च । आरुभिः दोषिभिः । ॰वन्यः । वन सभक्ताविति धाताः । सभजनीया । मेव नेव भवतीत्यर्थः । एवं साक्षाद्भेदस्य सत्यत्व श्रुत्योक्त्वेदानी भेदकसत्यत्वेन भेदसत्यत्वप्रतिपादक पूर्वोक्त श्रुतिद्वयमनुवदति ॥ सत्यमेनमिति । न वत्राक्तभेदस्य सत्यत्वं व्यावहारिकमेव न तु पारमार्थिक इति चेन्न । विकल्पासहत्वात् । तथाहि । एव वद प्रष्टव्यः । भेदस्य भ्रांतिकल्पितत्व मगीक्रियते । उत नेति । द्वितीय ब्रह्मवत्पारमार्थिक सत्यत्व स्यात् । आद्य सत्यत्वेन भन्ज्ञानस्यष्टसाधनत्व भ्रांतिकल्पितत्वेन तज्ज्ञानस्यानिष्टसाधनत्व च न स्यात् । अस्ति च तदुभय । अतो न भेदस्य भ्रांतिकल्पितत्वमित्याशयवास्तदुभय प्रमाणनव दर्शयस्तेनैव प्रमाणेनाभेदवाक्याना तात्पर्यार्थप्रदर्शनपूर्वक भेदमिथ्याभदसत्यत्वज्ञानस्य कारण च दर्शयति ॥ महासाहिनाया मिति । भ्रांतिं भ्रांतिकल्पित । केचिदाहुरपडिता इत्यत्र पूर्ववाक्यस्थयत्तच्छब्दावनुवर्तेते पर' परमात्मा । अनीदृग' पराधीन त्वादिधर्मयुक्तजीवसदृशो न भवति । अदुष्कृतं दुष्कृतविरुद्ध । सुकृत सत्कर्म । किं कृत । प्रत्युत दुष्कमव कृतमित्यर्थः । अतर्याम्यैक्यवाचीनीति तात्पर्यश्लोकार्धेन तथा अस्य स्मि त्वमह स्वात्मति सपूर्णश्लोकेन चकवाक्याना तात्पर्यार्थ॰ कथ्यत । तानि दृष्ट्वेति श्लोकार्धेन अतो भ्रमंति वचनैरिति श्लोकार्धेन चापडिताना जीवेश्वरभेदाभेदयोर्मिथ्यात्वसत्यत्वविषयभ्रम प्रत्यभद

वाक्यातात्पर्यार्थज्ञान दौरात्म्यादि च कारणमुक्त वदितव्य । मोहतत्परैः असुरमोहन एव तात्पर्ययुक्तैर्वचनैरित्यन्वयः । पुरुषा विष्णुर्यतो नियामन् सर्वनियामकोऽतोऽतर्यामीत्युच्यते । यतश्चातर्यामी अतः सर्वातर्यामित्वादस्य स्मित्वमह स्वात्मेत्यभिदागोचर. अभेदप्रतिपादकवाक्यविषयः। यतश्चाभिदा गोचरो हरिरतस्तदुपरि ज्ञानान्मोहतत्परवचनैरसुरा भ्रमतीति योजना । अभिद्या गाचर इति क्वचित्पाठः । ननु मोहतत्परैरित्यनेन यद्वेदवाक्यानामसुरमोहकत्वमुक्त तत्किमर्थमित्यता विष्ण्वादिमीत्यर्थमसुराणा तम. प्राप्त्यर्थ चेति भावेनाह ॥ तन्मोहने इति । महाधकारषु तमस्विति शेषः ॥ २२ ॥ सत्त्वरज इति श्लोके पर. पुरुषा विष्णुरस्य जगतः स्थित्याद्यर्थ हरिविरिचहरेति सज्ञा धत्त इति एकस्यैव देवदत्तस्य पाचकपाठकादिनामवत्त्वमिव एकस्यैव विष्णु रूपस्य हर्यादिनामत्रयवत्त्वमुच्यते । न तु तत्तन्नामरूपत्रयमुच्यत इत्य यथाप्रतीतिनिरासाय तात्पर्यार्थमाह ॥ विष्णोरेवेति । एव शब्दस्य त्रिरूपाणामित्यध्याहृतेनान्वय' । विष्णोस्त्रिरूपाणामेव । त्रिसज्ञाः हरिविरिचहरेति तिस्रो नत्वेकस्यैव रूपस्यत्यर्थ । अनेनैकरूपस्यैव त्रिसंज्ञा इत्यन्यथाप्रतीतिनिरस्ता भवति । स्वोक्तार्थे प्रमाणमाह ॥ वामने चेति । द्वद्वांते श्रूयमाणरूपशब्दः प्रत्येकमभिसबध्यते । ब्रह्मेति रूप च विष्ण्विति रूप च ईशेति रूप च ब्रह्मविष्ण्वीशरूपाणि । विष्णा' सतीति शषः । एतदेव स्पष्टयति ॥ ब्रह्मणीति । अनेन श्रुत्यादौ यद्विरिचशिवनामकयोर्जीवयोरुत्पत्तिसंहारकर्तृत्वमुच्यत तद्विरिचशिवातर्गततत्तन्नामक विष्णुरूपयोरेवेति श्रुत्यादेस्तात्पर्याथ उक्तो भवति ॥ नैर्युक्त इति । हरेः सत्त्वादित्रिगुणाश्रयत्वाक्त्या सत्त्वादित्रिगुणाना साम्यप्राप्तौ सत्या तन्निरासाय श्रेयासि तत्रेत्यादिवाक्य प्रवृत्त । तत्र सत्त्वानामित्यस्य हराावित्यर्थभ्रातिनिरासाय तदर्थ वदस्ता त्पर्यार्थमाह ॥ त्रयोपीति । अपि यद्यपि । अनेन सत्त्वगुणस्य रजस्तमोगुणाभ्यामाधिक्यमुक्त भवति । रजोगुणस्य तमागुणा दाधिक्य गीतादिप्रमाणाज्ज्ञातव्य ॥ २४ ॥ इदमेवाधिक्यं दृष्टांतेन वक्तु पार्थिवाद्दारुण इति भागवतश्लोकः प्रवृत्त' । तत्र

दारुणः काष्टाद्धूम इत्युक्त्या धूमस्य काष्टजातत्वमेव लोकप्रसिद्ध्या प्रतीयते । न तूत्तमत्वमित्यत उत्तमत्वे हेतुप्रदर्शनपूर्वकं धूम इत्यतःपरं शेषं पूरयति ॥ मेघेति । मेघस्य मेघाभिमानिदेवस्य । रूपं प्रतिमा । मेघरूप तस्य भावस्तत्व तस्मादित्यर्थः । अनेन भागवतवाक्ये उत्तमशब्दस्तस्मादग्निरित्याद्युत्तरवाक्येऽपि संबंधनीय इति सूचितं भवति ॥ २५ ॥ ननु सत्त्वं यद्ब्रह्मदर्शनमिति सत्त्वगुणस्य यद्ब्रह्मदर्शनसाधनत्वमुच्यते । तदयुक्तं । श्रवणं मनन चैव ध्यानं भक्तिस्तथैव च साधन ज्ञानसपत्तौ प्रधान नान्यदिष्यत इत्यादिप्रमाणविरुद्धत्वात् । अत्र हि भक्त्यादेरेव ब्रह्मदर्शनसाधनत्वोक्तेरित्यतो विरोध परिहरति ॥ सात्विकानामिति । भक्तिपद श्रवणाद्युपलक्षक । सर्वे शब्दाः सावधारणा इति न्यायेन सात्विकानामेव वासुदेव भक्तिरुत्पद्यत इत्यर्थः । अनेन । सत्त्व सत्त्वगुणः । यतः यस्मात्कारणात् । भक्तिश्रवणादिद्वारा ब्रह्मदर्शनसाधन । तस्मात्कारणात् तमोरजोभ्यामुत्तम इति भागवत वाक्यं व्याख्यात ॥ २७ ॥ रजस्तम इति श्लोके भूतप्रजेशादीनित्यस्य भूतानि च प्रजेशाश्चादयो येषामित्यर्थभ्रांतिनिरासा यार्थमाह ॥ भूतेशेति । अनेन भूतानि च प्रजाश्च भूतप्रजास्तासामीशाः भूतप्रजेशाः पितरश्च त एवादयो येषा तानीति तत्पद विग्रह उक्तो भवति ॥ २८ ॥ स एवेदमिति श्लोके सदसद्रूपया आत्ममायया जीवाविद्ययेति विशेषणविशेष्यभावभ्रांतिनिरासाय तत्पदमनूद्य सम्यग्व्याचष्ट ॥ आत्ममाययेत्यादि ॥ ३१ ॥ तया विलसितेष्विति श्लोकार्धे विज्ञानेन विजभित इत्यस्य विवक्षितार्थप्रतीतिस्तदनूद्य सम्यग्व्याचष्टे ॥ विज्ञानेनेति ॥ ३२ ॥ स्वनिर्मितेष्विति श्लोकार्धे भूते निविष्टो हरिस्तद्गुणान् भूतानां सुखदुःखादिगुणान् भुक्त इत्यर्थभ्रांतिनिरासाय तद्वाक्य सम्यग्व्याचष्टे ॥ तद्गुणानेवेति । अत्रोत्तरत्र प्रमाणानुसारेण शब्दः सार्थको ज्ञेयः । सावधारणत्व तु सर्वे शब्दाः सावधारणा इति न्यायेनोक्तं ज्ञातव्य । स्वोक्तार्थे प्रमाणमाह ॥ सर्वत्रेति । अत्र सर्वत्र सारभुगित्यनेन तद्गुणान् तेषु भूतेषु विद्यमानान् गुणान् सारानेव भुंक्ते इति भागवतवाक्य व्याख्यात भवति । ननु

तद्गुणान्भुंक्त इत्ययुक्तं । अनश्नन्नन्योऽभिचाकशीतीत्यादिश्रुतिविरुद्धत्वादित्यतः श्रुतिविरोधपरिहाराय श्रुतिविवक्षितमर्थमाह ॥ अनश्नन्निति । अनश्नन्नित्यादिश्रुतौ भोक्तृत्वनिषेध इत्यर्थः । क्लृप्तिः परिमितिः । स्वोक्तार्थे प्रमाणं दर्शयंस्तेनैव प्रमाणेन श्रुत्युक्त्या भोक्तृत्वे निमित्तांतरं च दर्शयति ॥ अक्लृप्त्या चेति । चशब्दः समुच्चये । अक्लृप्त्या परिमितिभोक्तृत्वाभावेन स्वतन्त्रत्वात् पराधीनभोक्तृत्वाभावाच्च । अशुभस्य अशुभभोक्तृत्वस्य वर्जनाच्च । अभोक्तेत्युच्यतेऽनश्नन्नित्यादौ । शुभभोक्तृत्वादेव भोक्तेति च तं विदुरित्यर्थः । पूर्णस्वानंदभोजनाच्च विरागाच्च परस्यास्य हरेर्भोक्तृत्वप्रतिषेधनमित्यन्वयः । ननु पूर्णस्वानंदभोजनस्य पराभोक्तृत्वं प्रति हेतुत्वं न संभवति । रमादौ व्यभिचारादित्यत उक्तं ॥ अन्यूनेति । कस्माच्चिन्न्यूनं न भवति कस्माच्चिदधिकं न भवतीत्यन्यूनाधिकं तस्य भावस्तत्त्वं तस्मान्निमित्तात्पूर्णः स्वानंदः तस्य भोजनादित्यर्थः । अनेन नात्र स्वानंदस्य पूर्णत्वं यथा कथंचिद्विवक्षितं । किंत्वन्यूनाधिकत्वमेव । तच्च लक्ष्म्याद्यानंदे नास्ति । तस्य ब्रह्माद्यानंदादधिकत्वात् विष्ण्वानंदात् न्यूनत्वात् । अतो व्यभिचाराभावाद्युक्तमस्य निमित्तत्वमित्युक्तं भवति ॥ ३४ ॥ इति श्रीमद्भागवततात्पर्यटिप्पण्यां द्वितीयोऽध्यायः ॥ २–२ ॥ छ ॥ छ ॥

॥ हरिः ॐ ॥ जगृहे पौरुषमिति श्लोके पौरुषरूपस्य ग्रहणमुच्यते । तत्र ग्रहणं विद्यमानस्याविद्यमानस्य च संभवति । तत्र कस्य ग्रहणं विवक्षितमिति न ज्ञायतेऽतो विवक्षितं ग्रहणं दर्शयति ॥ व्यक्त्येति । अनेन विद्यमानस्यैव ग्रहणं । तदपि हस्तेनादत्तरूपं न भवति । किंत्वभिव्यक्तिरूपमेवेत्युक्तं भवति । कुत एतदित्यतस्तत्र प्रमाणमाह ॥ तथाहीति । यद्रूपं यस्य जनार्दनस्य रूपं । अहेयमनुपादेयं च । नित्यमव्ययं स्वरूपतो देहादितश्च नाशरहितं ॥ यद्वा ॥ नित्यं स्वरूपतो देहादितो नाशरहितं । अव्ययं विविधं जगत् अयति गच्छति जानातीति व्यं अकारवाच्यं तत् अव्ययं । स एवाहेयानुपादेयरूपो जनार्दनो

मूढबुद्धिव्यपेक्षया रूपाणा व्यक्तिमेवापेक्ष्य रामकृष्णादिका तनु । अगृह्णात् व्यसृजच्चेति पठ्यते । पुराणादावित्यर्थः । रूपाणा मूढबुद्धिव्यपेक्षया व्यक्तिमपक्ष्येति यदुक्त तन्न सर्वरूपाणामिति भावेनाह ॥ तमसेति । अनन स एवापेक्ष्य रूपाणा व्यक्तिमिति पूर्वोक्तं व्यक्त्याख्यं ग्रहण रामकृष्णादिरूपाणामेव न तु पुरुषरूपस्य । तस्य तु ग्रहण नाम तदावरकतमानिवृत्तिरवत्युक्त भवति । अत्रैव श्लोके महदादिभिः सभूतमित्यनेन पुरुषरूपस्य • महदाद्युपादानकदेहोत्पत्तिरुच्यत इत्यन्यथाप्रतीतिनिरासाय तदनूद्य सम्यग्व्याचष्ट ॥ महदादिभिरिति । अतर्गत महदादिक यस्य पुरुषरूपस्य न तथा । अनन यथा महदाद्युपादान सभूत कार्ये महदादीनामतर्गतत्वं तथा महदाद्याधारे पुरुषरूपेऽपि महदादीनामतर्गतत्वमस्त्यतस्तदभिप्रायेणेव महदादिभि संभूत इत्युक्त न तु तदुत्पन्नशरीरत्वाभिप्रायेणेत्युक्तं भवति । अस्मिन्नेव श्लोके प्राणादिषोडशकलात्मक पुरुषरूपमित्यन्यथा प्रतीतिनिरासाय तद्व्याख्यानरूपश्रुतिमेव पठति ॥ यस्मिन्निति । अनेन कलाश्च पञ्चभूतानि ज्ञानकर्मेंद्रियाणि च । पञ्चपञ्च मन श्चेति षोडशोक्ता महर्षिभिरिति प्रमाणोक्तषोडशसंख्याकाः कलाः प्रभवति यस्मिन्पुरुषरूप तत्तथेति तत्पदविग्रहः सूचितो भवति । ननु महदादिभिः सभूतमित्यस्य तदुत्पन्नशरीरमित्यवार्थः किं न स्यादिति चेन्न । तस्यार्थस्य प्रमाणबाधितत्वादिति भावेन तत्र बाधकप्रमाणमाह ॥ यत्किंचिदिति । यो भूतातरात्मा नारायणस्तस्य । शुश्रूषुः सेवक । अव्यक्त अव्यक्ततत्त्वाभिमानिलक्ष्मी तत्त्वमित्यर्थः । अनन हि महदाद्युपादानशरीरस्य हरेर्महदाद्युपादानभूतप्रकृतिनियामकलक्ष्मीनियामकत्व सभवति । अतिप्रसगात् । अत एव तत्प्रमाणबाधित । हरेर्महदाद्युपादानशरीरत्वमित्युक्त भवति । न कवल प्रकृतिनियामकलक्ष्मीनियामकत्वनैव पुरुषरूप महदादिशरीरं न भवति । किंतु महदादिनाशकालेऽपि तच्छरीरस्यावस्थितेश्च न तच्छरीर महदाद्युपादानकमिति भावनाह ॥ नासीदिति । यदाऽहर्नासीत् । असत् अहकारादेः कारणं महदादिकं नासीत्तदा तस्मिन्काले महद्वपुः शरीर यस्य तन्महद्वपुः ।

विश्वं जगत् । रूपे यस्य तादृश तत्पौरुष रूपमभवत् । विश्वरूपस्य सा रजनी रात्रिरित्यर्थः । न सदिति क्वचित्पाठः । तत्र सत् कार्यरूप महदादिकमित्यर्थः । एव हरेर्महदादिजन्यशरीरत्व प्रमाणेन निराकृत्यदानी प्रकृतिजन्यशरीरत्व च प्रमाणेनैव निराकरोति ॥ न तस्येति । हरेर्यः प्राकृतदेहाभावः स मुक्तवदन्यध्यानादियोगनिमित्तका न भवतीत्याह ॥ न योगित्वादिति । तर्हि कि निमित्तक इत्यत आह ॥ ईश्वरत्वादिति । अचित्यस्वरूपशक्तेरेवेत्यर्थ. । सत्यरूपाऽच्युत इत्यत्र सत्यपदेन रूपस्य मिथ्यात्वमुच्यतऽच्युतपदनानित्यत्व च निराकृत भवति । नन्वेतत्प्रमाणबलात्कस्यचित्पुरुषादिदेहस्य नित्यत्वान्किमस्तु न मत्स्यादिसर्वदेहानामित्याशका प्रमाणनेव परिहरति ॥ सर्वे नित्या इत्यादिना । सर्वे देहा, मत्स्यादिसव देहाः । परमानदसदोहा' पूर्णानदसमूहात्मकाः । सर्वत' । सार्वविभक्तिकस्तसि' । सर्वे देहा' । सर्वेर्गुणैरन्यूनानधिकाश्च परस्पर समा इत्यर्थः । ननु यदि हरितद्देहयोरभेदस्तस्य स्वरूपत्वन सदा सत्त्वात् । जगृहे व्यसृजदिति स्वीकारत्यागोक्तिरयुक्ता स्यात् । न हि विद्यमानस्य ग्रहण त्यागो वा सभवति । अतिप्रसगादित्यत आह ॥ तत्स्वीकारादिति । आदिपदेन त्यागो ग्राह्य' । यथैकेन स्वहस्तेन विद्यमानस्यैवापरहस्तस्य ग्रहणं त्यागश्च भवति । तथा विद्यमानस्यैव देहस्य ग्रहण त्यागश्च सभवति । ननु यदि हस्तस्य हस्तस्वीकारादिवद्धरेर्देहस्वीकारादिक स्याच्चर्हि देहस्य हस्ताद्भेदादिवद्धरेर्देहभेदादिक च स्यादित्यत आह ॥ वैलक्षण्यादिति । वा शब्दोऽवधारण । हरितद्देहयोर्वैलक्षण्यादतभिन्नत्वानित्यत्वाद्भिरूपहस्तविरुद्धलक्षणवत्त्वस्य प्रमाणसिद्धत्वात् । तद्वत हस्तवत् । नैव भेदादिकमिति शेष. । तर्हि हस्तस्वीकारवदिति कनाभिप्रायणोक्तमित्यत आह ॥ ज्ञानेति । विद्यमानस्य ग्रहणत्यागा न सभवत इति शङ्कमानस्य ज्ञानमात्राथ केवलज्ञानार्थं । यथा विद्यमानस्य हस्तस्य ग्रहणादिक भवति । तथा विद्यमानस्य हरिदेहस्य । अत ईश्वरः केवलैश्वर्यसयोगात् जाता गतः । हरेरिद रूप तद्रूपमित्यादिप्रकारेण । विवक्ष्यत व्यवह्रीयत इत्यर्थः । एव स्मृत्युपपादित

हरेर्देहाद्यभेदे श्रुतिं चाह ॥ एकमेवेति । न केवलमैश्वर्ययोगाज्जन्मादिरहिते हरौ लोकविरुद्धं जातत्वादिव्यवहार एवास्ति किंतु लोकविरुद्धमस्थूलत्वादिकं चैश्वर्ययोगादस्तीत्याह ॥ तस्यैवेति । एवकार ऐश्वर्ययोगादित्यनेन संबध्यते । स्वोक्तार्थे प्रमाणमाह ॥ तथा चेति । सर्वतः प्रकृत्यादिभ्यः । ननु यदि भगवानैश्वर्ययोगाद्विरुद्धार्थोऽभिधीयते तर्हि गुणविरुद्धदोषार्थोऽप्यभिधीयतत्यत आह ॥ तथाऽपीति । आहार्याः आहर्तुं सहर्तुं योग्याः । चोऽवधारणे । गुण इत्यनेन संबध्यते । परमे हरौ दोषाः कथंचन नवाहार्याः । अपि तु किंतु । विरुद्धगुणा एव सर्वतः समाहार्याः उपसहार्या इत्यन्वयः । ननु गुणोपसंहार एव कर्तव्यो न दोषोपसंहार इति यदुक्तं तत्कुत इति चेन्न । दोषोपसंहारस्य मिथ्यार्थविषयत्वेनानर्थफलत्वात् । ननु तर्हि गुणोपसंहारस्यापि मिथ्यार्थविषयत्वेनानर्थसाधनत्वात्सोऽपि कर्तव्य इति चेन्न । गुणोपसंहारस्य मिथ्यार्थविषयत्वं वदतां मिथ्याज्ञानित्वान्न गुणोपसंहारस्य दोषोपसंहारवन्मिथ्यार्थविषयत्वमित्याशयवान्प्रमाणेनैव पूर्वोक्तानुवादपूर्वकं तद्वदतां मिथ्याज्ञानित्वं दर्शयति ॥ विष्णुधर्मेति । गुणदोषावीश्वरे स्वातन्त्र्यादिगुणो जीवे पारतन्त्र्यादिदोषश्च माययैव अविद्ययैव कल्पिताविति ये केचिदाहुस्तेऽपण्डिताः ॥ यद्वा ॥ गुणदोषावित्यत्र दोषग्रहणं दृष्टान्तार्थमेव । नत्वीश्वरे गुणमिथ्यात्वनिरासवद्दोषमिथ्यार्थनिरासार्थमिति ज्ञातव्यं । ये केचित् पुरुषोत्तमे माययैव भ्रान्त्यैव । गुणदोषौ । यथा भ्रान्त्यैव प्रतीयेते । तथा गुणोऽपि सार्वज्ञ्यादिगुणोऽपि । भ्रान्त्यैव प्रतीयत इत्याहुः । तेऽपण्डिता मिथ्याज्ञानिन इत्यर्थः । कुतोऽपण्डिता इति चेत् । अविद्यमानार्थज्ञातृत्वादिति ब्रूमः । तथाहि । ईश्वरे मायाकल्पितगुणं वदन् प्रष्टव्यो जायते । किं स्वाश्रितमायया ईश्वरे गुणः कल्पित उतान्याश्रितया । आद्यं निराकरोति ॥ न तत्रेति । तत्र हरौ । माया नास्ति । सर्वज्ञत्वात् । अन्यथा सार्वज्ञ्यं न स्यात् । न द्वितीयः । अन्यगतमायायास्तस्य मायाविनश्चेश्वराधीनत्वं । नेश्वरः स्वस्मिन्दोषकल्पने एव तयोः सामर्थ्यमदात् । न तु ज्ञानानंदादिगुणकल्पनेऽतो न तयोर्गुणकल्पकत्वमिति भावेनाह ॥ मायावीति । अत्र

मायेत्यनुवर्तते हि यस्मात्तौ माया मायावी च। तदीयौ ईश्वराधीनौ। अतः कुतस्तौ। तत्र ईश्वरे। गुणकल्पकौ स्यातां। न कुतोऽपीत्यर्थः। उपसहरति॥ तस्मादिति। तस्मादीश्वरे मायाकल्पितगुणाभावात्। सर्वं गुणादिकं। ईश्वरे मायाकल्पितमिति वदतो न पडिताः। किंतु सर्वं। ऐश्वर्यसभवं ऐश्वर्येण अचिन्त्यशक्त्यैव सभवो युक्तता यस्य सर्वस्य गुणादेस्तत्तथा। तादृशं गुणादिकं ये वदति त एव पडिता इत्यर्थः। अमायो हीत्यनेनेश्वरगुणादेर्मायाकल्पितत्वे परमत्र न स्यादिति बाधकमुक्त भवति॥ १॥ यस्येति श्लोकार्धे यस्य पुरुषस्यावयवसस्थानैरवयवाना सम्यक् स्थानैराश्रयैर्लोकविस्तर. लोकाना जनानां विस्तरः कल्पित उत्पादित इति जनविस्तारस्य परमपुरुषावयवाश्रयजन्यत्वमुच्यत इत्यन्यथाप्रतीतिं श्रुत्यैव तदर्थसूचनेन परिहरति॥ यस्यावयवेति। अत्रावयवसस्थानैरित्यत परमित्यर्थस्य नाभ्याद्यवयवरूपसस्थानैरंतरिक्षादिभुवनविस्तार उत्पादित इत्येवार्थ इति शेषः पूरणीयः। इत्यादेः प्रमाणादित्यादीति क्वचित्पाठ। तत्र इत्यादिप्रमाण यतोऽत्रास्तीत्यर्थः। तस्मिन्नेव श्लोकार्धे भगवतो रूपं सत्त्व प्राकृतसत्त्वगुणात्मकमित्यन्यथाप्रतीतिनिरासाय सत्त्वपदमनूद्य सम्यग्व्याचष्टे॥ सत्त्वमिति। सद्भावे साधुभावे च सदित्येतत्प्रयुज्यत इति प्रमाणात्सच्छब्दः साधुभाववाची। साधुभावश्चात्र पूर्णानंदादय एव। तथा च सत्ता पूर्णानंदादीना भावः पूर्णानंदत्वादिक सत्त्वमित्यर्थः। सत्त्वपदस्यार्थांतरमाह॥ ज्ञानेति। ज्ञानबलरूपं ज्ञानबलानुभवरूपमित्यर्थः। अत्र प्रमाणमाह॥ बलेति। आहारे भोजने हारे भवेदाभरणे चेति विश्वप्रकाशाभिधानात् समाहारशब्दः सम्यगनुभववाची। ज्ञानबलयोः सम्यगनुभवस्वरूप इत्यर्थ.॥ ३॥ एतन्नानेति श्लोकार्धे एतत् पुरुषरूप नानाऽवताराणा रामकृष्णाद्यवताराणा निधानं निधीयतेऽस्मिन्निति निधानमिति पुरुषरूपस्य रामकृष्णाद्यवतारलयाधिकरणत्वमुच्यते उपसर्गबलात्। अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवेत्यादिप्रमाणवचनाच्चात्र निधनपर्यायस्य निधानशब्दस्य लयार्थत्वं ज्ञातव्यं। तत्तु प्रमाणबाधित

मित्यतस्तत्पदनूद्य सम्यग्व्याचष्टे ॥ निधानमिति । अत्र पुरुषरूप । अते प्रलयकाले । अनेन पुरुषरूपेऽवताराणां लया नामैकीभाव एव न तु देहनाशादिरूप इत्युक्त भवति । अस्मिन्नेव श्लोकार्थे यस्य पुरुषावतारस्यांशांशेनावतारस्याप्यवतारेण देवादयः सृज्यत इति देवादिस्रष्टुः पुरुषावतारत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तत्पदमनूद्य सम्यग्व्याचष्टे ॥ अशांशेनेनि । स्वोक्तार्थ प्रमाणमाह ॥ ब्राह्मे चेति ॥ ५ ॥ स एवेति श्लोके स देवः कौमार सर्ग सृज्यत इति सर्गमवतारमास्थित इति हरः कुमारावतार उच्यते । स तु सनकादिस्थसनत्कुमार एवेति भ्रांतिनिरासाय प्रमाणनव तत्तात्पर्यार्थमाह ॥ कुमार इति । ब्रह्मणे चतुर्मुखाय । ब्रह्म वेदं । परब्रह्म वा । यस्मात् हरेः कुमाररूपात् । यः कुमाररूपी हरिः । स्थाणोः रुद्रस्य । स्थाणुतां रुद्रता प्रादादित्यर्थः ॥ ६ ॥ तृतीयमिति श्लोकार्थे स हरिस्तृतीय ऋषिसर्ग देवर्षित्व नारदत्वमुपत्येति हरस्तृतीयावतारो नारद इति भ्रांतिपरिहाराय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अवतार इति । ऐतरेयो महिदासस्तु महिदास एवात्र देवर्षिर्न तु नारद इत्यर्थः । द्वितीयार्थे तृतीयार्थे चतुर्थ्यर्थे च सप्तमीति प्रमाणात् नारद इति सप्तमी चतुर्थ्यर्थे ॥ ८ ॥ तुर्यमिति श्लोके धर्मकलासर्ग इत्यस्य धर्मो यमधर्म एव कलासर्गः स्वांशावतार इत्यर्थभ्रांतिनिरासाय तदनूद्य सम्यग्व्याचष्टे ॥ धर्मकलेति । अनन सप्तमीतत्पुरुषसमास उक्तो भवति । अस्मिन्नेव श्लोके आत्मनः मनसः उपशमः भगवन्निष्ठतयोपेत तपः अकरोदिति नारायणस्य परलोकसाधनभगवन्निष्ठतोच्यते । सा प्रमाणबाधिता अतोपेक्षिताध्याहारेण तद्वाक्यं योजयति ॥ लोकेति ॥९॥ पंचम इति श्लोके सांख्य प्रावाचत्यत्र सांख्यपदस्य ज्ञानार्थत्वभ्रांति कुत्सितशास्त्रार्थत्वभ्रांति च क्रमेणापेक्षिताध्याहृतपदा वचेन परिहरति ॥ तंत्रमिति । तत्र शास्त्र । अनेन ज्ञानार्थत्वभ्रांतिर्निरस्ता । वेदानुसारीत्यनेन द्वितीया भ्रांतिर्निरस्ता। स्वोक्तार्थे प्रमाण दर्शयंस्तेनैव प्रमाणन समग्र श्लोक व्याचष्टे॥ पाद्मे चेति ॥ १० ॥ षष्ठमिति श्लोके आन्वीक्षिकीमित्यस्य आन्वीक्षिकी तर्कविद्यामनिरुक्ता निरर्थकामिति वचनबलाद्दौ

तमप्रणीतकुतर्कशास्त्रार्थत्वभ्रातिनिरासाय तत्पदमनूद्य सम्यग्व्याचष्टे ॥ आन्वीक्षिकीमिति । स्वोक्तार्थे प्रमाणमाह ॥ आन्वीक्षिकीति ॥ ११ ॥ ऋषिभिरिति श्लोके पार्थिव पृथिवीमय वपुः शरीर भज इति हरेः पृथिवीविकारशरीरत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तत्पद सम्यग्व्याचष्टे ॥ पृथुशरीरेति । अनन पृथाः शरीरसनावे पाथिव । सवधस्तु तत्रावेशरूप एवेत्युक्त भवति । उक्तार्थे प्रमाणमाह ॥ आविवेशेति । अत्रेव श्लोके उशत्तम इति पदस्य दुर्गमार्थत्वान्मूलभूतधातु पठित्वा तात्पर्यार्थमाह ॥ उशेति । तमप्प्रत्ययार्थः सत्याति ॥ १४ ॥ तत इति श्लोके व्यासावतारस्य सप्तदशत्वमुच्यत ॥ नरदेवत्वमापन्न इति श्लोके रामावतारस्याष्टादशत्वमुच्यते । तन रामावतारात्पूर्वमेव व्यासावतार इत्युक्त भवति । तदयुक्त । रामावतारस्य त्रेतायुग जातत्वाद्व्यासावतारस्य तदनतरभाविद्वापरयुग जातत्वादित्यतस्तद्घटयाति ॥ रामादिति । अपिपदन रामात्पश्चादपि अस्ति व्यासावतार इति सूचयति । स्वोक्तार्थे प्रमाणमाह ॥ तृतीयमिति । युग महायुग । बहुषु तृतीये सप्तम चैव षोडश पचविंशके । अष्टाविंशे युग कृष्णः सत्यवत्या पराशरादिति प्रमाणोक्तेषु जज्ञिवानित्यर्थः ॥ २१ ॥ एकोनविंश इति श्लोके बलरामकृष्णयोरुत्क्रमणैकानविंशावतारत्वोक्त्या कृष्णवद्बलरामस्यापि साक्षान्नारायणावतारत्वभ्रांति निराकरोति ॥ आवेश इति । विष्णोरिति शेषः । यदि बलभद्रो विष्णोरावेशयुक्त एव नत्ववतारस्तर्हि कस्यावतार इत्याशका प्रमाणेनैव परिहरस्तनेव प्रमाणेन स्वोक्तार्थ द्रढयति ॥ शखचक्रेति । शेषात्रमित्यनेन शेषस्यावतार इत्युक्त । तन शका परिहृता भवति ॥ २३ ॥ ततः कलाविति श्लोके कृष्णादेर्वसुदेवभार्यादेः प्रादुर्भाववद्बुद्धरूपहरेर्जिनभार्यायाः प्रादुर्भाव उच्यत इति भ्रांतिनिरासाय प्रमाणनैव तत्तात्पर्यार्थमाह ॥ मोहनार्थमिति । त पथि स्थित हरि । ततः तदनन्तरमेव ॥ २४ ॥ यथेति श्लोक विदासिन इति पदस्यार्थाप्रतीतेस्तदनूद्य द्वेधा व्याख्यायार्थद्वये प्रमाणमाह ॥ विदासिन इति । विदासिन उन्नता उत्तमा इत्यर्थः । अत्र नीचमध्यसह

इति पाठाद्विदासिन इत्यस्योक्तार्थत्व ज्ञायते। वर्णरूपेण ब्राह्मणादिवर्णरूपण चतुर्धा विदासित भिन्नमित्यर्थः । अत्र चतुर्धेति पन्बलाद्विनासितमिति भिन्नार्थत्व ज्ञायते। भिन्नात्सरसो यथेति दृष्टान्तोक्तिस्तत्र वै हरय इत्यादिबहुवचनमेकस्यापि हरेर्बहुरूपाभिप्रायेणेति ज्ञापनार्था ॥ २६ ॥ एते स्वांशेति श्लोकार्धे एते पूर्वोक्ताः कुमारादयो ऋष्यादयश्च सर्वे पुंसः पुरुषनामकस्य विष्णोः स्वांशकलाः स्वरूपांशस्यांशाः। कृष्णस्तु वसुदेवजः। कृष्णावतारस्तु साक्षाद्भगवत्स्वरूपांश. । इत्यकस्य वसुदेवसुत कृष्णस्यैव विष्णुस्वरूपांशत्वमुच्यत । नान्येषां कुमारादीनामित्य यथाप्रतीतिनिरासाय स्वय तत्सम्यग्व्याचष्ट ॥ एत इति। ऋष्यादयस्तत्प्रातिविबांशा इति वाक्यशेषः । अनेनत दृत्सतच्छब्दः पूर्वोक्तकुमाराद्यवताराणामेव परामर्शका न तु ऋष्यादीनां। कृष्ण शब्दस्त्वानदात्मकमूलरूपार्थकः । स्वांशकलाशब्दः स्वरूपांशात्मकावतारार्थक इत्युक्त भवति। स्वोक्तार्थे प्रमाणमाह ॥ जीवा इति। एक एव विष्णुस्तु भेदप्रतिनिधिविशेषबलात्स्वर्याच्च बहुधा दृश्यत इत्यर्थ ॥ २८ ॥ एतद्रूपमिति श्लोक एतच्छब्दो जगृहे पौरुषं रूपमित्यादिना पूर्वप्रकृतपुरुषादिरूपपरामर्शक इति भ्रातिनिरासाय तदनूद्य व्याचष्ट ॥ एतदिति। न वेतच्छब्देन जड गृह्यते तर्हि जडस्यापि भगवद्रूपत्वमुक्त भवत्। ततश्च जगृहे पौरुष रूपमित्याद्युक्तपुरुषादिरूपाणां यादृग भगवद्रूपत्व तादृशमेव जडस्यापि भगवद्रूपत्वमगीकृतं स्यात्। तच्च प्रमाणवाधितमित्याशङ्का प्रमाणत्व परिहरस्तेनेव प्रमाणेन ऋषयो मनवो देवा इत्याद्युक्ते प्रतिविंबभूतजीवानां भगवदवतारानुक्त हरिरूपत्व चाह ॥ नारायणेनेति। रूपमिति पदमुत्तरत्रापि सव यत। आरोपित। रूप उपरिभाव इति धातोः। उपरिभूतं पश्चाद्भूत। असदातनमिति यावत्। रूपमित्यर्थ । इद तु मायागुणे र्विरचित महदादिभिरिति भागवतवाक्यस्यैवार्थकथन ज्ञातव्य ॥ ३० ॥ एव द्रष्टरीति श्लोकार्ध द्रष्टरि हरा दृश्यत्व ज्ञानविषयत्वमारोपितमित्य यथाप्रतीतिनिरासाय दृश्यत्वपदमनूद्य व्याचष्टे ॥ दृश्यत्वमिति । जडरूपत्व जडशरीरत्व । स्वोक्तार्थे

प्रमाणमाह ॥ अविज्ञायेति । आनंदात्मानं देहमित्यर्थ. ॥ ३१ ॥ अतः परमिति श्लोकार्थे अतो जीवजडात्मकप्रपचात्
पर विलक्षण पर ब्रह्मेति परब्रह्म प्रतिपाद्यत इत्युक्त भवति । ननु तर्हि अव्यूढ च तद्गुणबृंहततेि गुणपूर्णत्वाविशेषण श्रीत्रे कथ
घटत इत्यतस्तत्पदार्थमाह ॥ अव्यूढेति । अनन वह प्रापण इति धातोः ऊढशब्दः प्राप्त्यर्थकः । विप्रियमित्यादाविवात्र
विशब्दाऽभावार्थकः । विरूढा अप्राप्ताः । न व्यूढा अप्राप्ताः । द्वौ नञौ प्रकृतमथ सातिशय गमयत इति न्यायेनातिशयेन प्राप्ता ।
अनादिकाले कदाचिदप्यनपगता गुणाः सत्त्वादयस्तैर्बृंहितमभिवृद्धमिति भागवतपद व्याख्यात भवति । अदृष्टाश्रुतवस्तुत्वात्सजीव
इति जीवत्व प्रति पचम्यतस्य हेतुत्वभ्रांतिनिरासायान्वयमाह ॥ अदृष्टेति । परब्रह्मविषयकश्रवणादिज्ञानशून्यत्वादित्यर्थः
॥ ३२ ॥ यत्रेन इति श्लोक यत्रात्मनि परमात्मन्यविद्यया कृते कल्पिते सदसद्रूपे स्वसविदा प्रतिषिद्ध निवर्तत इति यज्ज्ञान
तदेव ब्रह्मदर्शनमिति सदसदात्मकप्रपंचस्याविद्याकल्पितत्वज्ञानवा यत्वज्ञानस्य ब्रह्मज्ञात्वनमुच्यत इत्यन्यथाप्रतीतिनिरासाय तद्वाक्य
सम्यग्व्याचष्टे ॥ अविद्ययेति । अनेन सदसद्रूपे सत् कार्यरूपमहदाद्यात्मक रूप देह. असत् कारणरूपप्रकृत्यात्मक रूप च यत्र
परमेश्वरे प्रतिषिद्ध आत्मनि जीवे चाविद्यया कृते इति भागवतवाक्य व्याख्यात भवति ॥ ३३ ॥ यद्येषोपरतेति श्लोक
वैशारदीत्यस्य विवक्षितार्थप्रतीतेस्तमर्थ दर्शयन्सम्यक् श्लोक व्याचष्टे ॥ विशारद इति । तन्मतिरित्यनेन विशारदसबंधिनी
वैशारदीति तत्पदव्युत्पत्तिः सूचिता । माया मायाशब्दवाच्या ॥ ३४ ॥ एव जन्मानीति श्लोक अकर्तुरित्यस्य सर्वथा कर्तृ
त्वाभावोऽर्थ इति भ्रांतिनिरासाय प्रमाणेनव तदर्थमाह ॥ अप्रयत्नादिति । अप्रयत्नात् प्रयासेन कर्तृत्वाभावात् । स्वतत्र
त्वात् पराधीनकर्तृत्वाभावात् । क्रियायाश्च स्वरूपत्वात् भिन्नकर्तृत्वाभावादित्यर्थः ॥ ३५ ॥ इद भागवतं नामेत्यादि
ग्रंथस्य प्रकृतसगत्यप्रतीतेस्ता दर्शयंस्तमवतारयति ॥ धर्म इति । अनेन यतो व्यासो भगवद्भक्त्यादिधर्मस्थापनायेद भागवत

चकारातो धर्मस्थापकत्वाद्व्यास एव धर्मस्य शरण रक्षक इति प्रश्नपरिहारार्थोऽय ग्रथ इत्युक्त भवति ॥ ४० ॥ इति श्रीभागवत तात्पर्यटिप्पण्या तृतीयोऽध्यायः ॥ १-३ ॥ छ ॥

॥ हरिः ॐ ॥ तस्य पुत्र इति श्लोकार्थे निर्विकल्पक इत्यस्य नितरा विरुद्धकल्प' कल्पना यस्यत्यर्थभ्रांतिनिरासायानुवादपूर्वक विवक्षितमर्थमाह ॥ निर्विकल्पक इति । मदीय मदधीनमिति स्वपरजीवाधीनमिति स्वपरजीवाधीनत्वज्ञानरूपभदमय हायेत्यर्थः । अनेन मदधीनमिति ज्ञानरूपभदा विकल्पो निष्क्रातो विकल्पो निविकल्पो निविकल्प एव निर्विकल्पक इति भागवत पदं व्याख्यात भवति । एवं निर्विकल्पकपद स्वय व्याख्यायेदानी तत्र प्रमाण सूचयस्तनव प्रमाणन स्वारयातानि दुर्गमार्थानि कानिचिद्भागवतपदानि व्याचष्ट ॥ साम्यमिति । सर्वत्र सर्वेष्वीश्वररूपेषु सर्वत्र जगति तदधीनतामीश्वराधीनतामिति सर्वत्र पदस्योभयत्रान्वयः । साम्यमीश्वररूपेष्वित्यनेन समदागिति पदं व्याख्यात । निविकल्पक इत्यस्यार्थः सर्वत्र तदधीनतामिति । उन्निद्र इत्यस्यार्थो विनिद्र इति महायोगीत्यस्यार्थो योगविदिति ॥४॥ द्वापर इति श्लोके युगपर्यय । अयपयगताविति धातोः कृतादि चतुर्युगाना परि॰ अयः गतिः स्थितिर्यस्मिन्महायुगे तथा तस्मिस्तृतीये महायुग विद्यमाने द्वापर जात इति तृतीयमहायुगस्य द्वापर व्यासावतारो जात इत्यर्थप्रतीतिनिरासाय तस्य विवक्षितमर्थमाह ॥ तृतीय इति । युग इत्यनेन युगपर्यय इति भागवतवाक्य युगे इति सप्तम्याः सुपासु लुगिति सूत्रेण लुक् जात इति सूचित । तेन द्वापरात व्यासावतार इति भागवतवाक्यतात्पर्यार्थः सूचितः ॥ १३ ॥ सर्ववर्णेति श्लोकार्थे सर्ववर्णाश्रमाणा यद्धित तच्चिरं दध्याविति वदव्यासस्य वर्णाश्रमविहितचिरध्यानाक्त्याऽऽलाचन एव ज्ञानं । आलाचनाभाव ज्ञान नास्तीति भाति । तच्च साक्षान्नारायण व्यास बहुप्रमाणबाधित । अतोऽपक्षिताध्याहारण तत्तात्पर्यार्थमाह ॥ नित्यज्ञानस्येति । लोकदृष्ट्यपेक्षया मिथ्याज्ञानापेक्षया । स्वाक्तार्थे प्रमाणमाह ॥ सर्वज्ञोऽपीति । अज्ञाना

लोकानां मोहनाय वेत्यन्वयः ॥ १७ ॥ स्त्रीशूद्रेति सार्धश्लोके वेदानधिकारिस्त्रीशूद्रब्रह्मबन्धूनां कृपया मुनिर्भारतकृतमित्युक्त्या विशेषविधिः शेषनिषेधं गमयतीति न्यायात् स्त्रीशूद्रब्रह्मबन्धुव्यतिरिक्तवेदाधिकारिब्राह्मणादीनां भारतेऽधिकारो नास्तीति प्रतीयते । सा इतिहासपुराणाभ्यां वेदं समुपबृंहयेदित्यादिप्रमाणबाधिता । अतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ भारतमिति । वेदार्थपरिवित्तये वेदार्थस्य ज्ञानाय । भारतं कृतमिति शेषः। अन्येषां स्त्रीशूद्रादीनां तु । त एव ब्राह्मणादय एव । वेदा वदयतीति वेदा भारताद्यर्थोपदेशका इत्यर्थः । कुत एतदित्यत आह ॥ नर्ते इति । यतस्त्वद्भारत ऋते कस्यचित् कस्यापि वेदेऽधिकारिणोऽनधिकारिणो वा सुखं मोक्षाख्यं नास्ति । अतो ब्राह्मणादयः स्त्रीशूद्रादयश्च भारतेऽधिकारिण इत्यर्थः ॥ २४ ॥ सर्वात्मकेनेति श्लोकार्धे नातुष्यत् सुखयुक्तं नाभूदित्यन्यथाप्रतीतिनिरासाय तत्पदं व्याचष्टे ॥ अतोष इति । अननातुष्यत् अलंबुद्धिमान्नाभूदिति तात्पर्यार्थ उक्तो भवति । स्वोक्तार्थे प्रमाणमाह ॥ श्रुत्वेति ॥ २५ ॥ नातिप्रसन्नेति श्लोकार्धेऽतिप्रशस्तहृदयो न भवतीति हरिरूपव्यासहृदयस्याप्रशस्तत्वमुच्यते । तत्तु प्रमाणबाधितमतो नातिप्रसन्नेत्यस्यार्थमाह ॥ अप्रसाद इति । स वै अनलंबुद्धिरेव । अनेन विद्यतेऽतिप्रसन्नं अत्यलंबुद्धियुक्तं हृदयं यस्य स तथेति तत्पदार्थ उक्तो भवति । स्वोक्तार्थे प्रमाणमाह ॥ कः प्रसन्न इति ॥ २६ ॥ धृतव्रतेनेति श्लोके वेदव्यासस्योपनयनवेदाध्ययनादिकमुच्यते । तत्तु मनुष्यादिवद्विधिबद्धत्वेनैवेत्यन्यथाप्रतीतिनिरासाय तत्तात्पर्यार्थमाह ॥ आचारेति । परिपूर्णस्य हरेराचारापेक्षया सज्जना उपनयनाद्याचारं कुर्वन्त्वित्यपेक्षयैव धृतव्रतत्वादि । न तु विधिबद्धत्वेनेत्यर्थः ॥ २७ ॥ अथापीति श्लोके मम दह्यो देहवानात्मा स्वरूपमिति वेदव्यासस्वरूपस्य देहस्य च भेद उच्यते । स प्रमाणबाधित इत्यतो दैह्यपदमनूद्य व्याचष्टे ॥ दैह्य इति । अनेन देहसंबन्धी दैह्यः संबन्धश्च तादात्म्यरूप इत्युक्तं भवति । अस्मिन्नेव श्लोके आत्मना विभुरित्यस्य देहेन समर्थ इत्यर्थभ्रान्तिनिरासाय तत्पदद्वयमनूद्य यथावद्व्याचष्टे ॥

आत्मनेति । स्वोक्तार्थं प्रमाणेनैवोपपादयति ॥ तस्य सर्वेति । विशेषः परस्पर भेदकधर्मः । परे उत्कृष्ट हरौ । अत्रैव श्लोकेऽसपत्न इत्यस्य दरिद्रार्थत्वभ्रांतिनिरासाय तथा ब्रह्मवर्चस्विसत्तम इत्यस्य ब्रह्मवर्चस्वी चासौ सत्तमश्चेत्यर्थभ्रांतिनिरासाय पदद्वय तात्पर्यार्थमाह ॥ अवतारेति । असपत्या अप्राप्त्या । भवेदेकत्र सयोगे इव शब्दो विरुद्धयोः । धर्मयोरुपमाया वा स्वल्पत्व वा विवक्षित इति काठकभाष्योक्ताभिधानादिवशब्दस्य स्वल्पार्थत्वात् असपत्न इवाल्पभयाजनरहित इत्यर्थः ॥ २९ ॥ किंवेति श्लोक प्रायेण भागवता धर्मा न निरूपिता किमित्यल्पभागवतधर्मनिरूपणाभिप्रायेणयमुक्तिरिति प्रतीतिनिरासायास्या उक्तेरभिप्रायमाह ॥ पुनरिति । न प्रायेण निरूपिता इति भागवते उक्तिरिति शेषः । अनेन भारते निरूपितानामपि भगवद्धर्माणा पुनर्निरूपणस्यापेक्षितत्वाभिप्रायणवेयमुक्तिर्न तु बहुधर्माणामनिरूपणाभिप्रायणेत्युक्त भवति । ननु भारते भगवद्धर्मा निरूपिता इत्यतत्कुतस्तत्र प्रमाणमाह ॥ यथेति । तु विशेषेण । देवः क्रीडादिगुणविशिष्टा हरिरुच्यत तथाऽपीश जनार्दन । ईशत्वदुष्टजनमर्दकत्वादिधर्मयुक्त । अज्ञा मदबुद्धयो न जानतीत्यर्थः । अनेन मदाधिकारिबोधार्थं पुनर्निरूपणमित्युक्त भवति ॥ ३० ॥ तस्यैवमिति श्लोके खिन्नमात्मानामिति खिन्न खिद्यत इति पदद्वयस्य दुःखयुक्तत्वार्थभ्रांतिनिरासाय विवक्षितार्थमाह ॥ खेद इति । अत्राभिधानमाह ॥ अतुष्टिरिति । खिन्न मन्यमानस्येत्यनन व्यासस्य खिन्नत्व वास्तवमिति भ्रातिमपेक्षिताध्याहारण परिहरति ॥ मन्यमानस्येति । स्वेच्छया मन्यमानस्य अज्ञाना प्रदर्शकस्येत्यर्थः ॥ ३१ ॥ इति श्रीभागवततात्पर्यटिप्पण्या चतुर्थोऽध्यायः ॥ १-४ ॥ छ ॥ छ ॥

॥ हरिः ॐ ॥ ननु पराशर्येति श्लोके वेदव्यास प्रति भवतः शारीरो मानस आत्मेति नारदोक्तिरयुक्ता । तथाहि । वेदव्यासशरीरमानसयोः परस्परं वेदव्यासाच्चाभेदो वा भदो वा । आद्ये व्यासस्य व्यासो नारायणः साक्षादित्यादिप्रमाणसिद्धं नारायणत्व न स्यात् । नारायणस्य एकमेवाद्वितीयमित्यादिश्रुतेरभिन्नशरीरादित्वात् । द्वितीये शरीरसबधि शारीर इत्यादिशरीरसबं

धोक्तिः कथ घटते । सबधस्य भेदव्याप्तत्वादित्यतस्तदुक्ति घटयति ॥ शारीरेति । व्यत्ययोऽतिशयकुत्सनाभेदेष्विति महाव्याकरणसूत्रात् अतिशयार्थकव्यत्ययेनाभेदादिति पंचमी सप्तम्यर्थे वाऽव्यय स्यात्समुच्चये विलये च विशेषेण विद्यते विभवे तथति रत्नमालाभिधानात् । भागवतस्थवाशब्दो भेदप्रतिनिधिविशेषेऽचित्यशक्त्याख्यविभवे च वर्तते । वाशब्दार्थकोऽत्रापिशब्दः शरीरमानसयोर्व्यासशरीरांतःकरणयोः परस्पर व्यासाच्चाभेदे सत्यपि भेदप्रतिनिधिविशेषबलाद्धरेरचित्यशक्तश्चोभयथा शारीरो मानस इत्युभयप्रकारेण सबधोक्तिः । युज्यते घटत इत्यर्थः । अत्रैव श्लोके आत्मनेत्यस्यासगतित्वभ्रातिनिरासायापेक्षिताध्याहारेण तात्पर्यार्थमाह ॥ स्वतन्त्रत्वादिति । आत्मनेव स्वत एव । न तु रमाब्रह्मादिवत्पराधीनेत्यर्थः ॥ २ ॥ तथाऽपीति श्लोकार्धे आत्मानमुद्दिश्य शोचसि दुःख करोपीत्य यथाप्रतीतिनिरासाय तत्पदमनूद्य व्याचष्टे ॥ शोचसीति । शुच् धातोः प्रकाशार्थत्वे प्रयोग दर्शयति ॥ अजस्रेणेति । अजस्रेण नित्येन । शोचिषा शोशुचा दीप्त्या शोशुचाना भृश प्रकाशमान इत्यर्थः ॥ ४ ॥ अस्त्येवमिति श्लोके ममाव्यक्तमज्ञान तन्मूलमगाधबोध त्वा त्वा पृच्छामह इति व्यासस्याज्ञानमुपदेश विना ज्ञातुमशक्तिश्चोच्यते । तदुभय साक्षाद्विष्णुस्वरूपे व्यासे प्रमाणबाधितमित्यतः प्रमाणनेव तत्तात्पर्यार्थमाह ॥ ज्ञानेति । अज्ञश्चासाव शक्तश्च अज्ञाशक्तस्त स्वामिति शेषः । तेन वचनेन मोहिताः । मुहवैचित्य इति धातोः । विगतज्ञाना' सतो मुह्यति । मिथ्याज्ञान प्राप्नुवंतीत्यर्थः ॥ ५ ॥ यथा धर्मादय इति श्लोके वेदव्यासेन भारतादौ हरिमाहात्म्य स्वल्पमव प्रतिपादित । धर्मादय एव प्राचुर्येण प्रतिपादिता इति प्रतीतिर्भवति । सा भ्रातिरिति भावेन तत्तात्पर्यार्थमाह ॥ धर्मादीनामिति । पूतिरिति पदमुत्तर वाक्येऽपि सबध्यते । पूर्तिः संपूर्णकथन भवति । धर्मादीना परिमितत्वात् । अतिकथितस्यापि प्राचुर्येण कथितस्यापि । न पूर्तिः । हरिमहिम्नोऽपरिमितत्वात् । अत एव धर्मादिकथने नालबुद्धिरित्यर्थः । ननु भारते हरिमहिम्नोऽकथनमनलबुद्धिकारणमित्युक्त

मयुक्तं । अनुक्तं पञ्चभिर्वेदैर्न तद्वस्त्विति किंचनेति वचनात् । भारतानुक्तस्याभावादिति चेन्न । सामान्यत उक्तस्यापि माहात्म्यस्य विशेषतोऽनुक्तेरनलबुद्धिकारणत्वात् ॥ ९ ॥ तद्वायसमिति श्लोकार्धे यत्र गङ्गादितीर्थे हंसा न्यपतन् तद्गङ्गादितीर्थं वायस वायसमिति । वयोमात्रानुजीवि वयोमात्रस्यापजीव्य । काकपक्षसवर्धत्यर्थभ्रांतिनिरासाय तत्पदद्वयमनूद्य व्याचष्ट ॥ वायसमिति । वयोमात्रानुजीवि वयोमात्रस्यापजीव्य । तच्छास्त्रं जीवनमात्राय भवति । न तु हरिज्ञानभक्त्याद्यर्थमित्यर्थः ॥ १० ॥ नैष्कर्म्यमिति श्लोके ज्ञानपदस्यापरोक्षज्ञानार्थत्व भ्रांतिं निराकरोति ॥ परोक्षेति ।, ननु साक्षिणा प्रकाशमानस्य परोक्षज्ञानस्य न शोभत इति कथमुच्यत इत्यतो न शोभत इत्यस्य विवक्षितार्थं दर्शयन्नच्युतभाववर्जितमित्यस्याच्युतधर्मरहितमित्यर्थभ्रांतिनिरासायार्थमाह ॥ अपरोक्षेति । अच्युतभाववर्जि तमित्यस्यार्थो भक्त्या विनेति । न शोभत इत्यस्यार्थोऽपरोक्षज्ञानं नोत्पद्यत इति । परोक्षज्ञानेनेति शेषः । अनेन हरिभक्तिरहित परोक्षज्ञानस्याशोभनत्व नाम ईश्वरापरोक्षज्ञानद्वारा मोक्षसाधनत्वाभाव एव । न त्वप्रकाशमानत्वमित्युक्तं भवति । अतो बादरायणोऽपि नैष्कर्म्यमपीत्यपिपदेनास्य मोक्षसाधनत्वं गर्हयामास । न केवलमस्य ज्ञानस्यैतदेवाशोभनत्व किंतु पारोक्ष्येणैव तत्त्वं तु लोक चापि विदति ये । तेऽपि सत्स्नेहनिर्मुक्तास्तमो यांति विनिश्चयादिति सद्गुणाख्यप्रमाणोक्त तमोपादनत्वमपि ज्ञातव्य । भक्ति विनाऽपरोक्षज्ञानं नोत्पद्यत इत्युक्त्वाऽर्थाल्लब्धभक्त्यैवापरोक्षज्ञानमुत्पद्यत इति तत्र प्रमाणमाह ॥ यस्य देव इति । अत्र तस्यत कथिता ह्यर्थाः प्रकाशंत इत्यनेन भक्तेरपरोक्षसाधनत्वमुच्यते । यमेवैष वृणुत इत्यत्र एषः हरिः । यमेव वृणुते भक्तत्वेनाङ्गीकरोति । तस्य स्वां तनुं विवृणुते । प्रकाशयतीत्यनेन भक्तेरपरोक्षज्ञानसाधनत्वमुक्त भवति । तृतीयवाक्ये तु वासुदेवशरणा एव वासुदेवोऽ स्माक रक्षक इति भक्तिमत एव । यत् परं ब्रह्म । अञ्जसा आपरोक्ष्येण । विदुरित्यपरोक्षज्ञानस्य भक्तिसाध्यत्व ज्ञेयं । आदि पदेन भक्त्या मामभिजानातीत्यादेः संग्रहः ॥ १२ ॥ अतो महाभागेति श्लोके शुचिश्रव इत्यस्य विवक्षितार्थाप्रतीतेर्विवक्षित

मर्थमाह ॥ शुचीति । अत्रैव श्लोके समाधिनेत्यस्य ध्यानेनेत्यन्यथाप्रतीतिनिरासाय विवक्षितमर्थमाह ॥ समाधिनेनेति । अत्रैव श्लोकेऽनुस्मरेत्यस्य संस्कारजन्यस्मृत्यर्थत्वभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ स्मरणमिति । स्वोक्तार्थे प्रमाणमाह ॥ स्मरंतीति । स्मरत्येव प्रथानुकुर्वंत्येवेत्यर्थः ॥ १३ ॥ जुगुप्समिति श्लोके धर्मकृत इत्यस्य निवृत्तिधर्मकृत इत्यर्थभ्रांतिनिरासायार्थमाह ॥ प्रवृत्तीति ॥ १५ ॥ विचक्षण इति श्लोकेऽनंतपारस्य विभोः सवधि यत्सुखमित्यर्थभ्रांतिनिरासाय तद्वाक्य सम्यग्व्याचष्टे ॥ अनंतपारस्येति । अतेन नाशेन । पारेण मर्यादया । च रहितस्येत्यर्थः ॥ १६ ॥ इदं हीति श्लोके भगवान इदं विश्व हि एतद्विश्वात्मको हि तथाऽपीतर इवाभातीति हरेर्विश्वात्मकत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तद्वाक्यमध्यापेक्षिताध्याहारेणान्वयमाह ॥ इतर इति । यतो जगत्स्थानेत्यादेस्तात्पर्यार्थः स्वातंत्र्यादिति ॥ २० ॥ यथाऽहमिति श्लोकार्धे मयि ब्रह्मणि मदात्मके एव ब्रह्मणीति नारदस्य परब्रह्मत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायापेक्षितशेष पूरयति ॥ मयीति । अत्रैव श्लोके स्वमायया एतत्कल्पितमारोपितमिति जगन्मिथ्यात्वमुच्यत इति भ्रांतिनिरासाय तद्वाक्य सम्यग्व्याचष्ट ॥ स्थीयतामिति । अनेन मयि स्थिते ब्रह्मणि स्वमाययाऽत्र स्थीयतामिति स्वेच्छया कल्पित परिकल्पित स्थित एतत् सदसज्जगत् यया मत्याऽह पश्य इति भागवतवाक्य व्याख्यातं भवति ॥ २७ ॥ त्वमपीति श्लोकार्धे त्वमपीत्यत्रापिपदस्य समुच्चयार्थत्वभ्रांतिनिरासायापूर्वमर्थमाह ॥ त्वमिति । ईश्वरोऽपीत्यपिपदग्रहणेन भागवतस्थापिपदस्यावृत्तिः सूचिता । तत्रैकमपि पदमीश्वरार्थक । द्वितीयमदश्च श्रुतत्वेन सह समुच्चयार्थक । अनेन पातीति पालको न विद्यते पालको यस्य सोऽपीति तत्पदविग्रह उक्ता भवति । तथा नञ् पूर्वात् पा रक्षण इति धातोः कर्तरि औणादिक किमत्यये सुपासु लुगिति सुविभक्तेर्लुकि च सति अपीति रूपसिद्धिरिति चोक्त भवति ॥ यद्वा ॥ निर्दोषगुणपूर्णत्वेनाकारवाच्यश्चापि पालकश्चेत्यर्थः । इद तु रमाब्रह्मादीनामयशक्यमिति भागवतकृष्णमाचित्ये

श्वर्यशक्तिमत्त्वस्तवातिसुखमयमिति ज्ञापनायोक्तमिति ज्ञेय ॥ ४० ॥ इति श्रीभागवततात्पर्यटिप्पण्या पञ्चमोऽध्यायः ॥ १—५ ॥

॥ हरिः ॐ ॥ स्फीतामिति श्लोके पुरग्रामपत्तनशब्दानामनेकार्थत्वभ्रांतिनिरासाय खर्वाटीशब्दयोर्दुर्गमार्थत्वेन तथा पदानां प्रमाणेनैव तात्पर्यार्थमाह ॥ मृगयेत्यादिना । जीविनः पुरुषस्य । स्थलमिति शेषः । कीर्त्यते बुधैरिति सर्वत्र सम्बध्यते । अतिस्फीतं अतिसमृद्धियुक्तं यज्जलस्थलं जलमध्ये विद्यमानं स्थलं तत्पत्तनमिति कीर्त्यते इत्यर्थः ॥ ११ ॥ आनदेति श्लोकार्थे उभयमित्यस्य हरिर्जगच्चेत्युभयमित्यर्थभ्रांतिनिरासायोभयस्यार्थं वदन् उभयं नापश्यमित्यस्य तात्पर्यार्थमाह ॥ उभयमिति । तमेव परमात्मानमेव ॥ २१ ॥ इति श्रीभागवततात्पर्यटिप्पण्या षष्ठोऽध्यायः ॥ १—६ ॥ छ ॥

॥ हरिः ॐ ॥ शम्याप्रास इति श्लोकार्थे शम्याप्रास इत्यस्य दुर्गमार्थत्वेन विवक्षितार्थाप्रतीतेस्तमाह ॥ यत्राश्रमे शम्या शूर्पं च कृष्णाजिनं च शम्या चेति श्रुत्युक्तं शम्यानामकं यज्ञसंबंधिकाष्ठविशेषं प्राप्य भूमौ आक्षिप्य तत्र तदुपरि शाला यज्ञशालां कृत्वा तत्र यज्ञाः क्रियन्ते । स आश्रमः शम्याप्रास इत्युच्यत इत्यर्थः ॥ २ ॥ भक्तियोगेनेति श्लोके व्यासो भक्ति योगेन मनसि स्वमनसि पूर्णं पुरुषमपश्यदिति वेदव्यासस्य भक्तियोगेनेश्वरापरोक्षज्ञानमुच्यते । तत्र व्यासः कश्चिदपरिरिति भ्रांति निरासायापेक्षितं पूरयन्नन्वयं दर्शयति ॥ भक्त्येति । प्रणिहिते । हराविति शेषः ॥ ४ ॥ भर्तुः प्रियमिति श्लोके तस्य भर्तुर्दुर्योधनस्य विप्रियमेव द्रौपदीसुतहननस्य दुर्योधनप्रियत्वमुच्यते । तदयुक्तं । तथात्वे दुर्योधनेन तदर्थं द्रौणेरभिषेको न कर्तव्यः स्यादित्यतस्तद्वाक्यं सम्यग्योजयति ॥ स्वात्मन एवेति । अनेन विप्रियमेव तस्येति भागवतस्थतस्यैवपदस्यैवकारेणा न्वयमुक्त्वा स्वात्मन इति व्याख्यायान्वयः प्रदर्शितः । एवमेवकारस्य तस्येत्यनेनान्वयं प्रदर्श्यार्थमुक्त्वेदानीं यथास्थितान्वयेनाप्यर्थ माह ॥ प्रयोजनेति । सर्वं । प्रेक्षावतामिति शेषः । नन्वेवं कुतो व्याख्यायते । दुर्योधनस्यैव विप्रियं किं न स्यादित्यतोऽत्र

बाधकमाह ॥ तस्येति । हि यस्मात् । तस्य दुर्योधनस्य । एतत्प्रियमिति । अस्वापे सौप्तिके पर्वणि । उक्त ॥ १४ ॥ ननु ता सात्वयन्माह किरीटमालीत्यारभ्याध्यायपरिसमाप्तेर्यदर्जुनस्य द्रौण्यनुगतत्वतद्बधकत्वादिकमुच्यते तदयुक्त । भीमसेनस्य द्रौण्यनुगत त्वादिप्रतिपादकग्रंथांतरविरुद्धत्वादित्यतोऽस्य ग्रथस्य सप्रमाणक प्रतिपाद्य प्रदर्श्य ग्रंथांतरविरुद्धत्वादित्यतोऽस्य ग्रथस्य सप्रमाणक प्रतिपाद्यं प्रदर्श्य ग्रंथांतराविरोध परिहरति ॥ स्वप्न इति । अयं ग्रथः । स्वप्नो द्रौणिदृष्टस्वप्नार्थानुवादक. । आत्मनो बधन च । अर्जुनेनेति शेषः । तस्मात् द्रौणिदृष्टस्वप्नार्थानुवादकत्वात् । अस्य ग्रथस्य । ऐषीकविरोध ऐषीकाख्यग्रथाविरोध इत्यर्थ. ॥ १५–५७ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां सप्तमोऽध्यायः ॥ १–७ ॥ छ ॥

॥ हरिः ॐ ॥ तथा परमेति श्लोके भक्तियोगविधानार्थमित्यस्य भक्तियोग विधातुमिति प्रकृतासगतार्थभ्रातिनिरासाय विवक्षितमर्थमाह ॥ भक्तियोगेति । अनेन भक्तियोगो विधीयते येन श्रुत्यादिप्रमाणन तद्भक्तियोगविधान तस्यार्थ विषयभूत त्वा स्त्रियो वय कथं पश्येमहीति भागवतवाक्य व्याख्यान भवति ॥ २३ ॥ भवत इति श्लोकार्धेऽपुनर्भवदर्शनमित्यस्य अपुन र्भवस्य मोक्षस्य दर्शनमिति प्रकृतासगतोऽर्थः प्रतीयतेऽतः प्रकृतसगतमर्थमाह ॥ अपुनरीति । अनेनापुनर्भवस्य मोक्षानदस्य दर्शनं भोगो येन त्वद्दर्शनेन तत्तथेति भागवतपद व्याख्यात भवति ॥ २८ ॥ समं चरतामिति श्लोकार्धे सर्वत्र देवदत्यादि-सर्ववस्तुषु समं चरंतं समानसुखादिप्रदमित्यन्यथाप्रतीतिनिरासाय समपदस्य तात्पर्यार्थमाह ॥ तत्तदिति । तत्तद्योग्यतया सुखादिप्रदत्वमित्यर्थः । ३१ ॥ ते वयमिति श्लोके यदुभिः सह ते पाडवा यर्हि नामरूपाभ्या युक्तास्तदा नो भवतो दर्शन भवतीत्यन्यथाप्रतीतिनिरासाय सम्यक् श्लोक योजयति ॥ यर्हीति । भवतीति शेष. । अनेन यदा भगवद्दर्शनमस्माक भवति तदैवास्मन्नामरूपादिक सार्थक । अन्यदा व्यर्थमित्युक्त भवति ॥४१॥ इति श्रीभागवततात्पर्यटिप्पण्यामष्टमोऽध्यायः ॥१–८॥ छ ॥

॥ हरिः ॐ ॥ नैनो राज्ञ इति श्लोके युधिष्ठिरेण युद्धे द्विषां वधो राज्ञ एन पाप न प्रत्युत धर्म एवेति इत्यर्थप्रतिपादक शाश्वतं वचोऽस्तीत्येवोक्त । न तूदाहृत । अतस्तात्पर्यकृदाचार्यैः स्वय तदुदाहरति ॥ यः पदातिमिति । पदाति पादचार । सादिनं अश्वारूढां । गजरथौ गजरथसहितौ । तस्थौ । तत्र गजहताऽश्वमेध । वाजीरथहता राजसूययाजीत्यर्थः ॥ ५ ॥ मम निशितेति श्लोकार्थे कृष्णस्य भीष्मशरभेदितशरीरत्वमुच्यते तच्च प्रमाणबाधितमित्यत' प्रमाणनैव तत्तात्पर्यार्थमाह ॥ असंग इति । सुरेष्वपिपदेन मनुष्यादिषु च क्रीडतीत्यन्वयः । मध्यया विद्धोऽविद्धो वेति सशयरूपदृष्ट्या माहयन्नित्यन्वयः । मुक्तेषु कथचन विरुद्धत्वादिप्रकारेषु केनाऽपि प्रकारेण न दृश्यते । अननैव तात्पर्यप्रमाणेन शितविशिखहतो विशीर्णदंश इत्युत्तर भागवतश्लोकस्यापि तात्पर्यार्थं उक्तो भवति ॥ ४१—४५ ॥ इति श्रीभागवततात्पर्यटिप्पण्या नवमोऽध्यायः ॥ १-९ ॥ छ ॥

॥ हरिः ॐ ॥ शशास गामिति श्लोकार्थे प्रणिध्युपात्तमित्यत्र प्रणिधिशब्दस्य दुर्गमार्थत्वेन विवक्षितार्थप्रतीतः प्रमाण नैव विवक्षितमर्थमाह ॥ आमात्या इति ॥ ४ ॥ नन्वश्रूयंताशिष इति श्लोके नानुरूपाश्चेति निर्गुणस्य गुणात्मन इति च परस्पर विरुद्ध कथमुच्यत इत्यतः प्रमाणमुदाहृत्य विरोधं परिहरति ॥ पालनेति । यतःपद्मपुराणे ब्रह्माडातःस्थितहरिरूपस्य जगताऽ व्यक्तत्वात्पालनादिकर्तृत्वमंडाद्बहिःस्थितहरिरूपस्य व्यक्तपालनादिकर्तृत्वाभावश्चोक्तः। अतः कारणान्नानुरूपानुरूपाश्चेति भागवतोक्ति' रिति शेषः । अनेन द्विजे रता आशिषः पालनादिकर्तृत्वप्रतिपादकाशीर्वादा निर्गुणस्य सत्त्वादिगुणकार्यब्रह्माडे स्थितस्यात्मनो हरिरूपस्यानुरूपा व्यक्तिरूपेण पालनादिकर्तृत्वप्रतिपादका इति भागवतवाक्य व्याख्यात भवति ॥ २० ॥ अग्रे गुणेभ्य इति श्लोकार्थे सुप्तिशक्तिष्वित्यत्र शक्तिशब्दस्य हरिस्वरूपभूतशक्त्यर्थत्वभ्रांतिनिरासाय तत्तात्पर्यार्थमाह ॥ सत्त्वादीति । अनन शक्यत इति शक्तयः सत्त्वादयः सुप्ताश्च ताः सत्त्वादयश्चेति तत्पदविग्रहः सूचितो भवति ॥ २२ ॥ स एव भूय इति श्लोके

स्वजीवमायामित्यस्य जीवगुणाच्छादकदुष्टजडप्रकृतिमित्यर्थभ्रांतिनिरासाय प्रमाणेनैवार्थं दर्शयंस्तेनैव प्रमाणेन अथातस्थात्ममाया गुणमायाशब्दयोरप्यन्यथाप्रतीतिनिरासायार्थमाह ॥ श्रीभूदुर्गेति । द्वांते श्रूयमाण इतिशब्दः प्रत्येकमभिसबध्यते । महात्मनः हरेर्भिन्ना या सा जीवमाया स्यादित्यन्वयः । तदिच्छा हरीच्छा । अत्रैव श्लोकेऽनामरूपात्मनीत्यस्य सर्वात्मना नामरूपराहित्या र्थत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अप्रसिद्धेरिति । तद्गुणानां विष्णोस्तत्तन्नामप्रतिपादितगुणानां । अप्रसिद्धेः सर्वलोकप्रसिद्धमात्रगुणप्रतिपादकनामराहितः प्राकृतरूपरहितत्वादरूप इति भागवतपदद्वयार्थ उक्तो भवति ॥ २३ ॥ यदा ह्यधर्मे णेति श्लोकार्धे सात्वत इत्यस्य प्राकृतसत्त्वगुणबद्ध इत्यर्थभ्रांतिनिरासाय विवक्षितमर्थमाह॥ सात्त्विकानामिति । अनन सात्वतां सात्विकानामयमनुग्राहकः सात्वत इति तत्पदविग्रहः सूचितो भवति । ननु भवेदयमर्थः । यदि हरेः सात्विकानुग्राहकत्वे प्रमाणं स्यात् । न चैतदस्तीत्यतस्तत्र प्रमाणमाह ॥ अगुणोऽपीति । क्लिश्यत इति णिजतस्य क्लिशेर्व्यत्ययेन कर्मणि रूप क्लेशयतीत्यर्थः । सात्वतशब्दस्य सात्विकानुग्राहकत्वरूपो योऽर्थ उक्तस्तत्र प्रमाण वदंस्तेनैव प्रमाणेन तस्यार्थांतरमाह ॥ सात्वत इति । सात्वि कस्नेहात् सात्विकेषु स्नेहवत्त्वात् सात्वत इत्युच्यते । हरिरिति शेषः । सत्त्वो ज्ञानदरूपत इत्यनेनात्र सात्वतशब्दपर्यायः सत्त्व-शब्दः स्वार्थे ताद्धितप्रत्यय इत्युक्त भवति । अत्रैव श्लोकार्धे धर्मादिक दधदित्युक्त्या धर्मादेरीश्वराभेदभ्राति प्रमाणेनैव धर्मादि-शब्दार्थकथनपूर्वक परिहराति ॥ धारकत्वादित्यादिना । हरेर्धर्मादिभेदभ्रांतिं प्रमाणेन निराकृत्येदानी धर्मादिक दधद्रूपाणि च दधदिति भागवतवाक्ययोजनाभ्राति परिहरति ॥ एवविधेति । एवविधगुणा धर्मादिपदवाच्यधारकत्वादयो गुणाः स्वरूप येषां हरिरूपाणां तानि तथा । अनेन धर्म धारकत्वगुणस्वरूपं रूपमेव तत्तद्गुणस्वरूपाणि दधदिति भागवतवाक्ययोजना सूचिता ॥ ॥२६॥ नन्वेताः पुरेति श्लोके उच्यमानाः स्त्रियः पूर्वजन्मनि स्त्रियो न वा । आद्ये कर्मकरणात्प्रागेव प्राप्तस्त्रीत्वानामेतासां स्त्रीत्वप्राप्तेरत्र

श्लोके कर्मकरणोक्तिरयुक्ता। द्वितीय तर्हि ताः काः केन कर्मणा किमर्थं च स्त्रीत्वमापुरित्यतो द्वितीयपक्षमङ्गीकृत्य तन्मूलरूपादिक प्रमाणेनैव दर्शयति ॥ अग्निपुत्रा इति । अग्निपुत्रा इत्यनेन तन्मूलरूप दर्शितं । तपसेत्यनेन कर्म दर्शित। वासुदेव भर्तारमापिर इत्यनेन वासुदेवरूपभर्तृप्राप्तिरूपं प्रयोजनं दर्शितं ॥ ३१ ॥ अजातशत्रुरिति श्लोके स्नेहादिति पदस्य मुख्यामुख्यन्यायेन माहात्म्यज्ञानपूर्वकस्नेहार्थत्व प्रतीयते । तदयुक्त । कृष्णे माहात्म्यज्ञानपूर्वकस्नेहवतो युधिष्ठिरस्य कृष्णरक्षणार्थं स्वसेनानियोगासम्भवादित्यतस्तदर्थमाह ॥ स्नेहेति । अनेन सेनानियोगकाले युधिष्ठिरस्य कृष्णमाहात्म्यज्ञानस्याभिभव उक्तो भवति ॥ ३२ ॥ स्राय भेज इति श्लोकार्धे गविष्ठ इत्यस्य गा गत इत्यनेनकार्थत्वभ्रान्तिनिरासाय तदनूद्य सम्यग्व्याचष्ट ॥ गविष्ठ इति । गविष्ठ' आदित्यः। कुत इत्यतः सूर्यलिंगेन गविष्ठस्यादित्ववादिनी श्रुतिमाह ॥ असावेति । अत्रोक्ताप्सूदयास्तगमन सूर्यलिंग तेन गविष्ठस्य सूर्यत्व सिद्धिः । अनेन भागवते गविष्ठो गा गत इत्यत्र गोशब्द उदकवाचीत्युक्त भवति । तन गविष्ठोऽप्सूदितसूर्यो गा गतोऽप्स्वस्त गत इति तत्पदार्थः सूचितः ॥ ३७ ॥ तत्राब्दकोटीति श्लोकार्धे न इत्यस्य केवलयादवार्थत्व प्रतीयत । तेन यादवानामव कृष्णवियोगेनैकक्षणोऽब्दकोटिसमो भवति । न तु पाण्डवादीनामिति भ्रान्तिनिरासाय न इत्यस्य विवक्षितमर्थमाह ॥ कुरूणामिति । मधूना मधुकुलोत्पन्नानां यादवाना ॥ ४६ ॥ यत्तदीशनमिति श्लोके यथा बुद्धिस्तदाश्रया प्रकृतिगुणबद्धा न तथा हरिः प्रकृतिगुणैर्युज्यत इति बुद्धेर्व्यतिरेकदृष्टान्तत्वभ्रान्तिनिरासाय तदतिरिक्तव्यत्यासदृष्टान्तत्व वदन् व्यत्यास च विवृणोति ॥ तदाश्रयेति । तदाश्रया बुद्धिरित्यस्य व्यात्यासदृष्टान्त इत्यनेनान्वयः । व्यत्यासत्वविवरण तज्ज्ञानिनामित्यादि । तन कैमुत्येनार्थज्ञापको दृष्टान्तो व्यत्यासदृष्टान्त इति व्यत्यासदृष्टान्तस्य लक्षणमुक्त भवति । अनन तदाश्रया तस्य हरेराश्रया सर्वाश्रयत्वादिविषया बुद्धिः हरिः सर्वाश्रयत्वादिबुद्धिमान्पुरुषस्तदाश्रयात् तदाश्रयाऽपि प्रकृतिस्थोऽपि तद्गुणैः प्रकृतिगुणैर्यथा न युज्यत तथा

हरिः प्रकृतिस्थोऽपि न युज्यत इति भागवतवाक्य व्याख्यातं किमु वक्तव्यमिति । ननु कैमुत्येनार्थज्ञापको दृष्टान्तो व्यत्यासदृष्टात इति यल्लक्षणमुक्त तदयुक्त । व्यत्यासदृष्टांतस्यैवाप्रामाणिकत्वात् । न ह्यप्रमाणस्य शशविषाणादे केनचिल्लक्षणमुच्यत इत्यतस्तत्र प्रमाणमाह ॥ व्यत्यास इति । दार्ष्टांतिकेन साक्षादन्वयरहितो यो दृष्टातः सोऽनन्वयदृष्टातः । स त्वनताकाशवत्पश्यान्नित्यादि तृतीयाध्ययायचतुर्थाध्यायप्रथमाधिकरणोक्तो द्रष्टव्यः । तत्राकाशो ज्ञानस्य साक्षाद्दृष्टातस्तद्द्वारा व्यासस्य दृष्टातो ज्ञेयः । एतदेव जयतीर्थस्वामिभिर्यथाऽऽकाशो व्याप्तस्तथा ज्ञानमिति विवृत । प्रसिद्धः सर्वलोकशास्त्रसिद्धो महानसादिक । अभूता न कदाऽपि जातो । योऽर्थो दृष्टातत्वेनोक्तः सोऽभूतदृष्टातः । स तु ‘ यमजाम्युदवाहवर्जितो यदि जाबूनदवारि सश्रयेत् । कनकद्युतिम च संगवात्तुपमीयेत स तेन नीलभा ’ स० ७, श्लो० ५२. इति मध्वविजयोक्ता द्रष्टव्यः । सर्वसहारकः सामान्यव्याप्तिग्रहणस्थलं यदित्थं तत्तथा यथा सप्रतिपन्नमित्यादि । अत्र दृष्टातपदेन दार्ष्टातिकगतप्रकृतसाध्यसाधनरूपद्विधर्मतदातिरिक्तैकधर्मयोरन्यतरध र्मेण सादृश्ययुक्तो विवक्षितो न कश्चिद्दोषः ॥ ७५ ॥ तं मेनिर इति श्लोके मतयो यथा मेनिर तथा मूढा मेनिर इति मतीना दृष्टातत्वमुच्यत इति भ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ मतय इति । अनेन यथाशब्दस्यानतिक्रमार्थत्वं यथा सादृश्य इति समासाभावश्छादस इति सूचितं ॥ ७६ ॥ इति श्रीभागवततात्पर्यटिप्पण्या दशमाऽध्यायः ॥ १–१० ॥

॥ हरिः ॐ ॥ ब्रह्मण्य इति श्लोकार्धे परीक्षिता दाशरथिरामवद्ब्रह्मण्यत्वं सत्यसधत्व चाच्यते । तदुभय प्रमाणबाधित मित्यतस्तदभिप्रायमाह ॥ राम इति । दाशरथिर्यथेत्यतःपर इत्युक्तदृष्टात इति शेषः पूरणीय । नन्वधिकदृष्टातस्याप्राणिकत्वा दयुक्तोऽयं दृष्टात इत्यतस्तत्र प्रमाण दर्शयन् तत्प्रसगात्तेनैव प्रमाणन समानदृष्टातावपि दर्शयति ॥ ऊर्णनाभीति । अनेन किंचिद्ब्रह्मण्यत्वाद्यभिप्रायेणैव यथा राम इत्युक्त । न तु रामे यथा ब्रह्मण्यत्वादिकमस्ति तथा परीक्षित्यप्यस्तीत्यभिप्रायेणोक्त

मित्युक्तं भवति ॥ १९ ॥ आपूर्यमाण इति श्लोके परीक्षित् काष्ठाभिर्यथाऽऽपूर्यमाणस्तथा पितृभिरापूर्यमाण इति परीक्षित एव काष्ठाभिरापूर्यमाणत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ पूरयंतीति । अनेन काष्ठाभिरुडुप इवेति भागवतवाक्य व्याख्यात भवति ॥ ३१ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामेकादशोऽध्यायः ॥ १-११ ॥ छ ॥

॥ हरिः ॐ ॥ प्रत्युज्जग्मुरिति श्लोकार्धे प्राणांस्तन्व इवागतानित्युक्तः शरीरदृष्टांत इदानीतनमनुष्यशरीरमेवाभाति । तदयुक्त । इदानीतनमनुष्यादिशरीरस्य प्राणागमन तेनोत्थान च दृश्यते । अतोऽयुक्तमित्यतः प्रमाणेनैव भागवतोक्त दृष्टांतं दर्शयति ॥ तत्प्राण इति । अनेन त प्रपदाभ्यां प्रापद्यत ब्रह्मेम पुरुषमित्याद्युपनिषदुक्तचतुर्मुखपुरुषशरीरमेव भागवतोक्तदृष्टांत इत्युक्त भवति ॥ ५ ॥ इत्युक्त इति श्लोके यदुकुलक्षय पूर्वजात विनेत्यन्यथाप्रतीतिनिरासाय वक्ष्यमाणप्रमाणानुसारेणापाक्षितशेष पूरयाति ॥ यदुकुलेति । एष्यत् एष्यंतं । अस्मिन्नेव श्लोके यथाऽनुभूतं भ्रमतेत्यनेन विदुरस्य भ्रमणं वर्णितस्यानुभवश्चोच्यते । तत्र भ्रमण नाम किं कस्योपदेशेनानुभूत चेत्यपेक्षायां तदुभयं प्रमाणेनैव दर्शयिष्यन्नादावुपोद्घातसगत्या तदुपयुक्त प्रमेय तेनैव प्रमाणेन दर्शयन्नेष्यदिति स्वोक्त च दृढयति ॥ शापं श्रुत्वेत्यादिना । सुप्रीतमेव चेति चशब्दः । ज्ञात्वेत्यनेन सबध्यते । कृष्णमुदासीनमिव तथा सुप्रीतमेव श्रुत्वेत्यन्वयः । तं कृष्ण । उपह्वरे एकांतस्थले । उपोद्घातसगत्या यदर्थमिदं प्रमेयमुक्तं तदिदानीमाह ॥ विदुरमिति । अत्र तीर्थयात्रास्थमित्यनेन विदुरस्य भ्रमतेत्युक्त भ्रमण व्याख्यातं । स उद्धवः कथयित्वत्यनन कस्यापदेश नानुभूतमित्यपेक्षा पूरिता भवति । षड्विंशद्वर्षगमने षड्विंशद्वत्सराणां गमनेऽतिक्रमे सति । आत्मनः स्वस्य । तेषां कलापग्राम वासिनां । एतत्तच्च । विदुरो यदुविनाश विनाऽन्यदनुभूत सर्वमूचिवानित्यन्वयः । यदुविनाश तदानीमज्ञातत्वान्नाचिकानिति भ्रांतिं निराकुर्वस्तद्वचने हेतुमाह ॥ षड्विंशादिति । न केवलं पद्मपुराणबलादेव यदुकुलक्षयमित्यत्रैष्यादिति शेष पूर्यते । किंतु भाग

वतज्ञापकादपीति भावेन भागवतवाक्यं पठति ॥ तावदिति । अत्र इतिशब्द आद्यर्थकः । तेन तत्राथ सुश्राव सुहृद्विनष्टिमित्याद्यु त्तरग्रथः सगृह्यते । उपरि च तृतीयस्कधे चोक्तामिति शेषः । नन्वनेन ग्रंथेन यदुनाशस्यैष्यत्व कथ ज्ञायत इति चेत् । इत्थ । अत्र ग्रथे तीर्थयात्रां कुर्वतो विदुरस्य प्रभासं प्रति गच्छतः सुहृद्विनष्टिश्रवणमुच्यते । श्रूयमाणा सा सुहृद्विनष्टिरेष्यत्कालीनैव । तदानी यदुनाशाभावात् । कुतस्तदानी यदुनाशाभाव इति चेन्न । इत्थ व्रजन् भारतमव वर्षमित्यादिग्रथे विदुरस्य प्रभास प्रति गमनकालेऽजितेन कृष्णेन सहैव पार्थो युधिष्ठिरः क्षिति शशासेति राज्यकर्तुर्युधिष्ठिरस्य कृष्णसहावस्थानत्वोक्तेः । धर्मकृष्णसहाव स्थानकाले यदूनामवस्थानस्य प्रमाणसिद्धत्वात् । एतदेव प्रमेय भगवत्पादैरुपदिश्य पर ज्ञानमुद्धवायामुमाश्रमामित्यारभ्य मैरयमत्ता इत्यनेन भारततात्पर्यनिर्णयग्रथेन विवृत । विदुर चागत पुनरित्यत्रापि विदुरतीर्थयात्राकाल यदुकुलावस्थानोक्ते एष्यन्नेव यदु कुलक्षयो न तु जात इति ज्ञायते । एवं भागवतज्ञापकमुक्त्वेदानीं भारतज्ञापक चाह ॥ भारते चेति । अत्र विदुरस्य युधि ष्ठिरभावानंतरमेकविंशद्वर्षेषु गतेषु पश्चाद्यदुकुलक्षय उक्तस्तेन विदुरभावेन तीर्थयात्राकाले यदुकुलावस्थान ज्ञायते । अतश्चैष्यन्नेव यदुकुलक्षय इत्यवसीयते ॥ १२ ॥ अविभ्रादिति श्लोके अर्यनामको यमो यावद्वर्षशत शूद्रत्व बभार । तावद्वर्षशतमधिकारिषु पापानुसारेण दडमविभ्रदित्यन्यथाप्रतीतिनिरासायापक्षिताध्याहारेण त योजयति ॥ योऽर्यमेति । वर्षशत यावत् । यावति काले भवति तावत्काल शतवर्षात्मक काल शूद्रत्व बभारेत्यर्थः । यो यमः स एव शूद्रत्व बभारत्युक्त्या यः सर्वांशेन विदुरो जात इति भ्रांतिं प्रमाणेनैव परिहरति ॥ न देवानामिति । अशांशेन स्वरूपभूतांशांशेनेत्यर्थः । सर्वे त्विति । तुरवधारणे । आजानजादय इत्यनेन सबध्यते । तेन तदतिरिक्तमनुष्यादीना सामस्त्येन श्राव जानीरीति द्योतित भवति ॥ १५ ॥ अत्यक्राम दिति श्लोकार्धे कालशब्दश्च जडकालार्थत्वभ्रांतिमुदाहृतप्रमाणशेषेणैव परिहरति ॥ सहर्तेति । सहर्तेत्यनेन काल सहरण इति

धातोर्निष्पन्नकालशब्दस्य संहर्तृत्वं प्रवृत्तिनिमित्तमित्युक्त भवति ॥ अथवा ॥ गुणसर्वस्वमित्यनेन कालज्ञाने कल कामधेनौ कल बंधने इत्याद्यर्थककलधातोर्निष्पन्नकालशब्दस्य ज्ञानादिगुणपूर्णत्वं विष्णो प्रवृत्तिनिमित्तमित्युक्त भवति ॥ १८ ॥ अथोदीचीमिति श्लोकार्धे स्वैरज्ञातगतिरित्यस्य स्वैरज्ञातगतिरित्यर्थत्वेनाभिज्ञातगतिरिति पूर्वश्लोकस्थपदेन गतार्थत्वभ्रांतिनिरासाय तदनूद्य यथावद्व्याचष्टे ॥ स्वैरज्ञातेति । अनेन स्वैरं स्वेच्छानुसारेण ज्ञाता विवक्ता विवेकेन ज्ञाता गतिर्भगवन्मार्गो येनेति तत्पदार्थ उक्तो भवति ॥ २८ ॥ गुहां प्रविष्ट इति श्लोकार्धे पितराविव्यस्य विवक्षितार्थाप्रतीतेरनुवादपूर्वकं विवक्षितमर्थमाह ॥ पितराविति । सौबल्याः पृथग्ग्रहणात्कुंती गृहीतेति भावः । न चापश्यदित्यस्य चाक्षुषाभावाज्ञानार्थत्वभ्रांतिनिरासायानुवादपूर्वक विवक्षितमर्थमाह ॥ न चेति । विपद्भावो मरणभावनं । भा दीप्तौ औणादिको वप्रत्ययः । कुत एवं तत् । चाक्षुषज्ञानाभावार्थः किं न स्यादित्यत आह ॥ अन्यथेति ॥ ३१ ॥ एव राजेति श्लोके धृतराष्ट्रस्य केवलविदुरोपदेशेनैव गृहत्यागो वनवासश्च तथा धर्मराजमपृष्ट्वागमन चोच्यत इति भ्रांतिनिरासाय सिंहावलोकनन्यायेन प्रमाणेनैव तत्तात्पर्यार्थं दर्शयन् अवसादित्युक्तवासस्य कालानुक्तेः कालं च तेनैव प्रमाणेन दर्शयति ॥ स्कान्दे चेति । चशब्दः प्रमाणांतरसमुच्चयार्थः । राज्ञा युधिष्ठिरस्य । तुशब्दश्चार्थे । विदुर इत्यनेन संबन्ध्यते । विदुरश्च वने वासमकरोदित्य न्वयः । विदुरस्यापि धृतराष्ट्रवद्वत्सरत्रय वनवासप्राप्तौ तदपवादं कुर्वन्नजातशत्रुः कृतमैत्र इत्यारभ्याध्यायपरिसमाप्तेर्भागवतस्य सकोचेन तात्पर्यार्थं चाह ॥ तदिदक्षार्थमित्यादिना । विदुर इत्यनुवर्तते । राजानं युधिष्ठिर । ततो धृतराष्ट्रादीन् दृष्ट्वा स्वग्राममप्राप्यनतर । धृतराष्ट्रादिकं दावाग्निना दग्ध श्रुत्वेत्यनेन विदुरस्यैक्यानतर धृतराष्ट्रादेः किंचित्कालमवस्थानमुक्त । तेन विदुरस्य धृतराष्ट्रवद्वत्सरत्रय वनवासो नास्तीति ज्ञायते । इदं प्रमेयं महाभारततात्पर्यनिर्णये एकत्रिंशाध्याये स्पष्टमुक्तं । अत्र ततो दावाग्निना दग्धं धृतराष्ट्रं च सौबली । श्रुत्वा कुंती चति

तात्पर्यवाक्येन न चास्मत्पितरौ चेति सौबली चेति भागवतवाक्यं व्याख्यात श्रुत्वा स्वयमेव मनसि ज्ञात्वा ॥ २८–३१ ॥ चिता ते प्रापुरित्यादि तात्पर्यसार्धश्लोकेन तत्र संजयमासीनमित्यारभ्य बहिः स्थिता पति साध्वी तमग्निमनुवेक्ष्यतीत्यतभागवतवाक्यस्य तात्पर्यार्थ उक्तो भवति । तत्रापि उक्त्वोत्तमा गति तेषामिति तात्पर्यवाक्येन मा कचनेत्यारभ्य कालरूपोऽवतीर्णोऽस्यामभावाय सुरद्विषामित्यतभागवतवाक्यस्य तात्पर्यार्थ उक्तः । तेषा पाडुसुताना गति ज्ञानमुक्त्वा शमयामासेत्यन्वयः । तथा तपा धृत राष्ट्रादीना तात्कालिकी निष्ठा चोक्त्वेत्यनेन धृतराष्ट्रः सहेत्यारभ्य तमनुवेक्ष्यतीत्यतभागवतवाक्यस्य तात्पर्यार्थ उक्तः ॥ ३१ ॥ एवमजातशत्रुः कृतमैत्र इत्यारभ्याध्यायसमाप्तिपर्यंत भागवतग्रथस्य तात्पर्यार्थमुक्त्वेदानी तत्र श्लोके भ्राति परिहरन्नादौ अहं च व्यसित इति श्लोके न वेदेत्युक्त्या युधिष्ठिर प्रति सजयेन धृतराष्ट्रादिगतिर्नोक्तेति जाता भ्राति प्रमाणनेव परिहरति ॥ ब्रह्माडे चेति । अत्रापि चशब्दः प्रमाणातरसमुच्चयार्थः । अह च व्यसित इति श्लोकाभिप्रायस्तु वक्ष्यते । अत्रा वेति श्लोकार्धे पितृव्यपदस्य विदुरार्थत्वभ्रातिनिरासाय सिहावलोकनन्यायेन विवक्षितमर्थमाह ॥ पितृव्योऽपीति । युधिष्ठिरेण स्वस्मिन् विदुरप्रवेशस्य ज्ञातत्वेन तत्प्रश्नायोगादिति भावः । तर्हि वृद्धो हीनश्च नेत्रयोरित्युक्तस्य धृतराष्ट्रस्य पुनरुक्तिर्व्यर्थेत्यतस्त त्प्रयोजनमाह ॥ द्विरुक्तिरिति । द्विरुक्तिः अभ्यासः । तात्पर्यार्थ अर्थो विषयो यस्य ज्ञानस्य तत्तथा तात्पर्यज्ञापनाय कृत त्यर्थः । उपक्रमोपसहाराभ्यासापूर्वताफलमिति प्रमाणेनाभ्यासस्य तात्पर्यलिंगत्वे सिद्धेऽपि प्रमाणातरमाह ॥ यत्रेति । अपि- पदमवधारणे । तदित्यनेन संबध्यते । महाप्राज्ञा यत्र यस्मि वस्तुनि स्वस्याधिक तत्परतात्पर्यमस्ति तदेव वस्तु लोकानुसारतो ध्रुव निश्चयेन बहुवार वदतीत्यर्थः ॥ ३२ ॥ ननूक्तरीत्या द्वयो॰ पितृव्ययोरभावात् पितृव्याविति द्विवचनाक्तिरयुक्तेत्यतस्ता घट यति ॥ पितृव्याविति । अनेन पुमान् स्त्रियेष्विति सूत्रादेकशेष सति पितृव्य च पितृव्यश्च पितृव्याविति तत्पन्नविग्रहः

सूचितः । अत्रापि पुनरुक्तिस्तात्पर्यार्थेति ज्ञेय ॥ ३४ ॥ सिंहावलोकनन्यायेनार्थभ्रांतिनिरासाय पितृव्यपदार्थमुक्त्वे दानीं अहं च व्यसित इति भागवतश्लोकस्य धृतराष्ट्रमृते सूत इति ब्रह्मांडपुराणवचनविरोधभ्रांतिनिरासायाभिप्रायमाह ॥ मुषित इति । मुषिता सतीति शब्दः ह इति हेतुप्रकरणप्रकाशादिसमाप्तिष्वित्यमराभिधानात् । मुषितोऽस्मीति । इतिशब्द आद्यर्थकः । तेन आदिपदेन अहं व्यंसितो न वेदेत्यस्य संग्रहः । अहं व्यसितः परलोकगतिं न वेद मुषिताऽस्मीति संजयवचनं । प्रलापः प्रलापनिमित्तकमित्यर्थः ॥ यद्वा ॥ ब्रह्मांडपुराणवचनानुसारेणाह न च व्यसितो वियोजितः । अत एव वः पित्रोः परलोकगतिं वदेति अहं च व्यंसित इति पूर्वार्धं व्याख्याय तर्हि मुषिता वंचितास्मीत्युक्तिः । कुत इत्यतः प्रलापादा हेत्युत्तरार्धस्य संगतिः कर्तव्या । प्रलापे व्यर्थवाक्त्वं तु परिहासप्रलापादिष्वतथावान् भवेत्कचिदित्यादिप्रमाणसिद्धं ज्ञेयं । अनेन द्वितीयव्याख्यानेन यद्यप्यहं साध्व्या गांधार्या महात्मभिर्धृतराष्ट्रादिभिश्च मुषितो वंचितोऽस्मि । तथाऽपि धृतराष्ट्रादिभिर्न व्यसितो वियोजितः॥३७॥ नाहं वेदेति श्लोकार्धे गतावित्यस्य गृहाद्बहिः क्व गताविति गृहाद्बहिर्गमनप्रश्नत्वभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ ॥ क्वेति । अदृष्टचपेक्षया ज्ञानदृष्ट्या दृष्टपरलोकगमनापेक्षया प्रश्न इत्यर्थः ॥४०॥ यन्मन्यस इति श्लोके यत् यदि लोकं ध्रुवमध्रुवा भयरूपं वा मन्यसे तर्हि सर्वथोक्तध्रुवत्वादिप्रकारेषु केनापि प्रकारेण ते न शोच्या इति ध्रुवत्वादिप्रकारकशोच्यत्वनिषेधः क्रियत इत्यर्थ भ्रांतिनिरासायापेक्षिताध्याहारेण न शोच्या इति वाक्यं योजयति ॥ अपरिहार्यत्वादिति । अनेन सर्वथा ध्रुवादिपक्षेषु केनापि पक्षेण न शोच्याः । तथा हि । ध्रुवत्वपक्षेनित्यत्वात् । तेषां मरणाभावान्न ते शोच्याः । अध्रुवादिपक्षद्वये तु जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य चेत्यादिप्रमाणात् धृतराष्ट्रादीनां मरणस्यापरिहार्यत्वाच्चे शोच्या न हि भवतीति भागवतवाक्यं व्याख्यातं भवति ॥ ४४ ॥ धृतराष्ट्र इति श्लोके भ्रात्रादिसहितस्य धृतराष्ट्रस्य ऋष्याश्रमगमनमुच्यते । तत्र धृतराष्ट्रस्य पठन् भ्रातृसाहित्यं तद् हस्तिनपुरा

न्निर्गमनकालमारभ्य वा तदनतर मे मार्गे वोभयथाऽपि संभवादिति संशयनिरासार्थमाह ॥ गमनेति । गमनकाले । द्वितीयार्थे तृतीयार्थे पचम्यर्थे च सप्तमीति प्रमाणात् द्वितीयार्थे सप्तमी । हस्तिनपुरागमनकालमारभ्य भ्रात्रा सहित इत्यर्थः । ॥५१॥ अब्भक्ष इत्याद्युत्तरग्रथोक्त प्रमेययास्त इति वर्तमानार्थकलट्प्रयोगेण नारदवचनकाले विद्यमानमिति भ्राति निराकरोति ॥ आस्त इत्यादीति । आदिपदेन भविष्यति अनुवेक्ष्यतीति पदे ग्राह्ये । ननु वर्तमानस्यातीतार्थत्व क्कुत्र दृष्टमित्यतो दृष्टांतमाह ॥ स एष इति । इदं तु शौनकादीन् प्रति अतीतपरीक्षिद्विषयकसूतवचन । अनेन लुङादिकारे वक्तव्य व्यत्ययेन लडादिकार उक्त इत्युक्त भवति । नन्वेव व्यत्ययकरणे किं प्रमाणमित्यतोऽत्र महाव्याकरणवाक्य प्रमाणमाह ॥ सुप्तिङ्विति । सुप्सु औजसिति सूत्रोक्ताः सप्तविभक्तयः । तिङ तिप् तस् झीति सुत्रोक्ताः षट् विभक्तयः उपग्रहः आत्मनेपद । परस्मैपद च । लिंग पुल्लिंग स्त्रीलिंग नपुसकलिंगं च नरः प्रथमपुरुषो मध्यमपुरुष उत्तमपुरुषश्च । कालो भूतभविष्यद्वर्तमानरूप' । हलृहयवरडिति सूत्रमारभ्य हलिति सूत्रांतैः सूत्रैरुक्ता वर्णा अच् । अ इ उणिति सूत्रमारभ्य आजि सूत्रांतैः स्वरैरुक्ता वर्णाः स्वर उदात्तादिप्रसिद्धः कर्तृशब्दः कर्मादिकारकोपलक्षकस्तेनापि तद्यर्थकाः । कृत्तद्धितादिप्रत्यया लक्ष्यत । यङिति धातोरेकाचो हलादेः क्रियासमभिहार यङिति सूत्रोक्तयङ्प्रत्ययस्य यो यकारः सः लिङ्या शिष्याङिति सूत्रोक्ताङ्प्रत्ययस्य ङकारेण सहित' प्रत्याहारो ज्ञातव्य' । शास्त्रकृत् महाव्याकरणशास्त्रकृत् । विष्णुः । एषा सुप्तिङादीनां । व्यत्यय विशेषेणातिक्रम्य गमनमिच्छति । साऽपि व्यत्ययः । बाहुलकेन क्वचित्प्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेवेत्यादिश्लोकोक्तबव्हर्थकबहुलपदग्रहणेन सिद्धयतीत्यर्थ. । नन्वेवमस्तु व्यत्ययस्य प्रामाणिकत्व । तथाऽपि वेदव्यासेनेय व्यत्ययोक्तिः किमर्थ कृतेत्यतस्तत्प्रयोजन प्रमाणेनाह ॥ व्यासादय इति । प्रायोऽव्यत्यासेनैव वदंति क्वचिद्व्यत्ययस्यापीत्यपिशब्दार्थः । मोहनार्थमिति प्रयोजनोक्तिः । व्यत्ययोक्तेर्दुरात्ममोहनरूपप्रयोजनमुक्त्वा प्रयोजनातर

माह ॥ पौर्वापर्यमिति । यतो वस्तूनां सदा पौर्वापर्यमेव पूर्वत्वभूतकालीनत्वमेव । अपरत्व उत्तरकालीनत्वमेव उपलक्षणमेतत् । वर्तमानकालीनत्वमेव नास्ति । अतश्च हेतोर्ज्ञानचक्षुष एवैतद्वस्तु व्यत्ययाद्वदंतीत्यर्थः । सदा पौर्वापर्यमेव कुतो नेत्यत उक्तं ॥ परिवर्तनमदिति । परितः समतात् । प्रायेणेति यावत् । वर्तनात् वस्तुषु पूर्वत्वादेर्विद्यमानत्वात् । इदमुक्तं भवति । यथा पदार्थेषु चेतनस्य सदा चेतनत्वमेव न कदाऽप्यचेतनत्व भवति तथा जन्यवस्तुषु भूतस्य वस्तुनः सदा भूतत्वमेव वर्तमानत्वादिकं वर्तमानस्य वस्तुनः सदा वर्तमानत्वमेव न कदाऽपि भूतत्वादिकं । अनागतस्य सदाऽनागतत्वमेव न कदाऽपि वर्तमानत्वादिकमिति नास्ति । किंतु पुत्रत्वादिवदेकस्यैव घटस्य प्रागभावकाले उत्तरकालीनत्वमुत्पत्त्यनंतरकाले वर्तमानध्वंसकाले भूतत्वमनुभवसिद्ध । एवं सर्वे न न्यूनवस्तूनां प्रत्येकपूर्वत्वादित्रयमनुभवसिद्धमस्तीति ज्ञापनाय चेति व्यत्ययोक्तिर्व्यासादिभिः क्रियत इति ॥ ५३ ॥ विज्ञानात्मनीति श्लोके विज्ञानात्मनि परमात्मन्यात्मानं स्वसंयोज्य तं विज्ञानात्मानं क्षेत्रज्ञे जीवे प्रविलाप्य तं जीवं ब्रह्मणि परब्रह्मणि विलप्यति परमात्मनो जीवलय उच्यत इत्यन्यथा प्रतीतिनिरासाय प्रमाणेनैव श्लोकं व्याचष्टे ॥ विज्ञानात्मेति । योऽस्य विज्ञानात्मा विज्ञानात्मनामको विरिंचस्तस्मिन्नित्यन्वयः । जगदिति शेषोक्तिः । सागरद्रष्टातोक्तिस्तु विरिंचस्य लक्ष्मीस्वातिरिक्तसर्वलयाधिष्ठानत्वज्ञापनार्था । क्षेत्रज्ञ इत्यस्यैवार्थः ॥ हृदिस्थ इति । ब्रह्मणीत्यस्यार्थः ॥ व्याप्ते स्वात्मनीति । हरेः हरौ विलय शब्दार्थः ॥ एकीभवतीति । एतदेव स्पष्टयति ॥ प्रलय इति । ब्रह्मकृष्णयोः ब्रह्मणश्चतुर्मुखस्य कृष्णस्य ज्ञानानंदात्मकहृत्स्थजनार्दनस्य च यौ पूर्वोक्तौ ब्रह्मवैवर्त एव इतःपूर्वमुक्तौ प्रलयौ तौ भेदवतौ । तमेव दर्शयति ॥ अंतःस्थस्येति । तुरवधारणे । अभेदत इत्यनेन संबध्यते । तसेः सार्वविभक्तिकत्वात्तदभेदत इति तसिः प्रथमार्थे । अतःस्थस्य तस्य हरेर्बहिष्ठे तस्मिन्हरौ लयो नामाभेद एव । न तु देहनाशादिरूपः । चतुर्मुखस्य तु हरौ लयो नाम

देहनाश एव न त्वभेद इति वाक्यशेषः। अतो भेदवंताविति भावः। नन्वत्र श्लोके प्रविलाप्येत्यनेन धृतराष्ट्रस्य हरौ विरिंचलयकर्तृत्वमुच्यते। तच्च प्रमाणबाधितमित्यतः प्रविलाप्येति शब्दस्य विलापनपदार्थमाह ॥ काल इति । अनेन धृतराष्ट्रस्य विरिंचादिलयध्यातृत्वमेव। न तु तल्लयकर्तृत्वं। अतो न प्रमाणबाध इत्युक्तं भवति। ननु यदि धृतराष्ट्रस्य विरिंचादिलयध्यानमात्रं न तु तत्कर्तृत्वं तर्हि भागवते प्रविलाप्येति तत्कर्तृत्वोक्तिर्न स्यात्। अतिप्रसंगात्। अदृष्टकल्पनाच्चेत्याशंका विशेषप्रमाणेनैव परिहरति ॥ सुविद्यमानमपीति। यो विनिश्चितो विशेषेण निश्चितज्ञानी। सुविद्यमानं अत्यंतं सदा विद्यमानं। परब्रह्म। एवं पूर्वोक्तजगज्जन्मादिकर्तृत्वप्रकारेण ध्यायेत। स ज्ञानी तस्य ब्रह्मणः कर्तेति यो विजानात्स पितुः पिता इत्यादिश्रुतौ यथोच्यते। अथ तथाऽमला निर्दुष्टाः। मुनयो मननशीला धृतराष्ट्रादयः। तत्सृतेः विरिंचादिजगल्लयसृतेः कारणात्। जगद्विलापयामासुरित्युच्यते। पुराणादौ। ननु तर्हि यथा हरिज्ञानिनो हरिकर्तृत्वं यथा लयज्ञानिनाऽपि लयकर्तृत्वमेव स्यात्। ततश्च प्रमाणविरोध इत्यत आह ॥ न चेति। लयो लयकर्तृत्वं मुख्यं न। किंतु हरिज्ञानिनो हरिपितृत्वं यथाऽमुख्यं तथाऽमुख्यमतो न प्रमाणविरोध इति भावः। अत्रैव श्लोके घटांबरमिवांबरे इति दृष्टांत उक्तः। स त्वव्यवहितत्वेन हरेर्हराद्यभेदरूपलयविषय एव दृष्टांत इति न मंतव्यं। किंतु विज्ञानात्मनि संयोज्येत्युक्त्या सूचितजीवपरमात्मभेदविषयेऽप्यस्तीति भावेन तद्वाक्यं प्रमाणेनैव सम्यग्विवृणाति ॥ स्वरूपमिति। स्वरूपं च जायमानं चेति द्विधा। आकाश आकाशांशो जायमाने घटे वर्तते। तयोः घटे विद्यमानयोः स्वरूपजायमानाकाशांशयोर्मध्ये यत्स्वरूपं स्वरूपनामकमाकाशांशभूतमाकाशं तत् तथा तत् निर्भेदमेव स्वांशिमहाकाशात्यंताभिन्नमेव सत् भेदप्रतिनिधिविशेषबलाद्भिन्नवद्व्यवहारस्य विषयो भवितुं समर्थं भवति। तथा तल्लयं घटनाशे सति तच्च तदेव स्वांश्याकाशमेव भवति। तद्वत् तथा। अवतारेषु। व्यत्ययोऽतिशयकृत्सनाभेदेष्विति महाव्याकरणसूत्रादतिशयार्थकव्यत्ययेन प्रथमार्थे सप्तमी अवतारा देहस्थाश्च रामकृष्णाद्यवतारा

देहस्वरूपं च स्वयं साक्षादेव हरिः स्वाशिहर्यभिन्ना अपि भिन्नवद्व्यवहाराय शक्ता भवंति । तथा स एव केशवो जगति लीनेऽपि जगल्लयकालेऽपि । पूर्ववत् सृष्ट्यादिकाले यच्छक्त्यादिगुणवांस्तच्छक्त्यादिगुणवानेव ज्ञेयः । कुतः । निर्विशेषेण निर्विशेषत्वात् सृष्ट्यादिकाले पुनर्हरेर्विशेषाभावादित्यर्थः । एव स्वरूपांशदृष्टांतेन दार्ष्टांतिकमुपपाद्येदानीं जायमानाकाशदृष्टांतेन दार्ष्टांतिकमुपपादयति ॥ जायमानमिति । जायमानाकाशं तल्लये घटनाशे न तु नेवास्ति नश्यतीत्यर्थः । तस्मात् उत्पत्तिनाशवत्त्वात् । जायमानमाकाशं यथा महाकाशात् अव्याकृताकाशात् । भिन्न । एव जीवोऽपि हरेर्भिन्नः कीर्तित इत्यर्थः । एव तर्हि यथा घटरूपाधिनाशाज्जायमानाकाशनाशस्तथा शरीराद्युपाधिनाशाज्जीवस्वरूपनाशो भवेदित्यत आह ॥ उपाधेश्चेति । विनश्यति । स्वरूपेणेति शेषः । नित्यत्वे हेतुः ॥ स्वरूपत्वादिति । जीवस्वरूपत्वादित्यर्थः । एतल्लब्धमर्थमाह ॥ न चेति । चस्तस्मादित्यर्थे । तस्मात् जीवस्य शरीरोत्पत्त्यादिमत्त्वात् । ईशेन । अभिन्नत्व नास्ति । किंतु भिन्नत्वमेवेत्यर्थः । तर्हि तत्त्वमस्यादिश्रुतिविरोधः स्यादित्यत आह ॥ चिन्मात्रत्वमिति । चिन्मात्रत्व च तद्गुणसारत्वमेव युज्यते । तत्त्वमस्यादिश्रुतरर्थ इति शेषः ॥ ५५ ॥ ध्वस्तमायेति श्लोके ध्वस्तमायागुण इत्यस्य सर्वात्मना नष्टेच्छाख्यगुण इत्यर्थभ्रांतिनिरासाय विवक्षितार्थप्रतीते' प्रमाणेनैव मायाशब्दार्थं दर्शयन्विवक्षितमर्थमाह ॥ त्रिगुणेति । शब्दमहोदधौ । मायापदेन सत्त्वादित्रिगुणात्मिकाया गृहीतत्वादत्र भागवते मायागुणा मायागुणशब्दवाच्याः सत्त्वादय इत्यर्थः । मायाशब्देन भण्यत इति साधारणोक्त्या विष्णुशक्त्यादीनां त्रयाणामपि एकप्रकारमेव मायाशब्दार्थत्वभ्रांतिं प्रमाणेनैव परिहरति ॥ परावर इति । पर उत्तम च अवर नीच च परावरे प्रमेये पुरस्कृत्य । उभयार्थाभिधायिनः उत्तमनीचोभयार्थप्रतिपादका ये शब्दास्ते तथा । तेन प्रकारेण मुख्यामुख्यशब्दवृत्तिनिमित्त प्रकारेण । आरादेव दूरसमीप्यां साक्षात्परंपरावृत्तिभ्यामेव । मुख्यामुख्यवृत्तिभ्यामिति यावत् । परावरोभयार्थं प्रतिपादयतीत्यर्थः ॥

॥ ५६ ॥ विदुरस्त्विति श्लोके विदुरस्तीर्थनिषेवकः सन् गतेति नारदोपदेशकालादुत्तरकाले विदुरस्य तीर्थागमनमुच्यत इति भ्रांतिनिरासाय तत्तात्पर्यार्थमाह ॥ एतत्सर्वमिति । पूर्वमेव नारदोपदेशकालात्पूर्वमेव । एतत्सर्वं भविष्यद्विनाशादिप्रमेयं । ज्ञात्वा । तस्मादेव कारणात् सर्वविनाशज्ञानरूपहेतोः । विदुरस्तीर्थानि ययावित्यर्थः । अनेन नारदः पूर्वकालीनमेव विदुरतीर्थगमनमुवाचेत्युक्तं भवति ॥ ६० ॥ इति श्रीभागवततात्पर्यटिप्पण्यां द्वादशोऽध्यायः ॥ १–१२ ॥ ॥

॥ हरिः ॐ ॥ व्यतीता इति श्लोके व्यतीताः कतिचिन्मासा इत्यत्र मासशब्दः प्रसिद्धत्रिंशद्दिनात्मकमासार्थक इति भ्रांतिनिरासाय विवक्षितमर्थमाह ॥ मासशब्देनेति । अपिपदन मासशब्दस्यानेकार्थवाचकत्वमाह । स्वोक्तार्थे प्रमाणमाह ॥ तथाहीति । मासशब्देनाहन्यप्युच्यत इति स्वोक्तसामान्यतोऽहर्मात्रस्य मासशब्दार्थत्वभ्रांतिं प्रमाणेनैव परिहरति ॥ अहस्त्विति । तुरवधारणे । तदित्यभ्याहृतपदेन संबध्यते । यदत्र यदा सर्वैकान्येति दाप्रत्ययस्तु सूत्रे विधयश्छंदसि विकल्प्यत इत्युक्तेर्न भवति । यस्मिन् चिंतायुत चिंतानां अयुत दशसहस्र । बव्हीश्रिता इति यावत् । व्रजेत्पुरुषस्तदेवाहर्मासशब्दोक्त नान्यत् । एव तादृशमेव । अहःसंवत्सराद्य च संवत्सरादिशब्दोक्त च । आदिपदेन युगकल्पादिक ग्राह्य। विपरीते चिंताविपरीतसंतोषयुक्तत्वे । विपर्ययः मासादिः । अहःशब्दोक्त इत्यर्थः । एव वत्सरमाद्य चेति क्वचित्पाठः । तत्र वत्सरपदेन द्वादशचंद्रमासात्मको वत्सरो ग्राह्यः । भशब्देन द्वादशनक्षत्रमासात्मकवत्सरो ग्राह्यः आद्य पदेन युगकल्पादिक पूर्ववदेव ग्राह्य ॥ यदात्मन इति श्लोकार्धे आत्मनः स्वस्याग शरीरमुत्तिसस्पृक्षतीति कृष्णशरीरत्याग उच्यते इति भ्रांतिनिरासायागपदमनूद्य व्याचष्टे ॥ अंगमिति। ननु यद्यात्मनोऽगमित्यत्रांगशब्देन पृथिवी गृह्यते । तर्हांगित्वेन भगवान् क्रीडते पुरुषोत्तम इत्यादावप्यगपदेन पृथिवी ग्राह्या स्यात् । अविशेषात् । इत्याशंका प्रमाणेनैव परिहरति ॥ यदेति । यदा यत्र वाक्ये । आदिपदेन हान्यादिग्राह्य । तदा तस्मि

न्वाक्ये । पृथिव्याद्यंगकल्पना पृथिवी आदिपदेनांतरिक्षादिक तन्नामकस्यांगस्य कल्पना ज्ञया । तद्देवांगपदेन कल्प्यत इति ज्ञेय मित्यर्थः । तत्रोपपत्तिमाह ॥ न हीति ॥ ८ ॥ मृत्युदूत इति श्लोके कपोतोऽग्नावित्यस्यान्वयापूर्तेरपेक्षिताध्याहारेणान्वय पूर यति । अग्नाविति । अनेन भागवतेऽग्नावित्यतःपर पद करोतीत्यध्याहार्यमित्युक्त भवति । पदाध्याहारेण स्वोक्तान्वये प्रमाण वदस्तेनैव प्रमाणेनोलूकः कपयन्मन इत्याद्युर्वरितभागवतवाक्यतात्पर्यार्थमाह ॥ यदुलूक इति । अस्यार्थः । उलूका यद्वदति तद्वचन विफलं स्वश्रोतुः पुरुषस्यानिष्टफलसूचकमिति यावत् । कपोतोऽग्नौ पद कृणोति करोति यत् एतत् कपोतस्याग्नौ पदकरण मपि मोघ स द्रष्टुरनिष्टफलसूचकमिति। अनेन यदुलूको वदति मोघमिति श्रुत्यंशेन प्रत्युलूकश्च हुंकारैरित्युक्तोलूकहुकारशब्दस्यानि ष्टसूचकत्वमुक्तं भवति ॥ १४ ॥ भगवानपीति श्लोके गोविदः कृष्णोऽपि सुखमास्ते कश्चिदिति युधिष्ठिरस्य कृष्णसुखविषयक प्रश्नेन कृष्णसुखस्य कादाचित्कत्वभ्रांतिनिरासायापेक्षिताध्याहारेण सुखमास्त इति वाक्य योजयति ॥ यथाऽन्येषामिति । भविष्यति । कृष्णादिति शेषः । तथाऽऽस्ते कचिदित्यर्थः । अनेन कृष्णसंबंधिसुखप्रश्नोऽय न भवति । किंतु कृष्णनिमित्त कान्यसबंधिसुखप्रश्नोऽयमित्युक्तं भवति । कुत एतदिति चेन्न । प्रश्नविषयसुख हि कादाचित्क कृष्णसुख तु न कादा चित्क । तस्य नित्यत्वादित्याशयेनाह ॥ नित्येति । उक्तार्थे प्रमाणमाह ॥ अत्युत्तमानामिति । अत्युत्तमाना कृष्णा दीनां । यः कुशलप्रश्नः सुखप्रश्नः । युधिष्ठिरादिभिः क्रियते स लोकसुखेच्छयव । अत्युत्तमनिमित्तकलोकसुखमपेक्ष्यव । न तु कृष्णादिसुखमपेक्ष्येत्यर्थः । कुत इत्यत आह ॥ नित्यदेति । तुरवधारणे । तेषा अत्युत्तमाना । नित्यदासुखत्वादेव कचि दपि सुखप्रश्नो न विद्यत इत्यर्थः ॥ ३४ ॥ अलब्धमान इति श्लोकार्धे चिराषित इत्यस्य चिरोषित इत्यर्थो भवति । साऽ युक्तः । इदानी शीघ्रेणागतत्वेन चिरोषितत्वाभावादित्यतोऽपक्षिताध्याहारेण योजयति ॥ पूर्वमिति । अनेन पूर्व चिरोषित

इदानीं शीघ्रेणागतमतोऽवज्ञातोऽसि किमिति भागवतवाक्य योजित भवति ॥ २९ ॥ इति श्रीभागवततात्पर्यटिप्पण्या त्रयोदशोऽध्यायः ॥ १–१३ ॥ ॥

॥ हरिः ॐ ॥ पत्न्यास्तवापीति श्लोके यत्सनिधौ नृपशिरोऽग्रिमहन्मखार्थ इत्यादिश्लोकवत् कृष्णज्ञापकपदाभावादय कृष्णविषयको न भवतीतिभ्रांतिनिरासाय कृष्णज्ञापकपदमध्याहृत्यैतच्छ्लोकस्थपदाना स्पष्टमन्वयाप्रतीतेः स्पष्टमन्वय दर्शयन्पतिता श्रुमुख्य इत्यस्य पतिताश्च ता अश्रुत्यक्तमुखवत्यश्चेत्यर्थभ्रांतिनिरासाय तदर्थ चाह ॥ यत्पदयोरिति । यस्य कृष्णस्य । पदयो॰ तत्पाद्योः । पतितत्वादेवेत्यत्र तदिति पदानुवादः पतितत्वादेवेति तस्य व्याख्यान ज्ञेय । अनन तवापि पत्न्या द्रौपद्या मखे राजसूये कृत्स्नेन कृतेन महाभिषेकेणातिश्रयेन श्लाघनीय चारुकबर बधितकशसमूहः सभाया यैः कितवैर्दुःशासनादिभिः स्पृष्ट तत्स्त्रियस्तेषां दुःशासनादीनां स्त्रियः कबर विकीर्य यत्पदयोर्यस्य कृष्णस्य पदयो॰ पतिता या द्रौपद्या अश्रुमुख्य॰ भयानाश्रु पाता विमुक्तकेशैः सहितान्यकृत नितरामकरोत् तेन भूम्ना पुरुषेण कृष्णेनाद्याह मुषितो वञ्चितोऽस्मीत्युत्तरश्लोकान्वयेनाय श्लोको व्याख्यातो भवति ॥ १० ॥ तद्वै धनुरिति श्लोकार्धे भीष्मादिभिर्युद्धकाले यद्धनुरादिकमभूत्तदेवेद धनुरादिकमित्यर्थभ्राति निरासाय तद्वाक्यमनूद्य तत्र त इषव इत्येतद्दृष्टान्तीकृत्य यथावद्व्याचष्टे ॥ सरथ इत्यादिना । त इषव इत्यत्र इव यथाऽत इत्यस्य सदृशा इत्यर्थः । तथा सरथा हयास्त इति इत्यत्र त इत्यस्य सदृशा इत्यर्थ॰ । अनन भागवतस्थतच्छब्द॰ सादृश्यार्थक इत्युक्त । तत्र प्रमाणमाह ॥ सदृशेति । वाशब्दः समुच्चये । तत्त्वतो भेदे विद्यमानेऽपीत्यन्वय॰ । ननु तच्छब्दस्य तादृश्याद्यर्थत्वेऽत्र सोऽर्थः कुत ऐक्यमेवार्थः किं न स्यादित्यत आह ॥ तद्रथेति । अर्जुनरथहयाना दाहोक्तेः । भारतादाविति शेषः । धनुषस्तु समुद्रेत्युक्तत्वेन दाहाभावात् रथहयानामित्युक्त ॥ २३ ॥ इति श्रीभागवततात्पर्यटिप्पण्या चतुर्दशोऽध्यायः ॥ १–१४ ॥

॥ हरिः ॐ ॥ भक्त्येति श्लोकार्धेऽर्जुनस्य निर्मथिताशेषकषायधिषण इति विशेषणमुच्यते । तत्राशेषकषायपदार्थः को न तावत्संचितकर्मार्थः । तस्य निःशेषं नष्टत्वेनोपमर्दापरपर्यायनिर्मथनायोगात् । अत एवागामिकर्मनाशार्थः प्रारब्धं कर्मार्थ इति चेन्न । अशेषप्रारब्धस्य भोगेनैव क्षयांगीकारेण भक्त्या क्षयायोगान्निर्मथनायोगाच्चेत्यतस्तत्तात्पर्यार्थमाह ॥ ज्ञानिनामिति । अशेषपदार्थः ॥ योग्यस्येति । स एवशब्दो योग्यस्येत्यनेन संबध्यते । अनेन निर्मथित उपमर्दितोऽशेषो निर्मथितु योग्य एव कषायः प्रारब्धपापं यस्या धिषणायाः सा तथा तादृशी धिषणा यस्यार्जुनस्य स तथेति भागवतपदं व्याख्यातं भवति । स्वोक्तार्थे प्रमाणमाह ॥ महतेति । ब्रह्मदृष्टिमतो ब्रह्मापरोक्षज्ञानिनः । क्षयं फलसंकोचरूपनिर्मथनं । अत्रोपमर्दं चेति ब्रह्मसूत्रमपि प्रमाणं ज्ञातव्यं । नन्वशेषेत्यस्य योग्यस्येति सकोचेन व्याख्यान कुतः क्रियते । सर्वार्थत्वमेव किं न स्यादित्यत आह ॥ तेषामपीति । तेषां अपरोक्षज्ञानिनामपीत्यर्थः । सर्वप्रारब्धकर्मनाशे प्रमाणसिद्धकाम्यकर्मफलप्राप्तिर्न स्यादिति भावः ॥ १ ॥ कालकर्मेति श्लोकार्धे कालतमोवत्कर्मणोऽपि साक्षादेव ज्ञानावरोधकत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तद्वाक्यं सम्यग्व्याचष्टे ॥ तमआदीति । आदिपदेन कालो ग्राह्यः । देहलीप्रदीपन्यायेन कालतमसोरुभयोरपि कर्मसंबधज्ञापनार्थं मध्ये कर्मपदप्रयोगः कृतः । तात्पर्यवाक्ये भागवतक्रमोल्लंघनं तु तमसोऽतिशयेन ज्ञानरोधकत्वज्ञापनार्थं । अनेन कालकर्मतमोरुद्ध कर्मणा प्रारब्धकर्मणा संबंधेन कालेन च तमसा रुद्धं अवरुद्धमिति भागवतवाक्यं व्याख्यात भवति । स्वोक्तार्थे प्रमाणमाह ॥ ज्ञानादीति । आरब्धकर्मणामसंबद्धेन । कालादिनेति शेषः ॥२॥ विशोक इति श्लोके ब्रह्मसंपत्त्येत्यस्य ब्रह्मप्राप्त्येत्यर्थभ्रांतिनिरासाय तदनूद्य संपत्तिशब्दार्थं माह ॥ ब्रह्मेति । सपत्तिशब्दस्य संपूर्वकात् पदगाविति धातोर्निष्पन्नत्वाद्गत्यर्थानां ज्ञानार्थत्वाच्च सपत्तिरवगतिरित्युक्त । अस्मिन्नेव श्लोके संछिन्नद्वैतसंशय इत्यस्य संछिन्नो द्वैते जीवेश्वरादिभेदे सशयो यस्येत्यर्थभ्रांतिनिरासाय प्रमाणोदाहरणपूर्वकं

विवक्षितमर्थमाह ॥ भगवंतमिति । भगवंतं विना स्वातंत्र्येणैव । अन्यत्र जगति । प्रवृत्त्यादिप्रकाशनं प्रवृत्तिसत्ताप्रतीतिविषय ज्ञानं । ज्ञानिनामपि कदाचित्प्रारब्धकर्मणैव स्यात् । हे देव तात द्वैतदृष्टि स्वातंत्र्येणैव जगत्प्रवृत्त्यादिज्ञानं । मे मम । ज्ञानपरासिना छिंधि मम भविष्यति तथा कुर्वित्यर्थः । तदेव ब्रह्मपुराणोक्तद्वैतदृष्टिच्छेदनमव । अस्मिन्नेव श्लोके लीनप्रकृतिनैर्गुण्यादित्यस्य लीना च सा प्रकृतिश्च तस्या नैर्गुण्यादित्यर्थभ्रांतिनिरासाय तदर्थमाह ॥ लीनप्रकृतित्वमिति । अनेन लीनप्रकृतिरिति भावप्रधानो निर्देशः । द्वंद्वैकवद्भावश्चेत्युक्तं भवति । तस्मात् लीनप्रकृतिनैर्गुण्यात् । अत्रैव श्लोकेऽलिंगत्वादित्यस्य ज्ञापकरहितत्वादित्यर्थभ्रांति निरासाय तथाऽसंभव इत्यस्य न विद्यते संभवो यस्मादित्यर्थभ्रांतिनिरासाय च पूर्वोक्तिहेत्वनुवादपूर्वकं तत्पदद्वय व्याचष्टे ॥ तस्मादिति । अनेन लीनप्रकृतिनैर्गुण्यस्यालिंगत्वं प्रति हेतुत्वमलिंगत्वस्यासंभव प्रति हेतुत्व च सूचितं भवति । अत्रारब्ध ग्रहणेनापरोक्षज्ञानिनः प्रारब्धकर्मनिमित्तकपुनरुत्पत्तिरस्तीति ज्ञापित भवतीति । गीत भागवता ज्ञानमित्यादिश्लोकद्वयक्रमाद्यनु रोधेनादौ भगवतोपदिष्टतज्जनितं ज्ञानं कालादिनाऽवरुद्धं तदनंतरं पुनर्हरेरध्यगमत् । तदनंतरं तेन ब्रह्मज्ञानेनार्जुनविशोकत्वादिकं न तु पूर्वमभूदिति भ्रांतिनिरासाय श्लोकद्वयस्यान्वयं दर्शयति ॥ ज्ञानोदयेति । स्वोक्तार्थे प्रमाणमाह ॥ प्रकृतिमिति । आविः आविर्भावं । तिरः तिरोभावं । अत्र प्रकृति स्वात्मसंश्लिष्टामित्यारभ्य कर्माणि दग्धिर्देहोदित्यततात्पर्यवाक्येन लीनप्रकृति नैर्गुण्यादिति भागवतपद व्याख्यातं भवति । सूक्ष्मदेह चैत्यनेन तात्पर्यवाक्येन लिंगत्वादसंभव इति भागवतपद व्याख्यातं भवति । अथाऽपि समित्यारभ्य व्रजेदित्यंततात्पर्यवाक्येन ज्ञानं कालकर्मतमोरुद्धमिति भागवतवाक्यं व्याख्यातं भवति । ब्रह्म· संपत्तिशब्दार्थः ॥ जायमाना दृशिरिति ॥ २ ॥ स्वराडिति श्लोकार्धे स्वराट् युधिष्ठिर आत्मनः स्वस्य गुणैरनवमं समगु त्तमं वा पौत्र परीक्षितमभ्यषिंचादिति परीक्षितः स्वरूपेण युधिष्ठिरस्य साम्यादिकमुच्यते । तत्तु प्रमाणबाधितोऽतस्तत्तात्पर्यार्थमाह

॥ **पौत्रत्व इति** । पौत्रत्वे स्वपौत्रत्वनिमित्तेन योग्यत्वं प्रजोपास्त्यादियोग्यत्वमेवात्रानवमत्व अनवमशब्दप्रवृत्तिर्न तु स्वरूपेण युधिष्ठिरसमत्वादिकमित्यर्थः । स्वोक्तार्थेऽभिधानरूपं ब्रह्मतर्कवाक्यं प्रमाणमाह ॥ **इंद्रादीति** । वाचशब्दौ समुच्चये । अन्यषां रुद्रादीनां । इन्द्राद्युत्तमता स्वरूपेणेंद्रादिभ्य उत्तमता । वा च । समता शेषादिभिः समता । स्वके कुले स्वकुलोत्पन्नत्वनिमित्तेन । उपास्त्यादियोग्यतावत् प्रजादिसेव्यत्वादियोग्यता च । सा सर्वाप्युत्तमत्व अनवमत्व निगद्यत इत्यर्थः । यदा कृष्णस्तदाह नृपति प्रति देहि कन्यां सर्वेभ्य एव वृषवामपुरंदरा हि नासत्यदस्रसहिता इम एव चेंद्रपूर्वे च संप्रतितनयश्च हरेर्हि पश्चादिति भारतता त्पर्यनिर्णयप्रमाणादत्रेंद्रपदस्य युधिष्ठिरोऽपि वाच्यार्थः । उत्तमता पदेनानवमत्वं ग्राह्यं । तथा चान्येषां युधिष्ठिरादिव्यतिरिक्ताना मिंद्राद्युत्तमता युधिष्ठिरादिभ्योऽनवमता उत्तमत्वं समता स्वके कुले प्रजादिसेव्यत्वयोग्यता चेति निगद्यत इत्यर्थः ॥ ७ ॥ वाचं जुहावेति श्लोकद्वये केषांचित्पदानामन्वयार्थप्रतीतेरस्तौ दर्शयति ॥ **प्राणमित्यादिना** । तं अपान । तेषु प्राणापानव्यानेषु । तांश्च प्राणापानव्यानोदानसमानान् । अत्र प्राणमपान इत्यनेनेतरे परामिति भागवतवाक्यं व्याख्यातं भवति । तं व्यान इत्यनेना॰ पानं तत्परत्व इति भागवतवाक्यं व्याख्यात । त्रित्वे हुत्वेत्यस्यार्थः ॥ **समानोदानौ तेष्विति** । अथ पंचत्वं तच्चैकत्वे इत्य स्यार्थः ॥ **तांश्च मूलप्राणे इति** । सर्वमात्मनीत्यत्रात्मशब्दार्थः ॥ **आत्मा हृदिस्थो विष्णुरिति** । ब्रह्मण्यात्मानमित्यत्र ब्रह्मशब्दार्थः ॥ **ब्रह्म सर्वगतमिति** । अत्र वाङ्मनआदिशब्दानां केवलजडवागाद्यर्थत्वभ्रांतिस्तथा जुहावेत्युक्तहोमस्तु प्रक्षेप एवेति भ्रांतिश्च भवति । तन्निरासाय प्रमाणेनैव तदर्थमाह ॥ **उमा वागात्मिकेत्यादिना** । स रुद्रः । स प्राणः । आत्मरूपतः स्वरूपभूतात् अपानाज्जातः । सोऽपानः स्वरूपादेव व्यानाज्जातः । तथादानश्च व्यानतो जातः । तस्मात् उदानात् । समानो जात इत्यर्थः । ग्रंथांतरस्थलयचिंतनवाक्यतात्पर्यकथनमिदं । पक्षांतरमाह ॥ **व्यानाद्धेति** । अवधारणार्थकोऽपिशब्दद्वयं । एव

शब्दश्च जात इत्यस्यानुकर्षणार्थः । न केवलं व्यानादपानोत्पत्तिरित्येव । किंतु अपानात्प्राणस्योत्पत्तिश्चेति चार्थः । तिसृभिः त्रिभिः प्राणापानव्यानैः । त्रयाणां अथ पंचानां । अनात् सर्वचेष्टकात् । प्राणतो मूलप्राणतः । भव उत्पत्तिरित्यर्थः । त्रयाणामि त्येतद्ग्रंथांतरतात्पर्यकथनं । आत्मरूपतोऽपानात् स्वरूपादेव व्यानादित्युक्त्याऽपानव्यानयोरेव प्राणादत्यंताभिन्नत्वं न तु समानो दनयोस्तु प्राणादत्यंताभेद एवेति भ्रांतिं परिहरति ॥ एकस्यैवेति । पचपचापीत्यर्थः । एतानि प्राणादीनि । स च स तु । प्राणो मूलप्राणः । आत्मनामत आत्मनामकात् । ब्रह्मण इति भागवतस्थब्रह्मपदानुवादो विश्वरूपादिति तस्य व्याख्यानं । जुहा वेत्यादिक्रियापदार्थः ॥ विलयोत्पत्तिचिंतनमिति । ननु परिजुहावेत्यादेर्विलयोत्पत्तिचिंतनमर्थः स्यात्तर्हि जुहावेत्यादि लिङादिप्रयोगेण युधिष्ठिरस्योमादीनां रुद्रादौ लयचिंतनत्वमुक्तं स्यात् । तत्तु चितन मिथ्याचितनमेव भवेत् । युधिष्ठिरचिंतन- काले उमादीनां रुद्रादौ लयस्यासत्त्वात् । मिथ्याचिंतनं त्वनिष्टकारीत्यतः पूर्वप्रमाणोक्तमेव लयचिंतनं प्रमाणांतरेण विशदयति ॥ अस्यास्मिन्निति । भावी भविष्यन्नित्यर्थः । आहुतिर्जुहावेत्युक्तहोमशब्दार्थः । तत्कालविलयो नाशः । "अन्य आच्छिन्नत्व रूपः । तत्र हेतुः ॥ तस्य दर्शनादिति ॥ १०–११ ॥ हृदि ब्रह्मेति श्लोकार्धे पर ब्रह्म हृदि ध्यायन् युधिष्ठिरो यतो यस्मात् स्थानान्नावर्तेत तदपुनरावृत्तिस्थानं गत इति युधिष्ठिरस्येदानीमेव मोक्षप्राप्तिरुच्यत इति भ्रांतिनिरासाय सत्तात्पर्यार्थमाह ॥ नावर्ते तेति । नावर्तेत यतः । तामिति शेषः । अनेन नावर्तेत यदपुनरावृत्तित्वमुक्तं तद्बहुकालावस्थितत्वाद्युपचारेणेति सूचित ॥ १२ ॥ ते साधुकृतेति श्लोकार्धे ज्ञात्वात्यंतिकमात्मन इत्यस्यात्यंतिकमतिशयित यथा भवति तथाऽऽत्मनो जीवान् ज्ञात्वेत्यर्थभ्रांतिनि रासायापेक्षिताहृतेनान्वयप्रदर्शनेन परिहरति ॥ आत्मन इति । आत्मनः स्वरूपमात्यंतिक अति अतिक्रांत अंत नाश मर्यादात्यत शब्दात्स्वार्थ तद्धित ठक्प्रत्यये ठस्य इकादेशे सति आत्यंतिकशब्दसिद्धिरिति सूचितं भवति ॥ यद्वा ॥ अनेनातिशयितेन अतेन

नाशेन दीव्यतीति आत्यंतिकं सर्वविलयकारकमात्मनः स्वरूप ज्ञात्वाति भागवतवाक्यं तथा तन दीव्यतीति सूत्रणात्यतशब्दात् ठक्प्रत्यये आत्यंतिकशब्दरूपसिद्धिरीति च सूचितं भवति ॥ १५ ॥ इति श्रीभागवततात्पर्यटिप्पण्या पचदशोऽध्यायः ॥१-१५॥

॥ हरिः ॐ ॥ नृदेवचिन्हेति श्लोकार्थे काऽसावित्यत्र किंशब्दः प्रश्नार्थक इति भ्रांतिनिरासाय तदनूद्य सम्यग्व्याचष्टे ॥ कोऽसावितीति । इतीत्यत्र किंशब्देनाक्षेपो निंदा क्रियत इति शेषः । प्रश्नार्थक एव किं न स्यादित्यत आह ॥ कलिमिति । प्रश्नार्थे प्रश्नस्य सिद्धार्थत्वं दोषः स्यादिति भावः । अनेन यः कलिर्गां पदाऽहनदसौ कः कुत्सित इति भागवत वाक्यं व्याख्यानं ॥ ५ ॥ तत्कथ्यतामिति श्लोकेऽस्य हरेः पादाभोजे यो मकरंदस्तं लिहां तत्स्वादवता सतां सज्जनानां चरित्रं यदि विष्णुकथाश्रयं स्यात्तर्हि तत्कथ्यतामित्यन्वयपूर्तेरथवेत्येतद्व्यर्थमेव । असंगतत्वादित्यतस्तावदथवेत्यस्यार्थमाह ॥ अथवेतीति । एवं पृथक् पदार्थमुक्त्वेदानी पदद्वयतात्पर्यार्थं वदन्नन्वयप्रदर्शनेन तस्य संगतत्वं दर्शयति ॥ अन्यथा चेदिति । अन्यथा चेत् विष्णुकथाश्रयं न चेत् । तर्हि तच्छ्रवणेनायुषोऽसद्व्ययः असन् दुष्टः । व्यर्थ इति यावत् । व्ययो नाशः । भवतीत्यर्थः । अनेन भागवतेऽथवेत्यस्यायुषोऽसद्व्यय इत्यनेनान्वयो ज्ञातव्यः । तथा किमन्यैरालापैरित्येतत् अथवेत्यस्यैव व्याख्यानमिति च ज्ञेयमित्युक्तं भवति । प्रसिद्धत्वात्तत्र प्रमाणं न वक्तव्यमिति भावेन वाशब्दस्य यद्यर्थत्वेऽभिधान पठति ॥ यद्यर्थे चेति ॥ ६-७ ॥ एतदर्थमिति श्लोके अहा लोके पीयेतेति एतदर्थमित्युक्तहरिलीलामृतं वचःपानार्थमित्यर्थः । अनेन नृलोके अहा आश्चर्यकरं हरिलीलामृतं वचः पीयेत तत्पानं कुर्यादित्येतदर्थं हरिलीलामृतं वचःपानार्थमेव भगवान् मृत्युराहूत इति भागवतवाक्यं व्याख्यातं भवति ॥९॥ सारथ्या पार्षदेति श्लोके सारथ्यादिभिः कारणैः कृष्णे स्निग्धेषु स्नेहयुक्तेषु पांडुषु स्वलोकं गतेषु सत्सु नृपतिः परीक्षित्कृष्णस्य चरणारविंदे भक्तिं करोतीति पांडवमरणानंतरं परीक्षितो विष्णुभक्तिर्जाता न पूर्वमभूदित्यन्यथाप्रतीतिनिरासाया

पेक्षिताध्याहारेण तद्वाक्यं योजयति ॥ स्निग्धेष्विति । स्निग्धेषु भक्तेषु । हेतुगर्भमेतत् । भक्तत्वादेव पाडवषु । तादर्थ्ये सप्तमी । पांडवार्थं पाडवानुद्दिश्येति यावत् । विष्णोर्ये सारथ्यादयो धर्मास्तद्धर्मैर्विशेषतो भक्तिं करोतीत्यन्वयः । स्निग्धेषु पाडुषु विष्णोः सारथ्यादिभिरित्यन्वयप्रदर्शनेन पांडुष्वित्यस्याध्याहृतेनान्वयो निरस्तः । विशेषत इत्यनेन पूर्वं भक्तस्यापि परीक्षितः पांडवसारथ्यादिकरणैः कृष्णेऽतिविशेषतो भक्तिर्जातेति ज्ञापितं भवति ॥ १७ ॥ सत्यं शौचमिति श्लोकार्धे त्यागपदस्य दानपदेनैकार्थत्वभ्रमनिरासायार्थमाह ॥ त्याग इति । अत्राभिधानं पठति ॥ मिथ्याभिमानेति ॥ २७ ॥ स्वातंत्र्यमिति श्लोकार्धे सोभगमित्यस्य सुष्ठु ऐश्वर्यादिषड्गुणवत्त्वमर्थः प्रतीयते । असावयुक्तः । ज्ञानंविरक्तिरैश्वर्यमित्यादिना पुनरुक्तिदोषग्रस्तत्वादित्यतस्तदर्थमाह ॥ एकांतत इति । एकांततः केवलमित्यर्थः । स्वोक्तार्थे प्रमाणमाह ॥ शुभेकेति । अनेन व्यत्ययोऽतिशयकुत्सनाभेदेष्विति महाव्याकरणसूत्रात् व्यत्ययेन शकारस्य सकारो भकारलोपश्चेत्युक्तं भवति ॥ शमो दम इति श्लोकार्धे शमक्षमातितिक्षा शब्दानां भगवन्निष्ठत्वादिप्रसिद्धार्थत्वभ्रांतिनिरासाय सिंहावलोकनन्यायेन प्रमाणेन विवक्षितार्थमाह ॥ शम इत्यादिना । प्रियादीत्यादिपदेनाप्रियं ग्राह्यं । इदं मम प्रियमिदं ममाप्रियमिति बुद्धेरुज्झा एतद्बुद्धिराहित्यं शम इत्यर्थः । महाविरोधकर्तुश्च महाविरोधकर्तुरपि रुद्रादेः । सहनं तन्महाविरोधस्य प्रतिरोधकारणं । शमः प्रियादिबुद्धीति विष्णावुक्तं शमगुणं प्रमाणद्वयेनोपपादयति ॥ स्वयं सर्वस्येति । स्वयं साक्षात्कर्तृत्वादित्यन्वयः । सर्वस्य प्रियाप्रियादेर्जगतः । तस्य हरेः यतः कारणात् । हरिः स्वयमेव कर्ता । अतोऽस्य सर्वप्रियतः सर्वं प्रियमेव । अतः कुत्रचित् देशे काले किमप्यप्रियं नास्ति यतश्चाप्यप्रियं नास्ति । अतश्चेश्वरः शांतः शमगुणवानित्यर्थः । प्रथमे प्रमाणे प्रियाप्रियबुद्धिराहित्ये हेतुरुक्तो द्वितीये प्रमाणेऽप्रियराहित्ये हेतुरुक्तोऽतो न वैयर्थ्यं ॥ २७ ॥ गांभीर्यमिति श्लोकार्धे मान इत्यस्याभिमानोऽहंकार इत्यर्थः प्रतीयते । स त्वनह

क्रतिरित्यनेन विरुद्ध इत्याशङ्क्य शेषपूरणेन परिहरति ॥ **मान इति** । परेषां स्वभक्तानां । सकाशान्मानो बहुमानः । तत्पूज्यत्वमिति यावत् ॥ २९ ॥ **इमे चान्ये चेति** श्लोकार्धे यत्र हरौ इमे चान्ये च महागुणाः संतीति हरेस्तद्गुणानां चाधाराधेयभावोक्त्या घटं तदतःस्थजलवदत्यंतभेदप्रतीतिर्भवति । सा च नेह नानेत्यादिप्रमाणबाधितेत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **गुणैरिति** । तुरवधारणे । मुक्तानां चेति संबंधः । मुक्तपदेनैव श्रीरपि ग्राह्या ॥ ३० ॥ इति श्रीभागवततात्पर्यटिप्पण्यां षोडशोऽध्यायः ॥ १-१६ ॥

॥ हरिः ॐ ॥ **वृषं मृणालेति** श्लोकार्धे इवशब्दस्य यथास्थितान्वये मेहनाभावभ्रांतिनिरासायान्येनान्वयं दर्शयति ॥ **बिभ्यतमिवेति** । अनेन भावाभाव उक्तो भवति ॥ २ ॥ को वृश्चत्तव पादांस्त्रीनित्यादिना परीक्षिता पृष्टेन वृषभरूपेण धर्मेण न वयं क्लेशबीजानि विजानीम इत्युक्ते सति तदनंतरं पुनः परीक्षिता यदधर्मकृतः स्थानं सूचकस्यापि तद्भवेदित्युक्त । तत्राधर्मकृतः पुरुषस्य यत्स्थानं तदधर्मसूचकस्यापि भवेदिति सामान्योक्त्या सज्जनासज्जनकृतधर्मसूचकस्याधर्मकृतस्थानप्राप्तिरुच्यत इति भ्रांतिनिरासाय यदधर्मकृत इति श्लोकार्धस्याभिप्रायमाह ॥ **असतामिति** । असतां संबंध्यधर्मस्येति शेषः । सतां संबंधिपापमिति शेषः । दर्शयितुं न जानीम इत्युक्तमिति शेषः । नन्विदमत्यंतासंगतं । सदसतामधर्मिष्ठत्वाप्रतीतेरिति चेन्न । काचिदित्यादिनाऽसतां क्लेशबीजत्वेनाधर्मिष्ठत्वप्रतीतेः । ननु तर्हि कलेरधर्मः कुतो न सूचित इत्यत आह ॥ **ज्ञातामिति** । कल्यधर्मस्येति शेषः । अत एवोत्तरत्रेदानीं धर्मपादस्ते इत्यनेन कलेरधर्मनिष्ठत्वं राजा वक्ष्यति । अतो राज्ञः परीक्षितो वृषभक्लेशबीजस्वयमेव ज्ञातुं शक्यत्वात्तच्च न जानीम इत्युक्तमित्यर्थः । स्वोक्तार्थे प्रमाणमाह ॥ **यद्यधर्म इति** । तर्हीति शेषः ॥ २१ ॥ न जानीम इत्युक्तः प्रयोजनांतरं वक्तुमथवा देवेति श्लोकार्धं प्रवृत्तं । तत्र देवमायास्थितेः परीक्षिदादिसर्वाज्ञेयत्वमुच्यत इत्यन्यथा-

प्रतीतिनिरासाय तद्व्याचष्टे ॥ तरद्वेति । तस्य परीक्षितः । वाशब्दः समुच्चये । इति च ज्ञापयितुं न जानीम इत्युक्तमिति शेषः ॥ १२ ॥ ब्रह्मावर्ते इति श्लोकार्धे ब्रह्मवितानयज्ञा इत्यस्य ब्रह्मणा वेदेन वितान विस्तारो येषा त तथा तस्त च यज्ञाश्चेत्यर्थभ्रातिनिरासायार्थमाह ॥ ब्रह्मयज्ञा इति । वितान अग्निविस्तारः । अनेन ब्रह्म वेदश्च वितानमग्निविस्तारश्च ब्रह्म विताने ताभ्या यज्ञा येषां त तथा । हरिप्रीत्यर्थ वेदाध्ययनाग्निहोत्रादियज्ञवत इति तत्पदार्थ उक्तो भवति ॥ ३२ ॥ यस्मि न्हरिरिति श्लोके इष्टात्ममूर्तिरित्यस्य इष्टश्चासावात्मा च इष्टात्मा तस्य मूर्तिरित्यर्थभ्रातिनिरासाय तदनूद्य व्याचष्टे ॥ इष्टेति । अनेन इष्टेति भावे क्तः । इष्टात्मा इच्छास्वरूपा मूर्तिर्देहो यस्याति तत्पदार्थ उक्तो भवति ॥ ३३ ॥ अथैतानीति श्लोकार्धे एतानि पूर्वोक्तानि द्यूतपानस्त्र्यादिसंबंधो निषिध्यते । सोऽनुपपन्नः । सोमपानः स्वस्त्र्यादिसंबंधस्य विहितत्वादित्यतस्तत्तात्प र्यार्थमाह ॥ विहितेति । अनेन यत्रास्य यत्पानादिक निषिद्धं तेन तत्संबधो न कार्यः कलिस्थानत्वादित्युच्यत इत्युक्त भवति ॥ ४० ॥ इति श्रीभागवततात्पर्यटिप्पण्या सप्तदशोऽध्यायः ॥ १—१७ ॥ छ ॥

॥ हरिः ॐ ॥ उत्सृज्येति श्लोकार्धे विज्ञानार्जितसंस्थितिरित्यत्र विज्ञान पदस्यानेकार्थत्वाद्विवक्षितार्थाप्रतीतेः प्रमाणेनैव विवक्षितमर्थमाह ॥ विज्ञानमिति । आत्मयोग्य स्वयोग्यमोक्षसाधनस्वबिम्बज्ञानमित्यर्थः ॥ ३ ॥ तुलयामेति श्लोके सत्सगज सुखस्य मोक्षादिसुखादुत्तमत्वमुच्यते । तत्तु नास्ति मोक्षसमं सुखमित्यादिना मोक्षस्य सर्वसुखोत्तमत्वप्रतिपादकप्रमाणेन बाधित मित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ सम्यगिति । अल्पयत्नात् अपरोक्षज्ञानोत्तर सत्सगरहितश्रवणादियत्नात् । सम्यक् स्वरूपाभिव्यक्तिः अप्रारब्धनिमित्तजननस्याभावश्च जायते न तु सम्यगभिव्यक्तिः । सा यत् यतः कारणात् । स्वरूपाभिवृद्धिहेताः सम्यक् स्वरूपाभिव्यक्तिरूपवृद्धेः कारणात् । अपरोक्षज्ञानोत्तरसत्सगात् जायते । अतः सत्सगतिः । ततोऽल्पयत्नाद्धरेत्यर्थः ।

अनेन भागवतस्यापुनर्भवपदस्य सम्यक् स्वरूपाविर्भावसहितपुनर्जन्माभावरूपमोक्ष एवार्थः । न तु सम्यक् स्वरूपाविर्भावरूपमोक्षः । तथा तत्स्थसत्संगपदस्य ज्ञानोत्तरसत्संग एवार्थ इत्युक्तंभवति ॥ १३ ॥ याऽनंतशक्तिरिति श्लोकार्धेऽनत इति प्रथमातानत शब्दस्य नाशराहित्यमात्रार्थत्वभ्रांतिमपेक्षिताध्याहारेण परिहराति ॥ अनंत इति ॥ १९ ॥ व्रजंति यदिति श्लोकार्धे पारमहंस्य सत्यमित्यस्य परमहंससंबंधिसत्यं यथार्थवचनमित्यर्थभ्रांतिनिरासाय प्रमाणनैव तत्तात्पर्यार्थमाह ॥ सत्यमिति ॥ २२ ॥ प्रति रुद्धेति श्लोके उदाहृतब्रह्मांडवाक्ये व्यत्ययोऽतिशय इत्यादिवचनादातिशयार्थकव्यत्ययेन विष्णोरिति षष्ठी सप्तम्यर्थे । विष्णौ सतो मनःस्थितिरित्यन्वयः । विष्णाविति क्वचित्पाठः ॥ २६ ॥ अभूतपूर्व इति श्लोके मत्सरपदस्य मन्युपदेन गतार्थत्व भ्रांतिं प्रमाणेनैव परिहराति ॥ अप्रीतेरिति । नायं मद्वश इति या प्रीतिः सा मत्सर इतीरितेत्यर्थः ॥ २९ ॥ कौशिक्य इति श्लोकार्धे कौशिकीत्यस्य कौशिकगोत्रमस्यास्तीत्यर्थो न संभवति । तस्यांगिरसगोत्रत्वात् । नापि नद्यर्थत्वं । जलाशय मचक्षाण इति पूर्वश्लोके नद्यभावस्योक्तत्वात् । अतः कोऽर्थ इत्यपेक्षाया तदनूद्य सम्यग्व्याचष्टे ॥ कौशिकीति । अनेन कुशयुक्तः कौशिकः पाणिः सोऽस्यास्तीति तत्पदविग्रहः सूचितः ॥ ३६ ॥ तदा हि चोरेति श्लोकार्धे वरूथ इत्यत्र वरूथपदस्य विव क्षितार्थप्रतीतेरभिधानेनैव विवक्षितमर्थमाह ॥ सेनेति । गुप्तोर्गोप्त्रित्यर्थः । अनेनात्र वरूथशब्दः सेनागोप्त्रर्थक इत्युक्तं भवति ॥ ४३ ॥ तदद्य न इति श्लोकार्धे पशोरित्यस्य प्रसिद्धगवाद्यर्थत्वभ्रांतिनिरासायाभिधानेनैव तदर्थमाह ॥ विडिति । अनेन पशुपदं राष्ट्रार्थकमित्युक्तं भवति ॥ ४४ ॥ न व्यथंतीति श्लोकार्धे आत्मा गुणाश्रय इत्यस्य आत्मा परमात्मा गुणाश्रय इत्यर्थ भ्रांतिनिरासाय तत्तात्पर्यार्थमाह ॥ स्वकृत इति । अननात्मा स्वस्वरूपं गुणाश्रयः स्वकृतगुणाश्रय इति भागवतवाक्यं व्याख्यातं भवति ॥ ५० ॥ इति श्रीभागवततात्पर्यटिप्पण्यामष्टादशोऽध्यायः ॥ १-१८ ॥ छ ॥

॥ हरिः ॐ ॥ उदङ्मुख इति श्लोकार्धे समुद्रपत्न्या भागीरथ्या दक्षिणकूल आस्त इति गंगाया दक्षिणतीरे उदकाद्बहिर्वास उच्यत इत्यन्यथाप्रतीतिनिरासाय तद्विवक्षितमर्थमाह ॥ गंगायामिति । अनेन भागवते समुद्रपत्न्या इति पदात्परमुदक इति शेषः पूरणीयः । कूलपदं तु तद्भागस्योपलक्षकमित्युक्तं भवति । कुत एतदित्यतः स्वोक्तार्थे प्रमाणमाह ॥ तथा हीति ॥ १७ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामेकोनविंशोऽध्यायः ॥ १—१९ ॥ छ ॥

॥ हरिः ॐ ॥ श्यामं सदेति श्लोकार्धे आपीच्येति पदस्य विवक्षितार्थाप्रतीतेरभिधानेनैव विवक्षितार्थमाह ॥ कैशोरेति कैशोरयौवनाभ्यंतः कालो मध्यवयःकाल आपीच्यमुच्यत इत्यर्थः ॥४॥ इति श्रीभागवततात्पर्यटिप्पण्यां विंशोऽध्यायः ॥१—२०॥

॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितश्रीमद्भागवततात्पर्यनिर्णयस्य टीकाया प्रबोधिन्यां छलारीनारायणाचार्यविरचितायां प्रथमः स्कंधः समाप्तः ॥ १ ॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीमद्धनुमद्भीमभध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॥ ननु तृतीयपंचमस्कंधादावुक्तैव स्वायंभुमनुवंशादिकथा पुनश्चतुर्थस्कंधेऽपि कथमुच्यत इत्याशंकां प्रमाणेनैव प्रयोजन प्रदर्श्य परिहरति ॥ पुनः पुनरिति । द्वितीयस्तु शब्दो विशेषे । तु विशेषेणोत्तमं फलं भवतीति ज्ञापयितुकामा एव विद्वासः पुनः पुनस्तत्र कथां प्राचुरित्यन्वयः । अत्र कथा इति सामान्येनोक्त्या बहुवचनेन च सर्वत्र भागवतभारतादौ पुनः पुनः कथोक्तेरपि सार्थक्यमुक्तं भवति । अत एवात्र च तत्रभागवतभारतादाविति सर्वनामतच्छब्दप्रयोगः कृतः ॥ १ ॥ ननु शरणं तामिति श्लोके यो जगदीश्वरः स एवात्मसमां स्वसमां प्रजा यच्छत्वित्यत्रिणा विष्णुसमैकापत्यार्थमेकं विष्णुरूपमेव प्रार्थितामिति भाति तथैको मयेहेति श्लोक एकस्यैव विष्णुरूपस्य ध्यानं कृतमित्युच्यते । तदयुक्तं । तथात्वेऽथास्मदंशभूता इत्याद्युत्तरग्रंथोऽसंगतः स्यात् । तत्र वरादिदातृत्वमुच्यते । एकापत्यार्थमेकं ध्यायते । अत्रये त्रिकर्तृकत्रये कथं वरदानादिकं संगच्छते । तत्कुर्वतां तेषामकुशलत्व च स्यादित्यतः प्रमाणेनैव तात्पर्यार्थमाह ॥ ब्रह्मस्थश्चेति । त्रिपुरुषसमां विष्णुब्रह्मरुद्रसमां । त्रिमूर्त्यशान् त्रिमूर्तीना विष्णुविरिंचरुद्राणामशो भवान् । आगत्य तु आगत्येवेत्यर्थः । अनेन यो जगदीश्वरो ब्रह्मरुद्रस्थो विष्णुः स एवात्मसमात्मनामर्कब्रह्मरुद्रविष्णुभिः समां प्रजां प्रयच्छत्विति भागवतवाक्यं व्याख्यातं भवति । तथैको मयेह भगवान् विबुधप्रधान इत्यत्रैकशब्दो ब्रह्मरुद्रस्थरूपविष्णुरूपयोरैक्याभिप्रायेणैव प्रयुक्तो न त्वेकविष्णुरूपाभिप्रायेणातो नासंगतिरित्युक्तं भवति । ननु यद्यत्र विरिंचादिसमापत्याभिप्रायः स्यात्तर्हि विरिंचविष्णुरुद्रा आत्मसमामित्येव कुतो नाक्तं । जगदीश्वर इत्येक इत्यादि च किमर्थमुक्तमिति चेन्न । विरिंचविष्णुरुद्र इत्युक्ते त्रिपुरुषसमापत्यप्राप्तिरूपकार्यमेव भवति । न तु दैत्यमोहनं । जगदीश्वर इत्याद्युक्तौ तूभय भवति । अत एवमुक्तमित्याशयवानाह ॥ भावित्वादिति । अत्रत्यैवशब्दस्त्रिमूर्त्यशानित्यनेन संबध्यते । चावन्योन्यसमुच्चये । कार्यस्य त्रिपुरुषसमापत्यरूपस्य भावि-

त्वाच्च लोकानां दैत्यजनानां मोहनाय चैवमुक्तमिति भावः। अनेनैव यथा कृतस्ते संकल्प इति भागवतश्लोकस्यापि तात्पर्यार्थ उक्तो भवति ॥ २८ ॥ ननु तत्संकल्पस्येति श्लोकार्थे यदै ध्यायसि ते वयमित्यत्र ते वयमित्यनेन किं पूर्वमुक्ता विरिंचादि त्रयोऽपि गृह्यंते उत विष्णुरेव। आद्ये विरिंचादित्रयाणामपि ध्येयत्वं स्यात्। ततश्चैको मयेह भगवानिति श्लोकविरोधः स्यात्। द्वितीये विष्णोरेकत्वेन वयमिति बहुवचनानुपपत्तिरित्यतो बहुवचनोपपत्तिं करोति ॥ तत्स्थेति। तयोर्विरिंचरुद्रयोस्तिष्ठत इति तत्स्थे च विष्णश्च तत्स्थविष्णवः। तेषामपेक्षयेत्यर्थः। अनेन विष्णोरेकत्वेऽपि रूपबाहुल्येन बहुवचनोपपत्तिरुक्ता भवति। अनेनैको विष्णुरेव मया ध्यातो न ब्रह्मरुद्रावतः कथं तावप्यागताविति त्वया न शंकनीयं। यत् यमेकविष्णुं ध्यायसि सैव स एव विष्णुर्ब्रह्मरुद्रयोर्नियामकत्वेनांतस्तिष्ठति। अतस्तद्विष्णुध्यानं तदंतर्यामिध्यानं तत्प्रतिमात्वेन ब्रह्मरुद्रध्यानं च भवति। अतस्तदागमनं युक्तमिति प्रश्नपरिहार उक्तो भवति ॥ ३० ॥ सोमोऽभूद्ब्रह्मण इति श्लोके दत्तादिवत्सोमस्य विरिंचावतारत्वमुच्यत। तच्च प्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ब्रह्मण इति। तुरवधारणे। नेत्यनेन संबध्यते। चस्त्वर्थे। सन्निधानं मृते ब्रह्मणोऽवतारो नैवास्ति। तुशब्देनोच्यत इति शेषः। आत्मनः पृथ्वादिजीवस्य तदंशोक्तिर्विष्ण्वंशोक्तिस्तु। विष्णोस्तत्र प्रवेशनमेवेत्यर्थः। ननु प्रसूतीं मानवीं दक्षमिति श्लोके यद्दक्षस्य विरिंचित्वमुक्तं तदयुक्तं। इत्यामंत्र्य वरारोहां कन्यामाप्सरसीं नृपः। सोमो राजा ययौ दत्वा ते धर्मेणापयेमिरे। तेभ्यस्तस्यां समभवद्दक्षः प्राचेतसः किलेति वरुणपुत्रप्राचीनबर्हिपुत्रत्वप्रतिपादकषष्ठस्कंधवाक्यविरुद्धत्वादित्याशंकां प्रमाणेनैव परिहराति ॥ सृष्टिभेदादिति। विरूपं विलक्षणरूपं। भावप्रधानो निर्देशः। दक्षस्यपुत्रत्वकथाया इति शेषः। दक्षस्य ब्रह्मपुत्रत्वकथैका सृष्टिमवलंब्य प्रवृत्ता। अन्यां सृष्टिमवलंब्य प्राचीनबर्हिपुत्रत्वकथा प्रवृत्ता। एवं सृष्टिभेदाद्दक्षपुत्रत्वकथाया वैरूप्यसंभवान्न कोऽपि विरोध इति भावः। केवलं दक्षस्य ब्रह्मपुत्रत्वकथैव सृष्टिभेदाद्विरूपेति

॥ श्रीमद्धनुमद्भीमसध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॥ ननु तृतीयपंचमस्कंधादावुक्तैव स्वायंभुमनुवंशादिकथा पुनश्चतुर्थस्कंधेऽपि कथमुच्यत इत्याशंकां प्रमाणेनैव प्रयोजन प्रदर्श्य परिहरति ॥ पुनः पुनरिति । द्वितीयस्तु शब्दो विशेषे । तु विशेषेणोत्तमं फलं भवतीति ज्ञापयितुकामा एव विद्वासः पुनः पुनस्तत्र कथां प्राचुरित्यन्वयः । अत्र कथा इति सामान्येनोक्त्या बहुवचनेन च सर्वत्र भागवतभारतादौ पुनः पुनः कथोक्तेरपि सार्थक्यमुक्तं भवति । अत एवात्र च तत्रभागवतभारतादाविति सर्वनामतच्छब्दप्रयोगः कृतः ॥ १ ॥ ननु शरणं तामिति श्लोके यो जगदीश्वरः स एवात्मसमां स्वसमां प्रजा यच्छत्वित्यत्रिणा विष्णुसमैकापत्यार्थमेकं विष्णुरूपमेव प्राथितमिति भाति तथैको मयेहेति श्लोक एकस्यैव विष्णुरूपस्य ध्यानं कृतमित्युच्यते । तदयुक्त । तथात्वेऽथास्मदंशभूता इत्याद्युत्तरग्रंथोऽसंगतः स्यात् । तत्र वरादिदातृत्वमुच्यते । एकापत्यार्थमेकं ध्यायते । अत्रये त्रिकर्तृकत्रये कथं वरदानादिकं संगच्छते । तत्कुर्वतां तेषामकुशलत्व च स्यादित्यतः प्रमाणेनैव तात्पर्यार्थमाह ॥ ब्रह्मस्थश्चेति । त्रिपुरुषसमां विष्णुब्रह्मरुद्रसमां । त्रिमूर्त्यंशान् त्रिमूर्तीना विष्णुविरिंचरुद्राणामंशो भवान् । आगत्य तु आगत्यैवेत्यर्थः । अनेन यो जगदीश्वरो ब्रह्मरुद्रस्थो विष्णुः स एवात्मसमात्मनामर्कब्रह्मरुद्रविष्णुभिः समां प्रजां प्रयच्छत्विति भागवतवाक्यं व्याख्यातं भवति । तथैको मयेह भगवान् विबुधप्रधान इत्यत्रैकशब्दा ब्रह्मरुद्रस्थरूपविष्णुरूपयोरैक्याभिप्रायेणैव प्रयुक्तो न त्वेकविष्णुरूपाभिप्रायेणातो नासंगतिरित्युक्तं भवति । ननु यद्यत्र विरिंचादिसमापत्याभिप्रायः स्यात्तर्हि विरिंचविष्णुरुद्रा आत्मसमामित्येव कुतो नाक्तं । जगदीश्वर इत्येक इत्यादि च किमर्थमुक्तमिति चेन्न । विरिंचविष्णुरुद्र इत्युक्ते त्रिपुरुषसमापत्यप्राप्तिरूपकार्यमेव भवति । न तु दैत्यमोहनं । जगदीश्वर इत्याद्युक्तौ तूभय भवति । अत एवमुक्तमित्याशयवानाह ॥ भावित्वादिति । अत्रत्यैवशब्दस्त्रिमूर्त्यंशानित्यनेन संबध्यते । चावन्योन्यसमुच्चये । कार्यस्य त्रिपुरुषसमापत्यरूपस्य भावि-

विज्ञेयमित्यर्थः ॥३३॥ यो मायया विरचितमिति श्लोकार्थे स्वेरूपभेदमिवेत्यनेन खे आकाशे रूपभेदे शुक्लपीताद्यनेकरूपमिवेत्याकाशस्यानेकरूपाश्रयत्वमुच्यते। तच्चाकाशे नीलिमोदेतीत्याद्येकरूपप्रमाणबाधितमित्यतः सिंहावलोकनन्यायेन तात्पर्यार्थमाह॥ ख इति। स्वोक्तार्थे प्रमाणमाह॥ यथेति। आदिपदेन वायुः सर्वत्रगो महान्। तथा सर्वाणि भूतानि मत्स्थानीत्युपधारयेति तच्छेषो गृहीतः। वाय्वादिक इति स्वोक्तादिपदस्य प्रमाणेनैवार्थं दर्शयन् भागवतदृष्टांतदार्ष्टांतिकवाक्ययोजनां च दर्शयति ॥ यथेति। विमानादीत्यादिपदेन पथ्यादिकं ग्राह्यं। अनेन यथा खे आकाशे तदाधारत्वेन रूपभेद वाय्वादिभेदास्तिष्ठति तथा विष्णुर्मायया स्वेच्छयाऽऽत्मनि स्वाधारत्वेन विरचितं निजं स्वकीयमिदं विश्वमाविश्वकारेति भागवतवाक्यं योजितं ॥ ५६ ॥ ताविमौ वा इति श्लोके नारायणौ हरेरंशाविति ऋषिरूपयोर्हरिनारायणयोर्हरिस्वरूपत्वमुच्यते। तथा तयोरेव नरनारायणयोः कृष्णौ यदुकुरूद्वहावित्यनेन कृष्णार्जुनात्मकं चोच्यते। तदुभयं भेदप्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ नर इति। नारायणस्तु स्वयं साक्षाद्धरिः। कृष्णस्तु स्वयं नारायण इत्यन्वयः ॥ ५९ ॥ पितर्यप्रतिरूपे इति श्लोकेऽप्रौढेवेत्यस्य प्रौढा श्रेष्ठा न भवतीत्यश्रेष्ठार्थत्वभ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ अप्रौढेति। रुद्रेणेति शेषः। यथाऽन्वाद्युपसर्गबलात्सत्तार्थस्य भवतेर्ज्ञानाद्यर्थत्वं तथा प्रेत्युपसर्गबलाद्धातूनामनेकार्थाद्वा प्रमाणार्थस्य ऊह धातोः स्वीकारार्थत्वं ज्ञातव्य ॥ ६६ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां प्रथमोऽध्यायः ॥ ४—१ ॥ छ ॥

॥ हरिः ॐ ॥ य एतन्मर्त्यमुद्दिश्येत्यारभ्य संसरंत्विहेत्यंतेषु श्लोकेषु तत्त्वतो विमुखो भवेत्। बुद्ध्या पराभिधायिन्या विस्मृतात्मगतिस्त्वित्यादिना दक्षस्य ज्ञानविषयः शापमुच्यते। संसरंत्विहेत्यनेन मुक्तिविषयः शापमुच्यते। तथा ये चामुमनुशर्वावमानिनं दक्षमनुसृत्य वर्तंते तेऽपि संमुह्यंत्वित्यनेन भृग्वादीनां च ज्ञानविषयः शाप उच्यते। तेन दक्षभृग्वादीनां

सर्वथा ज्ञानमोक्षाभावः प्रतीयते । सोऽनुपपन्नः । तथात्वे जीवस्वरूपज्ञानस्याप्यभावः स्यात् । स त्वनभिभवं च दर्शयतीत्यादि ब्रह्मसूत्रादिप्रमाणबाधित इत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ये ज्ञानेति । मुक्तिं गच्छति विपयीकुर्वतीनि मुक्तिविपया इत्यर्थः । अधिकारिणा सम्यग्ज्ञानं मुक्तियाग्याना कादाचिद्भवः कादाचित्कज्ञान मुक्त्यभावस्तत्सबाधिनः कादाचित्काः । सबधस्तु जन्यजनकभावो ज्ञेयः । एव सार्वकालिकपदमपि व्याख्येय । शापादीत्यादिपदेन पाप ग्राह्यं । अत्र सर्वथा ज्ञानाद्यभाव । अनेन यस्मिन्क्षणे शापो दत्तः स शापस्तस्मिन्नेव क्षणे जायमानज्ञानं मुक्तेरभाव करोति न तु सर्वथाऽता ज्ञान मुक्तिविलबमात्रहेतवः शापा इत्युक्त भवति ॥ २३ ॥ गिरेः सुतायाः इति श्लोकार्धे चंपकादिकुसुमवत्या गिरेः पर्वतस्य सुताया उमायाः समुद्धत्वि न्यथाप्रतीतिनिरासाय प्रमाणेनैव तदर्थमाह ॥ गिरिरिति । मश्राचोन्माथितात्मन इत्यर्धेऽपिपदस्य यः पुष्पसदृशस्वर्गादिवि पयप्रतिपादिका गिरेर्मुख्यप्राणस्य स्वर्गादिविषयेष्वेव उत् उत्कृष्टत्वेन मथित आवर्तित आत्मा मनो येषा ते तथा मतः समुद्ध त्विति भागवतवाक्यं व्याख्यात भवति ॥ २६ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां द्वितीयोऽध्यायः ॥ ४–२ ॥

॥ हरिः ॐ ॥ स त्वं च यस्मिन्निति श्लोकार्धे विधीयत इत्यस्य क्रियत इत्यर्थभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ विशेषेणेति । स्वोक्तार्थे प्रमाणमाह ॥ रुद्रेणेति ॥ ३३ ॥ इति श्रीभागवततात्पर्यटिप्पण्या तृतीयाऽध्यायः ॥ ४–३ ॥

॥ हरिः ॐ ॥ यत्पादपद्ममिति श्लोकार्धे किंवा शिवाख्यमशिवं न विदुस्त्वदन्य इत्युत्तरश्लोकस्थब्रह्मादिपदबलान्म- हतां ब्रह्मादीना मनोऽलिभिस्तथा ब्रह्मरसा सर्वार्थिभिः पुरुषैश्च निषवितमित्यन्वयार्थभ्रांतिनिरासाय विवक्षिततदन्वयार्थमाह ॥ ब्रह्मरसेति । ननु महतामित्यस्य शिष्याणामिति व्याख्यानेऽपि न ब्रह्मादिव्यावृत्तिर्भवति । ब्रह्मादीनामेव रुद्रशिष्यत्वादिति चेन्न । ब्रह्मादीनां रुद्रशिष्यत्वे प्रमाणाभावात् । प्रत्युत रुद्रस्यैव ब्रह्मादिशिष्यत्वे प्रमाणसद्भावादित्याशयवांस्तत्र प्रमाणं दर्शयस्ते

नैव प्रमाणेन महच्छब्दोक्तरुद्रशिष्यान्दर्शयति ॥ सनकादय इति । नन्वेवं चेत्तदुत्तरश्लोकविरोधः । तत्र ये ब्रह्मादयस्तच्चरणावसृष्टं तस्य रुद्रस्य यश्चरणस्तत्क्षालनोदकं मूर्ध्न्यभिदधतीति, ब्रह्मादेः रुद्रशिष्यत्वप्रतीतेरित्यतस्तदनूद्य यथावद्याचष्टे । ब्रह्मपुत्राः सनकादय इत्यर्थः । अनेन ब्रह्मा आदिः कारणं येषामिति विग्रहः सूचितः । ननु ब्रह्मादय इत्यस्य चतुर्मुखप्रभृतय इत्येवार्थः किं न स्यादिति चेन्न । तस्यार्थस्य ब्रह्मशिष्यस्तथा रुद्र इति पूर्वोदाहृतनिरवकाशप्रमाणबाधितत्वात् । बाधकातरं चाह ॥ सुपर्णेति । प्राणेशो मुख्यवायुः । पुरुषार्थभाक् क एव नो नमंतीत्यन्वयः ॥ १५–१६ ॥ कर्म प्रवृत्तं चेति श्लोके यत्प्रवृत्तं च कर्म निवृत्तमपि कर्म ब्रह्मणि जीवे ऋच्छति तदृतं सत्य नेति जीवे विद्यमानप्रवृत्तादिकर्मणो मिथ्यात्वमुच्यत इत्यन्यथा प्रतीतिनिरासाय । तथा ब्रह्मणीत्यत्र पदं छित्वा तस्य विवक्षितमर्थमाह ॥ आब्रह्मणीति । अस्य तात्पर्यवाक्यस्य वक्ष्यमाणमानानुसारेण प्रवृत्तं निवृत्तं कर्म न ऋच्छतीति भागवतवाक्यनान्वयो ज्ञेयः । तेन याऽन्वयांतरणान्यथाप्रतीतिः सा निरस्ता भवति । अस्मिन्नर्थे प्रमाणमाह ॥ आब्रह्मेति । यः स्थितधीः स्थितप्रज्ञः स एवाब्रह्मेति जीवन्मुक्त इति चाभिधीयते । यथाब्रह्मा तस्य निवृत्तं च प्रवृत्तं च कर्म नेष्यतेऽगीक्रियत इत्यर्थः । ननु स्थितप्रज्ञानां देवानां निवृत्तादिकर्मणि सति कथमिदमुच्यत इत्याशंकां पूर्वोदाहृतप्रमाणशेषेणैव भागवतस्थऋतपदतात्पर्यकथनेन परिहरति ॥ यत्तु देवा इति । तुर्विशेषे । अधिकारत्वरूपविशेषवंतो देवा यत्कर्म कुर्वंति स महानियमः स्मृत इत्यन्वयः । स इति महानियम इति विधेयलिंगः । शैत्यं हि यत्सा प्रकृतिर्जलस्येत्यादिवत् । भागवतऋतपदतात्पर्यार्थः ॥ महानियम इति । इदानीं प्रवृत्तादिकर्मत्रयस्य लक्षणं तत्प्रमाणशेषेणैवाह ॥ स्वर्गार्थमिति । चशब्दस्तुशब्दद्वय चावधारणे । स्वर्ग पदमैहिकार्थोपलक्षकं । यत्स्वर्गाद्यर्थमेव यन्मुक्तय एवेत्यवधारणद्वयसंबंधः । आधिकारिकाख्यदेवाधिकमाधिकारिकमहाकर्माणि नियमशब्दप्रवृत्तिनिमित्तं तत्प्रमाणशेषेणैव दर्शयति ॥ महत इति ।

महत इत्यस्यैवार्थः ॥ विष्णोरिरिति । नियमान्नियमविषयत्वात् । आधिकारिककर्मण इति शेषः । यद्वा । महता नियमादिति सामानाधिकरण्यं ज्ञेयं । तेनान्यकर्मणोऽपि भगवन्नियतत्वादस्यैव महानियमसंज्ञा संभवतीत्याशंका निरस्ता भवति । अन्यकर्मणो नियतत्वमात्रादस्य तु महानियतत्वं । तदपि कुत इत्यत उक्तं ॥ प्रीत्या मुक्तौ सुखोन्नतिरिति । विष्णुप्रीतिद्वारा मुक्तौ सुखोन्नतिप्रदत्वादाधिकारिककर्मणां महानियमविषयत्वान्महानियमसंज्ञा । प्रवृत्ताद्यन्यकर्मणस्तदभावान्न सा संज्ञेति भावः । ननु तर्ह्याधिकारिकाणां निवृत्तकर्माभावः प्राप्तः । स तु प्रमाणबाधित इत्यत आह ॥ केचिदिति । आधिकारिककर्म केचिन्निवृत्तमित्याहुरुतान्यो नियममित्यप्याहुरिति योजना । अनेनैकस्यैव संज्ञाद्वयमित्यतो न प्रमाणबाध इत्युक्तं भवति ॥ २० ॥ एतेन देहेनेति श्लोके कुजन्मना कुत्सिता त्वत्तो जन्म यस्य देहस्य स तथा तेन देहेनाल । तथा कुजनप्रसंगतः प्रकृष्टसंबंधान्मम व्रीडाऽभूदिति दक्षस्य पार्वत्युक्तकुजनत्वेन सद्गुणहीनत्वभ्रांतिर्भवति । तां प्रमाणेन परिहरति ॥ यदि देवाश्चेति । गुणहीनत्वाभावे हेतुः ॥ स्थितप्रज्ञा हीति । तर्हि निंदार्थकं भागवतवाक्यं प्रमाणमेव स्यादित्यत आह ॥ यथा योग्यमिति । निंदाया निंदावाक्यस्य निंदायाः सकाशादन्यदेवान्यत्रैवासुरमोहनरूपे तु विशेषेणासुरावेशरूपे चार्थे यथा योग्यमेव तात्पर्यं ज्ञातव्यं । न तु सद्गुणहीनत्व इत्यर्थः । अनेनैव तात्पर्यप्रमाणेनायं तु लोकपालानां यशोघ्नो निरपत्रप इत्यारभ्य नष्टशौचाय दुर्हृद इत्येतानां भागवतद्वितीयाध्यायस्थनिंदाश्लोकानां तथा स्थलांतरस्थदेवादिनिंदावाक्यानां च गतिरुक्ता भवति ॥ २२ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां चतुर्थोऽध्यायः ॥ ४-४ ॥

॥ हरिः ॐ ॥ ततः स्वभर्तुरिति श्लोके सती स्वभर्तू रुद्रस्य चरणांबुजासवं चिंतयंत्यपरं किमपि न च ददर्शेति पार्वत्या रुद्रातिरिक्तस्य सर्वस्य ज्ञानाभाव उच्यत इत्यन्यथाप्रतीतिनिरासाय चिंतयंती न चापरमित्येतदपेक्षिताभ्याहारेण यथाव-

ध्याचष्टे ॥ न चापरमिति । तस्माद्रुद्रात् । परं सूचित इति शेषश्च पूरणीयः । चशब्दसूचितार्थे प्रमाणं दर्शयंस्तेनैव प्रमाणेन नापरं ददर्श सती सद्यः प्रजज्वालेति भागवतवाक्यस्य तात्पर्यं चाह ॥ रुद्रं चेति । अन्यत् रुद्रादवरं नास्मरदेहं च तत्याजेत्यन्वयः ॥ ४ ॥ इति श्रीभागवततात्पर्यटिप्पण्या पंचमोऽध्यायः ॥ ४-५ ॥

॥ हरिः ॐ ॥ तं किं करोमीति । श्लोके मज्जटाना त्वमग्रणीरित्यनेन रुद्रजटाजातस्य रुद्रभृत्यत्वमुक्त्वा तस्यैव दक्षं जहि हनेति दक्षहननाज्ञापनेन दक्षहंतृत्वं प्रतीयते । तदयुक्तं । आक्रम्योरसि दक्षस्येत्याद्युत्तरश्लोकेषु रुद्रस्यैव दक्षहंतृत्वस्योक्तत्वेन तद्विरुद्धत्वादित्यतः प्रमाणेनैव तदभिप्रायं दर्शयंस्तेनैव प्रमाणेन वीरभद्रः प्रजापातिमित्युक्तस्य वीरभद्रस्य मणिमदादिरुद्रभृत्यमध्यपठितत्वेन रुद्रभृत्यत्वभ्रांतिं च वारयन्पुराणांतरोक्ताधिकप्रमेयं च दर्शयति ॥ वीरभद्राख्यरूपेणेति । पश्चाद्वीरभद्रगमनानंतरं मूलरूपेणैव गत्वा । अथ गमनानंतरं दक्षमवधीदित्यर्थः । अत्र तात्पर्ये यथावित्यनेन दक्षं जहीति भागवतस्थहनधातोर्गत्यर्थत्वमेव न तु हिंसार्थत्वमित्युक्तं । अवशिष्टेन पूर्वार्धेन रुद्रजटाजातस्य वीरभद्रस्य रुद्रात्मकत्वमुक्तं । अतएव तं किं करोमीति श्लोकांते हे रुद्र त्वं मे जटांशको मम जटाजातः स्वरूपांशक इति जटाजातस्य रुद्रस्वरूपांशत्वमुक्तं । तेन भागवते रुद्रजटाजातस्य बद्धांजलित्वाद्युक्तिर्मोहनार्थायेति सूचितं । न केवलमुपेंद्रेण जितः किंतु धर्मात्मजेन हरिणा चेति चार्थः । तत्रापेंद्रेण हरिणेत्यनेन पुराणांतरोक्ताधिकप्रमेयकथनं कृतं ज्ञेयं ॥ ४ ॥ २२ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां षष्ठोऽध्यायः ॥ ४-६ ॥

॥ हरिः ॐ ॥ उपलभ्य पुरैवेति श्लोके कस्य दक्षस्या वरं नारायणोऽब्जसंभवश्च नेयतुरिति नारायणस्य दक्षयज्ञं प्रत्यागमनाभाव उच्यते । सोऽयुक्तः । वैष्णवदक्षयज्ञस्य वैष्णवत्वेन तत्र विष्णोरागमनस्यावश्यकत्वात् । अन्यथा दक्षस्यावैष्णवत्वापत्तेरित्यतस्तदभिप्रायमाह ॥ त्रिमूर्तीति । तिस्रो मूर्तीराकारान् गतं प्राप्तं त्रिमूर्तिगं तेनेत्यर्थः । नारायणो ब्रह्मस्था ब्रह्मा

कारेण रुद्रस्थो रुद्राकारेण विष्ण्वाकारेण च ययावित्यर्थः । अनेन तदध्वरे विष्णो रूपांतरेण स्थितत्वान्नावैष्णवत्वं तस्येत्युक्तं भवति ॥ ३ ॥ नाहं न यज्ञ इति श्लोकस्थितस्य यज्ञशब्दस्य यज्ञो विष्णुर्देवतेति श्रुतिबलाद्विष्ण्वर्थत्वभ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ यज्ञ इति । तत्राभिधानं पठति ॥ यज्ञ इति । तस्मिन्नेव श्लोके आत्मतंत्रस्य स्वतंत्रस्य तस्य रुद्रस्येति रुद्रस्य स्वातंत्र्यमुच्यते । तत्प्रमाणबाधितमित्यस्तदनूद्य यथावद्व्याचष्टे ॥ तस्येति । एव पदार्थमुक्त्वेदानीं तस्यात्मतंत्रस्य रुद्रस्य तत्त्व तथा बलवीर्ययोः प्रमाणं चाहं न वेद्मि । यज्ञो न वेद । यूयं च न विदुरित्यन्य देहभाजो मुनयश्च न विदुरिति रुद्रस्य चतुर्मुखाद्यज्ञ यस्वरूपत्वादिकमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव सर्वश्लोकतात्पर्यमाह॥ नाहमित्यादिना । यत्तत्त्वं यस्य विष्णोस्तत्व । चशब्दाद्बलवीर्ययोः प्रमाणं चाहं न वेद्मींद्रा न वेदान्ये तु नैव विदुस्तस्य विष्णोरिति यत्तच्छब्दयोरन्वयः । तृतीयनञो भागवत मनुसृत्य यूयमित्याध्याहृतेनान्वयो ज्ञेयः । मम वायोरथापि वेत्त्यनेनात्मतंत्रस्येति भागवतात्मपदस्य ब्रह्मवायूरूपार्थांतरमुक्तं भवति । वो युष्माभिः कर्तृत्वाविवक्षया संबंधमात्रे षष्ठीयं । इत्थं । अवज्ञामिति शेषः ॥ ७ ॥ उपविष्टं दर्भमय्यामिति श्लोके पृच्छते नारदाय शृण्वतां सतां च सनातन ब्रह्म परं ब्रह्म प्रवोचतमिति रुद्रस्य नारदादिगुरुत्वमुच्यते तत्र विशेषानुक्तौ मुख्यामुख्य इति न्यायेन तद्गुरुत्वं मुख्यमिति भ्रांतिं प्रमाणेनैव परिहरति ॥ मुमुक्षव इति । गुह्यं परं ज्ञानं । प्राप्यति शेषः । अनेन रुद्रस्य चतुर्मुखादनंतरगुरुत्वमुक्तं भवति ॥ ३७ ॥ स तूपलभ्यागतामिति श्लोके यथा कश्चिदर्कस्याभिवन्दनं करोति तथा स रुद्र आत्म नश्चतुर्मुखाभिवंदनं चक्रे । कीदृशो रुद्रो विष्णोः सकाशान्महत्तम इति रुद्रस्य विष्णूत्तमत्वमुच्यते । तत्प्रमाणबाधितमित्यता महत्तमोऽर्कस्येति भागवतवाक्यं यथावद्व्याचष्टे ॥ महत्तम इति । ननु महस्तम इति स्यान्न तु महत्तम इति । सकारांतमहः शब्दस्यैव तेजो वाचकत्वस्याभिधानसिद्धत्वादित्यतः प्रमाणेनैव महच्छब्दमहःशब्दयोरेकार्थत्वं दर्शयति ॥ तेजोऽर्थे इति ॥ ४० ॥

जाने त्वामीशेति श्लोके हे ईश रुद्र त्वां शक्तेः श्रियः शिवस्य च सकाशात्परमुत्तमं जान इति रुद्रस्य रमारुद्राभ्यामुत्तमत्वमुच्यते। तन्न घटते । प्रमाणव्याहतत्वात्स्वव्याहतत्वाच्च । न हि स्वस्मात्स्वोत्तमत्वमधमत्वं च संभवतीत्यतस्तदुक्ति घटयति ॥ अंतर्यामीति। इति । भागवतवाक्यमिति शेषः । ननु रुद्रस्तुतौ विद्यमानमिदं वाक्यं । तदंतर्याम्यपेक्षया कुतो व्याख्यायत इत्याशंका प्रमाणेनैव हेतुकथनन परिहरति ॥ क्रियंत इति । यास्त्वन्यविषयस्तुतिपूक्ताः पूर्णा गुणा जीवेषु तत्स्तुतिविषयजीवेषु न संभवति। अन्यत्रा न्यविषयाः स्तुत्यस्तदंतर्याम्यपेक्षया क्रियंते व्याक्रियंत इत्यर्थः । जीवेषु पूर्णगुणाभावे हेतुमाह ॥ यथायोग्य इति । ननु तर्हि त्वदंतर्यामिणमिति वक्तव्यं । तद्विहाय त्वां त्वमेवेत्यैक्योक्तिः कुत इत्यतः प्रमाणेनैवैक्योक्तिं घटयति ॥ तद्वशत्वादिति । सर्वं रुद्रादिचेतनजातमुदीर्यते त्वा त्वमेवेत्यादौ । तस्माद्रुद्रादेर्विष्णुवशत्वात्साक्षात्स्वरूपत्वाभावाच्च । अन्यगता रुद्रादिगता दोषास्तस्मि न्पुरुषोत्तमे न नेयाः । साक्षात्स्वरूपत्वांगीकारेणेति शेषः ॥ ४२ ॥ त्वमेव धर्मार्थेति श्लोके धर्मार्थौ दोग्धीति धर्मार्थधुक् तस्या भिपत्तये प्राप्त्या इत्यन्यथाप्रतीतिनिरासायाभिपत्तिपदमनूद्य व्याचष्टे ॥ अभिपत्तय इति । तस्मिन्नेव श्लोके दक्षेण सूत्रेणेति दक्षस्य तंतुरूपसूत्रात्मकत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तदनूद्य यथावद्व्याचष्टे ॥ सूत्रेणेति ॥ ४४ ॥ न वै सतामिति श्लोक सर्वेषु भूतेषु तव संबंधि किंचित्पश्यतामित्यर्थभ्रांतिं निराकरोति ॥ तवेति । षष्ठ्या द्वितीयार्थत्वे ज्ञापकं सूत्रं पठति ॥चतुर्थीति चतुर्षु द्वितीयादिपंचम्यंतविभक्तिषु । वर्तत इति शेषः । भूतानि चात्मनीत्यर्थे भूतान्यात्मनि हरावपृथक् ऐक्यन दिदृक्षतां पश्यतां सतामिति सामानाधिकरण्येन जीवेश्वराभेदज्ञानिनः सज्जनत्वमुच्यते । तथा दुराशया दुरात्मान इति जीवेश्वरभेदज्ञानिनो दुरात्मत्वमुच्यते । तदयुक्तं । ऐक्यात्मनां यदिदं केचिद्ब्रूयुरनैपुणा इत्यादिप्रमाणबाधितत्वादित्यतः प्रमाणेनैवापृथग्दर्शनपदयोरर्थमाह ॥ विष्णवधीनेत्यादिना । गतिः प्राप्तिः । ननु यदि जगतसत्यत्वादेर्विष्ण्वधीनत्वज्ञानातिरिक्तत्वेनापृथग्दर्शनत्वाभावेन पृथग्द

र्शनं स्यात् । ततश्च मिथ्याज्ञान स्यादित्यत आह ॥ यथेति । यथाऽर्थस्तथैव ज्ञानं तदप्यपृथग्दृष्टिपदेनोच्यत इत्यर्थः ॥ ४६ ॥ येऽस्मिन्यदेति श्लोके यथा पुष्करनाभमायया स्पष्टधियस्तदा पृथग्दृश इति भगवन्मायास्पृष्टधीत्वपृथक्त्वस्य चैककालीनत्वमुच्यते। तदयुक्तं । मायास्पृष्टधीत्वस्य प्राक्कालीनता पृथग्दृक्त्वस्येदानींतनत्वादित्यतस्तदनूद्य तस्य विवक्षितमर्थमाह ॥यदेति । अत्र प्रमाण । यदा तदेति हेत्वर्थे कालार्थेऽपि च भण्यत इति तृतीयस्कधादावुदाहृततात्पर्यवाक्यं ज्ञेयं । अनेन पृथक् दृक्त्व प्रति भगवन्माया स्पृष्टधीत्वस्य हेतुत्वं सूचित भवति । तच्छ्लोकस्यैवोत्तरार्धे साधवस्तत्र तेष्वनुकपया कृपां कथ न कुर्वतीति कृपां प्रत्यनुकपायाः कारणत्वमुच्यते । तदयुक्तं कृपा दयानुकंपास्यादित्यमरकोशपर्यायशब्दाभ्यां कृपानुकंपयोरैक्यस्योक्तत्वात् । न हि पर्यायशब्दवाच्यं प्रति पर्यायशब्दांतरवाच्यस्य कारणत्वं दृष्टमिष्टं वत्यतो भागवतस्थकृपानुकंपापदयोरपर्यायशब्दार्थत्वं प्रमाणेनैव दर्शयति ॥ हृदयस्येति ॥ ४८ ॥ भवान्हि पुंस इति श्लोकार्धे माययाऽज्ञानेनेत्यर्थभ्रांतिनिरासाय तदनूद्य स्वय व्याख्याय तत्र प्रमाण चाह ॥ माययेति । बधशक्तिर्दुःखादिबंधहेतुशक्तिः । ज्ञवर्जिताः । जानंतीति ज्ञा मुक्ताः । मुख्यामुख्येति न्यायात् । तपु वर्जिताः । हरिणेति शेषः । मुक्तातिरिक्तेषु बंधशक्तेः कार्यं भवति । हरीच्छायाः कार्यं तु सर्वत्र भवतीति भावः ॥ ४९ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां सप्तमोऽध्यायः ॥ ४-७ ॥ छ ॥

॥ हरिः ॐ ॥ अप्यर्वाग्वृत्तय इति श्लोके कृतानुग्रहविग्रह कृत उत्पन्नाऽनुग्रहाय विग्रहो देहो यस्य त हरि गृणति स्तुवंतीति हरेर्देहोत्पत्तिरुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थं दर्शयंस्तेनैव प्रमाणेन प्रसंगाज्जीवोत्पत्ति च दर्शयति ॥ उत्पत्तिरिति । देहोत्पत्तिरेवेति सबंधः ॥ २४ ॥ ननु शुद्धं स्वधाम्नीति श्लोके हरेर्मायां प्रतिषिध्येति मायासबधाभावमुक्त्वा तस्यामास्त इति मायासबध उच्यते तथा तयैव माययैव पुरुषत्वं पुरुषशरीरमुपेत्येति प्राकृतशरीरत्वमुक्त्वाऽपरिशुद्धमिवतीनशब्द-

शिरस्केन पदेन यत्परिशुद्धत्वमुच्यते तदुभयमयुक्तं । परस्परविरुद्धत्वादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ जडमायेत्यादिना । अत्र तात्पर्ये प्रमाणे प्रथमार्धेन निषिध्य मायामयमिति भागवतवाक्यं व्याख्यातं । चतुर्थपंचमाभ्यामपरिशुद्धमिवामनतीति भागवत वाक्यं व्याख्यातं भवति । तत्रापरिशुद्धमिवेत्यस्यार्थः ॥ जीववदिति । स्वपदस्यैव व्याख्यानं ॥ तद्गत्वादेव कारणादिति ॥ २४ ॥ २६ ॥ तत्त्वं न ते वयमिति श्लोके अधिदैवपदस्य दैवमधिकृत्य वर्तमानं शास्त्रमधिदैवमिति दैवप्रतिपादकशास्त्रार्थत्व भ्रांतिनिरासाय विवक्षितमर्थमाह ॥ अधिदैवमिति । अनेनाधिकाश्च ते देवाश्चाधिदेवा अधिदेवानामिदं शरीरमधिदैवमिति विग्रहः । तथोत्तरपदवृद्ध्यावच्छेदे एवपदस्योपसंख्यानं कर्तव्यमिति सूचितं । एवमधिदेवपदं व्याख्यायेदानीं यदर्थं यस्मै अध्वराख्यं त्वमास्थाः । आस उपवेशन इति धातोः । उपविष्टोऽभवोऽदोऽध्वराख्य वस्त्वधिदेवमित्यन्वयार्थभ्रांतिनिरासाय तच्छ्लोकार्धस्य विवक्षितान्वयार्थमाह ॥ यज्ञेति । यश्चासौ यज्ञश्च यज्ञः । यज्ञस्य भागस्तस्मै यज्ञस्य भागभोगार्थमित्यर्थः । अनेन हे अनंत पाररहितहरे त्वं यदस्मा अध्वराय यस्मा अध्वरस्य भागार्थं भागभोगार्थमधिदैवमुत्तमयज्ञभुग्देवताशरीरमास्था देवता शरीरे उपविष्टोऽभवोऽद इदमध्वराख्यं धर्मोपलक्षणं भक्त्यादिधर्मोपस्यलक्षणं ज्ञानं । त्वदुपदेशेनाध्वरस्तद्भक्त्यादिधर्मसाधनत्वेन ज्ञात इति भागवतवाक्यं व्याख्यातं । उक्तार्थे प्रमाणमाह ॥ भुंक्त इति ॥ २७ ॥ तव वरद वरांघ्रावाशिषार्थकचशब्देन हरिपाद- स्यामुष्मिकमोक्षार्थे चानभिधेयत्वं प्रतीयते । तच्च प्रमाणबाधितमित्यतश्चशब्दस्यार्थांतरमाह ॥ आशिष इति । यदि कामार्थं- मनभिध्येयोंघ्रिस्तर्हि ऐहिककामापेक्षायां तत्प्राप्तिर्न स्यादिति न वक्तव्यं । तत एव कामाना विना केवलहरिचरणध्यानादेवाशिषोऽ- प्यैहिककाम्या अपीति यतोऽतः कारणादैहिकार्थं हरिचरणोऽनभिध्येय इति हेत्वर्थे चशब्द इत्यर्थः ॥ २९ ॥ नैतत्स्वरूपं भवत इति श्लोके त्वं यतो मायामयाद्यस्मान्मायामयातिरिक्त इति भास्येतन्मायामयं विश्वमसौ पुरुषो यावद्यदा भवतः स्वरूपमीक्षेद्भव

व्यतिरिक्तं नास्तीति जानीयात्तदाऽसौ पदार्थभेदग्रहो जीवेश्वरादिपदार्थभेदज्ञान भवतीति हरेर्जगदभेदज्ञानेन जीवेश्वरादिपदार्थभेदस्य
निवृत्तिरुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तं व्याचष्टे ॥ अव्यक्तादीति । तुरवधारणे । नेत्यनेन सबध्यत । हि यस्मा-
दव्यक्तादिपदार्थानां विशेषज्ञानिना वैष्णवो देहस्तथाऽऽनंदोऽप्यानदश्च प्राकृत इति न ज्ञेयो ज्ञातुमशक्यस्तस्मान्नैव प्राकृत इत्यन्वयः ।
अनेन यतः कारणादसौ पदार्थभेदग्रहोऽव्यक्तादिपदार्थानां विशेषं गृह्णाति जानाति । अव्यक्तादितत्त्वज्ञानी पुरुषो यावद्भगवतः
स्वरूपं देहादिक तावत्सर्वं नैतदेतदव्यक्तात्मकं न भवतीतीक्षेत्पश्यति ततः कारणात्त्वं ज्ञानादराश्रयान्मायामयात्प्रकृतिविकाराद्व्यति
रिक्तोऽसि । प्राकृतदेहादिरहितोऽसीति भागवतश्लोको व्याख्यातो भवति । प्रमाणेन व्याख्याय तस्यापि भागवतस्थपदार्थभेद
ग्रहपदस्य प्रतीकग्रहणेनाव्याख्यातत्वात्स्वयं प्रतीकग्रहणेन प्रमाणोक्तमेवार्थं दर्शयति ॥ पदार्थेति । भेदशब्दस्य प्रमाणसिद्धं विशे-
षार्थकत्वेऽभिधानं च पठति ॥ भेद इति ॥ ३१ ॥ अनन्वितं त इति श्लोके ईश्वरान्न मन्यत इत्यत्र यत ईश्वराद्विभूतय उपसे
दुरितीश्वरपदस्य पंचम्यंतत्वभ्रांतिं निवारयति ॥ ईश्वरानिति । ईश्वरान् ब्रह्मादीन् ॥ ३४ ॥ दृष्टः किं नो दृग्भिरिति श्लोके
माययेत्यस्याविद्यार्थत्वभ्रांतिनिरासाय माया ह्येषा भवदीया हीत्यतावदनूद्य मायाशब्दार्थमाह ॥ माया हीति । अत्र हिशब्दा
न्वयेन भागवतस्थहिशब्दो मायाशब्दस्य सामर्थ्यार्थत्वे प्रमाणप्रसिद्धिद्योतक इति सूचितं । तदेव प्रमाण सूचयति ॥ भगवदिति ।
हि यस्माद्धेतोर्भगवान्स्वयं साक्षाद्दृश्यो भवत्यसौ हेतुर्भगवन्महिमैवेत्यर्थः ॥ ३७ ॥ प्रेयान्न तेऽन्योऽस्तीति श्लोक यः पुरुषा
विश्वात्मनि जगदीश्वरे आत्मनः स्वस्मात्पृथक् पृथक्त्व भेदं नेक्षेत्तत्तोऽन्यस्तव प्रेयान्प्रिया नास्तीति जीवेश्वरभेदाज्ञानिना भगवद
तिप्रियत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तदनूद्य यथावद्व्याचष्टे ॥ न पृथगिति । अत्र पृथगित्यस्यार्थः ॥ अन्यथेति । अन
नान्यथाज्ञानं पृथग्दर्शनं तदन्यज्ञानमपृथग्दर्शनमित्युक्त भवति । अत्र प्रमाणमाह ॥ पृथग्ज्ञानमिति । यत्किंचिद्वस्त्वन्यथा

वीक्ष्यते तद्वीक्षणं पृथग्ज्ञानमित्याहुः । वस्तुता वास्तवेन ज्ञानज्ञेयाविरोधेन दृशिरपृथग्दर्शिरित्यर्थः । अयथार्थज्ञानज्ञेययोरन्यथास्तत्वा
विरोधोऽस्त्यतस्तद्व्यावृत्त्यर्थं वस्तुत इत्युक्तं । अत्र ज्ञानस्य ज्ञेयाविरोधित्वं तु ज्ञेयस्य प्रकारविषयत्वं ज्ञातव्यं । वस्तुन इति क्वचित्पाठः ।
तत्पाठे ज्ञानज्ञेयाविरोधेन ज्ञानप्रकारयोराविरोधेन वस्तुप्रकारिणो या दृशिः सेत्यथा ज्ञातव्यः । नन्वुक्तमन्यथाज्ञानरूपपृथग्दर्शनं जीवे
श्वरादिभेदज्ञानमेव किं न स्याद्विशेषानुक्तेरिति चन्न । यदि जीवेश्वरादिभेदज्ञानमन्यथाज्ञानं स्यात्तर्हि सदसद्भागीकारिणामासुरज्ञानत्वं
तत्सत्यत्वज्ञानिनां तत्त्वज्ञानित्वं न स्यात् । अस्ति च तत् । अतो न भेदज्ञानमन्यथाज्ञानमित्यभिप्रेत्य तत्र प्रमाणं पठति ॥ केचिदिति ।
विनिंदंतीत्यस्यैव विवरणं परमार्थतां निराकुर्वतीति । हि यस्मात्केचिद्ब्रह्मान्यवस्तुभेदं विनिंदंत्यथा तस्मात्तासुरज्ञानाद्वयः । ये तु ब्रह्मान्य
वस्तुनो भेदं परमार्थं ज्ञात्वेति भिन्नत्वप्रकारेण नित्यं विष्णुमुपासते ते मुख्यास्तत्त्वविद इत्यन्वयः । अथाऽपीत्यर्धे न केवलं अथाऽपि
तव भृत्येशतया भृत्यानां स्वामित्वादनन्यवृत्त्यापधावतां नोऽनुगृहाणेत्यन्यथाऽन्वयार्थप्रतीतिनिरासायापेक्षिताध्याहारेण यथाव्याचष्ट ॥
हे भृत्येशेति । नन्वनुग्रहवतां पुनरनुग्रहप्रार्थनं व्यर्थमित्याशंक्य तच्छ्लोकव्याख्यानरूपप्रमाणेनैव परिहरति ॥ यथार्थेति । यथार्थज्ञा
निनः सकाशादित्यर्थः । तुर्विशेषे ॥ ३८ ॥ जगदुद्भवस्थितीति श्लोके आत्ममायया स्वाश्रिताज्ञानेन रचितात्मभेदमतय रचिताऽस्मासु
जीवेषु भेदमतिर्येन स तथा तस्मै । अज्ञानेन जीवेश्वरभेदभ्रमजनकायेति जीवेश्वरभेदस्य मिथ्यात्वमुच्यते । तथाऽतिवर्तितगुणात्मने-
तिशयेन वर्तितो भ्रमो यस्मिन्स तथा । गुणाः सत्त्वादय एवात्मा देहो यस्य स तथा तस्मा इति हरेर्भ्रमवत्त्वं प्राकृतदेहवत्त्वं चोच्यते ।
तच्चु निरवकाशप्रमाणबाधितमित्यतः प्रमाणेनैव तं व्याचष्ट ॥ प्रकृत्येति । परमशितुरिति हेतुगर्भविशेषणं । तस्य हरेर्भ्रमा नास्ति
सत्त्वाद्याश्च न संतीत्यन्वयः । अनेन भ्रमश्च सत्त्वादिगुणाश्च भ्रमगुणा भ्रमगुणाननतिवर्तितातिक्रम्य विद्यमानाऽतिवर्तितभ्रमगुणात्मा
ह्येश आत्मा यस्य स तस्मा इति विग्रहः सूचितः ॥ ३९ ॥ यत्तेजसोऽहमिति श्लोकेऽहं यत्तेजसा सुसमिद्धतेजाः सन् यन्वर

पंचभिर्यजुभिः स्विष्टं हव्यं वहामि तं पंचविधं यज्ञं प्रणतोऽस्मीति यस्य पंचविधत्वमुक्तं । तत्र पचविधाः कास्तथा पंचयज्ञापि च कानीति जिज्ञासाया तत्सर्वं प्रमाणेनैव दर्शयन् यज्ञशब्दस्य प्रसिद्धदर्शपूर्णमासादिरूपमासादियज्ञरूपार्थत्वं च तेनैव प्रमाणेन निरा करोति ॥ यज्ञ इत्यादिना । भागवतस्थयस्यपदस्यार्थः ॥ हरिरिति । भागवतस्थयज्ञियपदस्यार्थः ॥ यज्ञोऽध्वर्य्य रि ॥ ४१ ॥ त्वं क्रतुस्त्वं हविरिति श्लोके प्रसिद्धज्योतिष्टोमादिक्रत्वादीना भगवतैक्यमुच्यते । तच्च प्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ सर्वशब्देति ॥ ४५ ॥ अहं ब्रह्मा शर्वश्चेति श्लोके हरेर्ब्रह्माद्यैरैक्यमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अंतर्यामीति । अंतर्यामिस्वरूपेण ब्रह्मरुद्राद्यंतर्यामिस्वरूपेणेत्यर्थः । ननु हरेर्ब्रह्माद्यभि त्व ब्रह्मा द्यंतर्यामिरूपेणैव चेत्तर्हि हरेः सर्वजगदंतर्यामिरूपेण सर्वजगदभिन्नत्वस्यापि सत्त्वादहं ब्रह्मा च रुद्रश्चेति विशिष्याभेदोक्तिरयुक्ता स्यादित्यत आह ॥ विशेषेति । ननु संनिधानविशेषस्याप्यन्यत्र सत्त्वात्पुनरयुक्ततेत्यत आह ॥ संनिधानमिति । तुरिशप । यद्यत्र विशेषेण सामर्थ्यस्य व्यंजनमभिव्यक्तिस्तत्रैव हरेर्विशेषेण संनिधान प्रोक्तमित्यर्थः । संनिधानं तु तत्प्रोक्तमिति क्वचित्पाठः । तत्र पाठे यत्रेत्यध्याहार्यं । तदित्यस्य तत्रेत्यर्थो ज्ञेयः ॥ ५० ॥ त्रयाणामेकभावानामिति श्लोके य एकभावानामेकधर्माणा त्रयाणां विष्णुविरिंचमहेशानां भिदां भेदं न पश्यति स शांति मोक्षमधिगच्छतीति विष्णोर्विरिंचाद्यभेद उच्यत इति भ्रांतिनिरा साय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ हरेरिति । तुरवधारणे । ब्रह्मादीनां भूताना हरवंशत्वदृष्टिरेवापृथग्दर्शि । अथवा । विशेषतो हरेः प्रियत्वदृष्टिरेवापृथग्दर्शिनामित्यर्थः । तस्मिन्नेव श्लोके सर्वभूतात्मनेतिपदस्य सर्वभूतस्वरूपेणेत्यर्थभ्रांतिनिरासाय तद् नूद्य यथावद्व्याचष्टे ॥ सर्वेति । अनेन सर्वभूतानामात्माऽतर्यामीति विग्रहः । भावप्रधाना निर्देशश्च । तथा हरिवंशत्वरूपापृथग्दर्शन प्रति सर्वभूतात्मत्वस्य हेतुत्व च सूचितं । तेन य एकभावानामेको मुख्यो भावोऽर्थो विष्ण्वाख्यो येषु तथा । तादृशाना त्रयाणां

विरिंचादीनां भिन्नत्वं प्रत्येकमवशत्वमप्रियत्वं च न पश्यति किंतु सर्वभूतात्मना विष्णोः सर्वभूतांतर्यामित्वेन विष्णुवशत्वं विष्णुप्रियत्वं च पश्यति स शांतिमधिगच्छतीति भागवतवाक्ययोजना सूचिता ॥ ५४ ॥ एवं भगवतेति श्लोके प्रजापतिर्दक्षो देवानुभयत आदौ पश्चाच्चायजदित्युभयत इति पदस्यार्थभ्रांतिनिरासाय तदनूद्य यथावद्व्याचष्टे ॥ उभयत इति । सोमतः सोमलतारसात् । हविषः पुरोडाशादेः ॥ ५५ ॥ तमेव दयितमिति श्लोके यथा सुप्ता विनष्टा शक्तिः सामर्थ्यं पुरुषं जीवं पुनः प्राप्नोति तथाऽम्बिका पार्वती तमेव रुद्रमेव पतिमवापेति जीवस्य विनष्टसामर्थ्यं दृष्टांतत्वेनोच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ शक्तत्वादिति । चोऽवधारणे । अपिः समुच्चये । विष्णुशक्तिः शक्तित्वादेव तु विशेषेण मुख्यत्वेन शक्तिशब्देनोच्यते । प्रकृतिर्लक्ष्मीरपि शक्यत्वादेव शक्तिशब्देनोच्यत इत्यर्थः । अनेन भागवतस्थशक्तिशब्दो विष्णुशक्त्यर्थको लक्ष्म्यर्थकश्चेत्युक्तं भवति । ननु तर्हि तयोः स्वापराहितत्वात्सुप्तेति स्वापः कथं घटत इत्यत आह ॥ स्वाप इति । हरो हरिरूपायां शक्तो सृष्टिं विना स्थितिः स्वापः कथितस्तस्या लक्ष्म्यास्त्वन्यव्यापारं विहाय हरावेव या रतिः सैव स्वाप इत्युक्तं भवति । अन्यो जीववत्सुप्त्यादिरहितः ॥ ५९ ॥ उत्ससर्जांबरे रेत इति श्लोके वन्हिस्तु रुद्ररेतः पीत्वाऽतरजरमजीर्णं तद्रेतः शरकानने चच्छर्देति वन्हेः साक्षाच्छरवन एव रेतसो वमन उच्यत इत्यन्यथाप्रतीतिनिरासायापेक्षिताध्याहारेण तद्वाक्यं योजयित्वा तत्र भारतं प्रमाणमाह ॥ स्वाहेति ॥ ६४ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामष्टमोऽध्यायः ॥ ४-८ ॥ छ ॥

॥ हरिः ॐ ॥ स्वायंभुवस्यापीति श्लोकार्थे हरेरंशांशरूपेण जन्मोत्पत्तिर्यस्येति स्वायंभुवमनोर्विष्णोः स्वरूपांशांशत्वमुच्यते । तच्च निरवकाशभेदप्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थं दर्शयंस्तेनैव प्रमाणेन ब्रह्मादीनां हरिस्वरूपत्वांशस्य मत्स्यादीनां हरिस्वरूपांशत्वस्य प्रतिपादकत्वप्रतीयमानं यद्ग्रंथांतरं तस्यापि तात्पर्यं दर्शयति ॥ आविष्टा इति । मनुः स्वायं

भुवो मनुः ॥ ७ ॥ प्रियव्रतोत्तानपादाविति श्लोके प्रियव्रतोत्तानपादयोर्वासुदेवस्य कलयेति वासुदेवस्वरूपांशत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तत्तात्पर्यार्थं दर्शयंस्तेनैव प्रमाणेन ऋषभादीनां हर्यस्वरूपांशत्वप्रतिपादकवत्प्रतीयमानग्रंथांतरस्य तात्पर्यार्थं च दर्शयति ॥ प्रियव्रतेति ॥ ८ ॥ विकल्पे विद्यमानेऽपीति श्लोके पुंसो जीवस्य विकल्प परब्रह्मणा भेदे विद्यमानेऽपि ब्रह्मात्मकत्वेऽपीत्यन्यथाप्रतीतिनिरासाय विकल्प इत्येतद्व्याकुर्वन्विद्यमानेऽपीत्येतदनूद्याभ्याहारेण योजयति ॥ विविधेति । परिणततया विकारित्वेन विद्यमान इत्यर्थः । अनेन विकल्पे विविधे कल्पे कल्प्यत उत्पद्यत इति कल्पः शत्र्वादिः । जातावेकवचनं । तेषु परिणततया । एकस्यैव कदाचिच्छत्रुत्वं कदाचिन्मित्रत्वमित्यादिरूपविकारित्वेन विद्यमानेष्वपि । एते शत्र्वादयो लोकाः पुंसोऽसंतोषहेतवो न हि । कुतः यद्यस्मान्निजकर्मभिः ससात्विकादिस्वाभाविककर्मभिर्भिन्ना । समर्थं । हरेरिति शेषः । असमर्था इति यावत् । तर्हि को संतोषहेतुरित्यत उक्तं ॥ मोहमिति । मुह्यतेऽनेनेति मोहो हरिस्तं ऋतेऽन्यः संतोषहेतुर्न । अतो मातरि कोपो न कार्य इति भागवतवाक्यं व्याख्यात भवति ॥ ३१ ॥ नियमेनैकेति श्लोकार्धे मनसा वरदर्षभं हरिमेकभूतेनैकभूतत्वमैक्येन नियमेन ध्यायेदित्येकभूतपदस्य जीवेश्वरैक्यार्थत्वभ्रांतिनिरासाय यथावद्व्याचष्टे ॥ एकस्मिन्निति । एकस्मिन्हरिरूपे भूते नेति स्थितेनेत्यर्थः ॥ ५४ ॥ परिचर्या भगवन इति श्लोके मंत्रहृदयेनेत्यस्य हृदयेनत्यर्थभ्रांतिनिरासायापेक्षिताभ्याहारेण तदनूद्य व्याचष्टे ॥ मंत्रेति । मनःशब्देन चेतिशब्देन मंत्रहृदयेनेत्यत्र समाहारद्वंद्वः सूचितः ॥ ६१ ॥ सुदुष्करं कर्मेति श्लोके एषो ध्रुवो लोकपालैरिंद्रादिभिरपि सुदुष्करं सुष्टु दुःखेन कर्तुं शक्यं कर्म कृत्वेति ध्रुवस्येंद्रादिदेवशब्दस्य कर्मकर्तृत्वात्क्येंद्राद्युत्तमत्वमुक्तं । तच्च प्रमाणबाधितमित्यतोऽपेक्षिताध्याहारेण तद्वाक्यं योजयति ॥ तस्यैवेति । तस्यैव ध्रुवस्यैव । अनेन सुदुष्करपदस्य सुष्टु दुःखेन कर्तव्यं कर्तुमयोग्यमिति तात्पर्यार्थ उक्तो भवति । ननु कर्तुमशक्यमित्येवार्थः किं न स्यादित्याशंकायां प्रमाणे

नैव परिहरन्स्वोक्तार्थं च दृढयति ॥ नाशक्यमिति । यत्कर्मान्यैः शक्तिं तु शक्तितः कर्तुं तन्मध्ये किंचिद्देवतानामशक्यं न तु नैवेत्यर्थः । तर्हि कुतो न कुर्वतीत्यत आह ॥ शक्ता इति । अपि यद्यपि बुधा देवाः शक्तास्तथाऽपि यत्कर्मान्यविहितमन्यस्यैव विहितं तन्न कुर्वंति स्वायोग्यत्वादित्यर्थः ॥ ७२ ॥ समाहितः पर्यचरदिति श्लोकार्धे दृष्टयादर्शनेनेत्यस्य यतस्ता हरिणा दृष्टाः श्रुता एवाखिलैर्जनैरित्यादिप्रमाणादृष्टेः श्रुतेरादेशेनाज्ञयेत्यर्थभ्रांतिनिरासायानुवादपूर्वकं विवक्षितमर्थमाह ॥ दृष्टयेति । निरूपणयाऽऽदिष्टेन कृतेनेत्यर्थः । अनेन दृष्ट्या नारदेन पुरुषांतरव्यवधानमंतरेण साक्षान्निरूपणया कृतेनादेशेनोपदेशेन पुं०पं हरि पर्यचरादिति ॥ ७४ ॥ ननु देवा चक्रुस्तप इति श्लोके देवाः सर्पेभसिंहकूष्मांडैर्यतो विघ्नं चक्रुः परं हरि गतो ध्रुवस्तान्सर्पादी नापश्यदिति देवैर्ध्रुवस्य विघ्ने कृते विघ्नो न जात इत्युच्यते । तेन देवानां ध्रुवात्पराजयः प्रतीयते । सोऽनुपपन्नः । देवाना ध्रुवोत्तमत्वादित्याशंका प्रमाणेनैव परिहराति ॥ यत्रेति । यत्र यस्मिन्विषये । ते देवाः । तेषां देवाना । अशक्तिताक्तिश्चति । चशब्दश्चित्ताद्यभिमानिन इत्यनेन संबध्यत ॥ ८० ॥ सर्वतो मन इति श्लोकार्धे सर्वभूतेंद्रियाश्रयं मन इत्यन्वयभ्रांतिनिरासाय विवक्षितमन्वयमाह ॥ भूतेति ॥ ८१ ॥ तस्मिन्नभिध्यायतीति श्लोके आत्मनो जीवस्य द्वारं मोक्षमार्गभूत विश्व वायुमभिध्यायतीत्यर्थभ्रांतिनिरासाय पदद्वयमनूद्य व्याचष्टे ॥ विश्वेति । द्वारं कारणमित्यर्थः । एतच्छ्लोकस्योत्तरार्धे लोकपाला लोका भृशं निरुच्छ्वासनिपीडिता इंद्रादिलोकपालानामपि श्वासनिरोध उच्यत इति भ्रांतिनिरासाय तदभिप्रायमाह ॥ लोकाना मेवेति । अनेन लोका भृशं निरुच्छ्वासनिपीडिता अभवन् तत्पीडापरिहाराय सलोकपाललोका हरिं शरणं ययुरिति भागवत वाक्यस्यान्वयः प्रदर्शितः । ननु प्रतीयमानार्थं विहायान्यार्थकल्पना कुतः प्रमाणादित्यतः स्वोक्तार्थे प्रमाणमाह ॥ ध्यातुरिति । ध्यातुर्ध्रुवेणेति शेषः । हरिं ययुः । शरणमिति शेषः । तेभ्यो देवेभ्यः । अन्यप्रवृत्तयोऽन्येषां प्रवृत्तयो भवंतीत्यर्थः । तेषां

देवानामन्यतः । प्रवृत्तिरिति शेषः । तेषां देवानां स्वप्रवृत्तयः स्वस्वयोग्यप्रवृत्तय इत्यर्थः । तेषां स्वश्च प्रवृत्तय इति क्वचित्पाठः ॥ ८४ ॥ **नैवं विदाम** इति श्लोकार्धेऽखिलसत्त्वधाम्न इत्यस्य संपूर्णबलाश्रयेत्यर्थभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ अखिलेति । अनेन चराचरस्य चरं चाचरं च चराचरे तयोः समाहारश्चराचरम् तस्य चराचरस्य मध्ये विद्यमान यदखिलसत्त्वधामाखिलप्राणि समूहस्तस्यैवमेतादृशं प्राणनिरोधं कदाऽपि पूर्वं न विदामेति भागवतवाक्यं व्याख्यात । धामशब्दस्य समूहार्थत्वेऽभिधानं पठति ॥ तेज इति ॥ ८५ ॥ इति श्रीभागवततात्पर्यटिप्पण्या नवमोऽध्यायः ॥ ४–९ ॥ छ ॥

॥ हरिः ॐ ॥ **या निर्वृत्तिस्तनुभृतामिति** श्लोके तनुभृतां देहिनां तव पादपद्मध्यानाद्भगवज्जनस्य कथायाः श्रवणेन वा या निर्वृतिः सुखं स्यात्स्वेमहिम्नि स्थिते ब्रह्मणि परब्रह्मणि सा निर्वृतिर्माभूत्रास्तीति परब्रह्मसुखाद्भगवद्ध्यानादिजन्यसुखस्याधिक्य प्रतीयते । तत्तु यतो वा इत्यादिप्रमाणबाधितमित्यतोऽपेक्षिताध्याहारेण तद्यथावद्व्याचष्ट ॥ **परेति** । ध्यानादिकं विना परब्रह्मणि परब्रह्मण्येव स्थितस्यापीत्यर्थः । अनेन परब्रह्मध्यानादिकं विना परब्रह्मणि स्थितस्यापि तत्स्थितिमात्रेण ध्यानादिनिमित्तकसुख समानं न भवतीति भागवतवाक्यार्थ उक्तो भवति । ननु ध्यानादिकं विनाऽपि ब्रह्मण्येव स्थितो नास्ति । काप्यदृष्टत्वादित्यत आह ॥ **सुप्तावेति** । ध्यानादिकं विना परब्रह्मणि । स्थितस्येत्यनुवर्तते । सुप्तस्य ब्रह्मण्येव स्थितत्वं तु यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति एष आत्मेति होवाचैतदमृतमेतदभयमेतद्ब्रह्मेत्यादिप्रमाणप्रसिद्धं । सुप्तस्यापि ब्रह्मण्येव स्थितत्वेन ध्यानस्यानु मातुं शक्यत्वान्नतद्युक्तमिति चेन्न । न कामयेत्कैव पश्येज्जीवः स्वात्मतमो विना । कालं चेत्यादिमाड्डकभाष्योक्तप्रमाणबाधितत्वा दिति ॥ १० ॥ **ते न स्मरंत्यतितरामिति** श्लोके हे अब्जनाभ ये पुरुषाः भवदीयपादारविंदसौगंध्यलब्धहृदयेषु त्वद्भक्तेषु कृतप्रसंगाः कृतप्रकृष्टस्नेहास्ते आर्यमनीशं हरिं तथा स्वान् सुतसुहृदादीन् संपदश्च न स्मरंतीत्यन्वयभ्रांतिनिरासाय विवक्षितमन्वय

माह ॥ ये स्वा इति । अत्र संपत्पदं भागवतोक्तसुहृदाद्युपलक्षकं ॥ १२ ॥ तिर्यङ्नगद्विजेति श्लोके अज ते तव रूपमहं न न वेद्मि । यत्र रूपे वाचो न प्रवर्तत इति भगवद्रूपस्य ध्रुवाज्ञेयत्वं दृग्भ्यां प्रपश्यन्निति बहिःस्थितं तदंतःस्थं ददर्शेति पूर्वोक्तविरुद्ध कथमुच्यत इति शंकानिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ पश्यमानोऽपीति । अथशब्दो मंगले । आद्यस्तुर्विशेषे । द्वितीय स्तुरवधारणे । हरिं पश्यमानोऽपि कथंचन केनापि प्रकारेण तु विशेषेण । साकल्येनेति यावत् । न तु नैवेति । किंतु किंचिदेव चेति यत्तदप्यथ मंगलरूपस्य हरेस्तथा गुरोः प्रसादेनैव । अनेन तिर्यगादिभिर्विरचितमरचितमजन्यं । अतो जगतः पर विलक्षण मुत्तमं च महदाद्यशेषं स्थविष्ठं सर्वं महदादिगतं व्याप्तं च ते रूपं साकल्येन न वेद्मि । हरिगुरुप्रसादेन किंचिद्वेद्मीति भागवतयोज नोक्ता ॥ १३ ॥ यद्बुद्ध्यवस्थितामिति श्लोकार्थेऽता ब्रह्मणो व्यतिरिक्तो जीवा यद्ब्रह्मबुद्ध्यवस्थितं बुद्धाववस्थितं बुद्ध्य वस्थितत्वादेव स्थितावधिं स्थितोऽवधिर्मर्यादा यस्य तादृशं ब्रह्म दृष्ट्वाऽऽस्त इत्यन्यथाप्रतीतिनिरासाय पदच्छेदं दर्शयंस्तद्यथाव द्व्याचष्टे ॥ वधिमिति । वष्टिभागुरिरल्लोपमिति वचनादल्लोपः यत्तदोर्नित्यसंबंधात्तदित्यध्याहार्यं । आस्ते भगवानिति शेषः ॥ १५ ॥ यस्मिन्विरुद्धगतय इति श्लोकार्थे आनुपूर्व्यीत्यस्य क्रमेणेत्यर्थः प्रतीयते । स प्रकृतासंगत इत्यतः प्रकृत- संगतमर्थमभिधानेनैव दर्शयति ॥ आनुपूर्वीति । अनेन हरेर्विरुद्धगतिविद्यादिमत्त्वं केन प्रमाणेन सिद्धमित्याकांक्षायामानुपूर्व्या श्रुत्यैव सिद्धमित्यानुपूर्व्यीत्यस्य प्रकृतसंगतिरुक्ता भवति ॥ १६ ॥ सत्याशिषो हीति श्लोके सत्याशिषस्तवपादमूलं भजतः पुरुषस्याशिषो मनोरथाः फलंतीत्यन्यथाप्रतीतिनिरासायापेक्षिताध्याहारेण विवक्षितान्वयार्थमाह ॥ तवेत्यादिना ॥ १७ ॥ ननु ततो गंतासीति श्लोके यतो नावर्तते यतिरिति ध्रुवलोकस्य यदपुनरावृत्तिस्थानत्वमुक्तं तदयुक्तं । तथात्वे अहो बत ममा नात्म्यमित्युत्तरश्लोके तदंतवत्स्थानमंतवन्नाशवादिति नाशत्वोक्तिरयुक्ता स्यात् । तथाऽपुनरावृत्तिस्थानकामस्य निद्यत्वोक्तिश्चायुक्ता

स्यादित्याशंकां प्रमाणेनैव परिहरति ॥ आधिपत्यमिति । तुरवधारणे । आधिपत्यमित्यनेन संबध्यते । अवधारणव्यावर्त्य माह ॥ न त्विति । स्थितिः । आनित्येति शेषः । अनेनांतवन्नाशयुक्तं तदाधिपत्यमहं याच इति भागवतवाक्य व्याख्यात । तेन तत्कामनिंदा समर्थिता । ननु यदि ध्रुवलोकाधिपत्यमनित्यं स्यात्तर्हि तदाधिपत्यस्यानित्यत्वं स्यात् । वैकुंठाधिपत्यवन्नित्यं न स्यात् । सत्यलोकादेस्तु पक्षतुल्यत्वान्न क्षुद्रोपद्रव इत्यत आह ॥ तस्यापीति । अपि यद्यपि तत्पद तस्य ध्रुवस्य पदं स्थान । तदाधिपत्यमिति यावत् । अनियतं चानित्यमेव । अपि तथाऽपि । तस्य लोकस्य मुक्तिः । भावप्रधानो निर्देशः । मुक्तिताऽपुनरावृत्तिस्थानकता नियता । हरिणेति शेषः । तथाऽपीत्यत्र तथाशब्दो हेतौ । तथा तस्मादाधिपत्यस्यानित्यत्वाद्ध्रुवेण कृतकामनादीनामप्याधिपत्यकामना निंदाऽपि सुकृता युक्तेत्यर्थः । अनेन हरिणा स्वर्गस्यापुनरावृत्तिस्थानत्वेनानियतत्वान्न कश्चिद्विरोध इत्युक्त भवति ॥ ३१ ॥ ननु तप्ये द्वितीय इति श्लोकार्धे द्वितीये वस्तुन्यसत्यमप्यहं तप्ये तापं प्राप्तोऽस्मीति द्वितीयवस्त्वभाव उच्यते । सोऽयुक्तः । तथात्वे ईश्वरात्क्षीणपुण्येनेत्युत्तर श्लोकोक्तमीश्वरस्येश्वरत्वमयुक्त स्यात् । पुत्राभावे पितृत्ववदीशितव्यत्वाभावे ईश्वरत्वस्यैवासंभवा- दित्याशंकां प्रमाणेनैव परिहरति ॥ द्वितीयस्येति । अनेन द्वितीये स्वतंत्रेऽविद्यमानेऽपि भ्रातृभ्रातृव्यहृद्रुजा भ्रातृरूपो भ्रातृव्यः शत्रुस्तत्र हृन्मनः । स्वातंत्र्यज्ञानमिति यावत् । तद्रूपरुजा रोगेण तप्येऽयं भ्रात्रादिः स्वतंत्रोऽस्मान्मम भय भविष्यतीति भ्रान्त्या तापं प्राप्तोऽस्मीति भागवतवाक्यं व्यख्यातं भवति॥३२॥ तादात्म्यं यच्छताविति श्लोकार्धे तादात्म्यं स ईश्वर एव आत्मा स्वरूपं यस्य स तदात्मा । तदात्मनो भावस्तादात्म्यं । स्वस्वरूपत्वं यच्छतो ददत ईश्वराच्चाद्विहाय मे मनो भिक्षितं भिक्षायुक्तं जातमिती श्वरस्य जीवाय स्वैक्यदातृत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणमुदाहृत्य तादात्म्यशब्दार्थमाह ॥ हराविति । तत्प्रवेशना- त्तस्मिन्हरौ प्रवेशनादित्यर्थः । ततः कारणात्तद्रूपत्वं । भविष्योत्तरपुराण इत्यस्योक्तत्वादित्युत्तरवाक्यस्थपदेनान्वयः । तादात्म्य-

पदस्य हरिस्थचित्ततार्थत्वस्योक्तत्वाच्चित्ततैव हरिस्थचित्ततैव। चशब्दाद्गृहवद्धरिप्रवेशनमेव च तादात्म्य तादात्म्यशब्दार्थो ज्ञातव्य इत्यर्थः। तत्प्रवेशनरूपमोक्षस्य तादात्म्यशब्दार्थत्वे एक प्रमाणमुक्तं। भागवतवाक्यप्रमाणमाह ॥ नैकात्म्यतेति। केचिदेकातभक्ता एकात्मता गृहवद्धरिप्रवेशनरूपमोक्षमपि मे सकाशान्न स्पृहयंतीति भागवतवाक्ये उक्तत्वाचादात्म्यपर्यायैकात्म्यपदस्य हरिप्रवेशन रूपमोक्षार्थस्योक्तत्वान्मोक्ष एव तादात्म्यपदार्थ इत्यर्थः। तादात्म्यपदस्य तृतीयमर्थं प्रमाणेनैवाह ॥ हरीच्छतेति। तुरवधारणे। तदैकात्म्य हरीच्छतैव। हरेरिच्छितमिच्छाविषयस्तदेच्छा तस्य भावस्तत्ता। हरिकामानुसारि कामित्वमेवेत्यर्थ। मे कामः कामेन हरिकामानुसारेणागात्प्राप्त इत्यर्थः। इदमुपासकवाक्यं ॥ ३५ ॥ ननूक्तानपादेन स्वपुत्रस्य ध्रुवस्य पुरुषगजारोपण विहा याराप्य करिणी हृष्ट इति स्त्रीगजारोपणं किमर्थं कारितमिति चेन्न। यतः कुमारस्य स्त्रीगजारोपणमेव मंगलप्रदमतस्तत्कारितमित्याशय वांस्तत्र प्रमाणं दर्शयस्तेनैव प्रमाणेन कन्याना पुरुषगजारोहो मंगलहेतुरिति च दर्शयति ॥ कलभ इति। चोऽवधारणे। करिणीत्यनेन संबध्यते। कन्यानां। मंगलमिति शेषः। बालमंगला बालानां कुमाराणां मंगलं यस्याः करिण्याः सा तथा। बाल मंगल इति क्वचित्पाठः। तत्र तादर्थ्ये सप्तमी ज्ञेया भवतीति शेषश्च पूरणीयः ॥ ५३ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां दशमोऽध्यायः ॥ ४-१० ॥ छ ॥ ॥

॥ हरि ॐ ॥ ॥ व्यक्ताव्यक्तमिति श्लोकार्थे लोहवद्यथा लोहोऽयस्कातनिमित्तेन भ्रमति तथा हरौ हरिनिमित्तेन व्यक्तमिदं विश्वं भ्रमतीत्यर्थाद्धरेरयस्कांतसाम्यं प्रतीयते। तत्र साम्ये किं निमित्तमित्यतो भ्रामकत्वमेवं प्रसिद्धं शिष्यैः स्वयमेव ज्ञातुं शक्यमिति मत्वाऽन्यदपूर्वं निमित्तं प्रमाणेनैव दर्शयंस्तेनैव प्रमाणेन केचित्कर्म वदंत्येनमिति श्लोकस्य कर्मादेरीश्वरैक्यार्थत्वभ्रांतिनिरासाय तात्पर्यार्थमाह ॥ हरिरित्यादिना ॥ ४८ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामेकादशोऽध्यायः ॥४-११ ॥छ॥

॥ हरिः ॐ ॥ अहं त्वमित्यपार्थेति श्लोकार्धेऽहं त्वमिति धीरपार्थोऽपगतोऽर्थो विषयो यस्याः सेत्यहमिति त्वमिति ज्ञानस्याविद्यमानविषयत्वमुच्यते । तदसत् । एतज्ज्ञानविषयस्य स्वरूपरूपस्य विद्यमानत्वादित्यतोऽपेक्षिताध्याहारेण तद्व्याचष्टे ॥ परमेश्वरमिति । इति । प्रतीतिरिति शेषः । स्वोक्तार्थे प्रमाणमाह ॥ न ह्यमिति । स्वामीव भातीत्यर्थे यथाऽहं त्वमित्यपार्थया धिया बंधविपर्ययः संसारस्य नाशो भवतीति भ्रमज्ञानस्य मोक्षसाधनत्वमुच्यत इति भ्रांतिनिरासायापेक्षिताध्याहारेण विपर्ययपदमनूद्य व्याचष्टे ॥ विपर्यय इति । अनेन बंधश्चासौ विपर्ययश्चेति भागवतपदविग्रहः सूचितो भवति ॥ ४ ॥ युक्तं विरहितमिति श्लोकार्धे शक्त्या शक्यत्वाच्छक्तिशब्दवाच्यया गुणमय्या सत्त्वादिगुणात्मिकयाऽऽत्ममायया युक्तं विरहितं चेत्येकस्यैव हरेः परस्परविरुद्धयुक्तायुक्तत्वमुच्यत इत्यतो यथा न विरोधस्तथा तद्वाक्यं योजयति ॥ आत्मेति । अत्रात्मसामर्थ्यायेत्यनेनात्ममाययेति भागवतपदं व्याख्यातं । अभेदं ईश्वरेणापि सृष्ट्यादावतरगतोच्यते यस्मात्सा माया हरेरिच्छा अथवा बलमिति ब्रह्मतर्कप्रमाणेन मायाशब्दस्य हरिसामर्थ्यार्थत्वस्योक्तत्वात् । अनात्ममायया शक्त्या युक्तं गुणमय्या शक्त्या विरहितमिति भागवतवाक्यभेदं कृत्वा विरोधः परिहृतः ॥ ६ ॥ वरार्हण इति श्लोकार्धे त्वदंबुजनाभपादयोर्वरार्हणो वरोत्तमाऽर्हणा पूजा यस्य स तथा । तादृशोऽसीति त्वा निरंतरं नित्यं वयं शुश्रुम इति निरंतरपदस्य नित्यार्थत्वप्रतीतिनिरासाय तदनूद्य तस्यापूर्वमर्थमाह ॥ निरंतरमिति । अनेनांतरं तु पराधाने भेदे रंध्रावकाशयोः । आत्मांतर्धौ विनात्मीयबहिरवधिष्वपीति विश्वकोशाभिधानादंतरशब्दस्यात्मवाचित्वादंबुजनाभपादयोर्निरंतरं नितरामंतर आत्मा मनो यस्य स तथा मिति निरंतरपदस्यान्वयार्थावुक्तौ भवतः ॥ ७ ॥ द्रव्यक्रियेति श्लोकार्धे द्रव्यक्रियाणां देवतानां कर्माकर्मफलप्रद कर्मणोऽकर्मणश्च फलप्रद यज्ञेश हरि ध्रुवो भजतेति हरेर्देवाना कर्मणः कृताकृतौ च फलप्रदत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तद्यथावद्व्याचष्टे ॥ द्रव्येत्यादिना । विषयद्वयं । अनेन कर्म

पदं विषयार्थकमित्युक्तं भवति । तथा नास्त्यकृतः कृतेनेति श्रुतिवचनात्कर्मणां फलं न भवतीत्यकर्मफलं मोक्षस्तं प्रददातीति तत्य दविग्रहश्च सूचितो भवति ॥ १० ॥ सर्वात्मन्यच्युत इति श्लोकार्धे सर्व इत्यस्य जगदैक्यार्थत्वभ्रांतिमभिधानेन परिहरति ॥ विश्व इति । अनेनात्र सर्वशब्दः पूर्णत्वार्थक इत्युक्तं भवति ॥ ११ ॥ मन्यमान इदमिति श्लोके जगताऽविद्यारचितगंधर्वनगरोपमत्वाक्त्या मिथ्यात्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अन्यथात्वादेति । सदैवेत्येवकारोऽन्यथात्वादित्यनेन संबध्यते । नियत्यैवेत्येवकारः क्षिप्रनाशादित्यनेन च । जगत्क्षिप्रनाशादेव स्वप्नेन तुल्यं । अन्यथात्वादेवादिपदोक्तगधर्वनगरेण तुल्यं। न तु मिथ्यात्वात् । यथा मिथ्याभूतगंधर्वनगरं बाधात्पूर्वं सत्त्वेन प्रतीयमानमपि बाधोत्तरकालेऽन्यथा प्रकारांतरेणात्मत्वेन प्रकारेण प्रतीयते तथा देहादिजगदपि बाल्यादिपूर्वावस्थाकाले यन ह्रस्वपरिमाणादिप्रकारेण प्रतीयमाने ततोऽन्यथाकारांतरेण दीर्घपरिमाणप्रकारेण यौवनाद्युत्तरकाले प्रतीयत इत्यन्यथात्वधर्मेणैव जगतो गंधर्वनगरसाम्यं भागवत उक्त न तु मिथ्यात्वेनेति भावः । अत्र क्षिप्रनाशादिति पृथक् स्वप्नसाम्यनिमित्तकथनेन सत्यस्वप्नसाम्यमेव भागवतकारस्याभिप्रेतं न तु जाग्रदैक्यरूप मिथ्यास्वप्नसाम्यमिति सूचितं । मिथ्याभूतस्य नाशासंभवात्तेन ये सर्वस्यापि स्वप्नस्य मिथ्यात्वमंगीकुर्वति ते निरस्ता भवति । ननु मिथ्यात्वादेव जगतो गंधर्वनगरसाम्यं किं न स्यादित्याशंकाऽऽत्मनीति भागवतपदाभिप्रायकथनेनैव परिहरति ॥ वर्तमानमिति । हतुगर्भविशेषणं । न हि मिथ्याभूतं सदा वर्तते । अत्र परमात्मनीत्यनेनात्मनीति भागवतपदं व्याख्याति । उर्वरिततात्पर्येण तदपेक्षितशेषपूरणं कृतं ज्ञेयं । अत्र सदा वर्तमानमित्यनेनाबाध्यत्वं विवक्षितं । अन्यथा सर्वदावर्तमानत्वहेतोर्भागवतोक्तं मायाऽविद्यारचितत्वमयुक्तं स्यादित्यतः प्रमाणेनैव मायाऽविद्याशब्दार्थमाह ॥ महामायेति ॥ १५ ॥ स्थूले दधारेति श्लोकार्धे स्थूले प्राप्ते भगवत्प्रतिरूपे भगवतो द्वितीये रूप एतन्मनो दधारेत्यन्यथाप्रतीतिनिरासाय तस्य विवक्षितमर्थमाह ॥ स्थूल इति ।

अनेन भगवत्प्रतिरूपे सालग्रामादिशिलावद्भगवतः प्रतिमाभूते स्थूलपरिमाणे पातालादिके एतन्मनो दधार। पातालादिकं भगवत्प्रतिमात्वेनाचिंतयदिति भागवतवाक्यं व्याख्यातं भवति। स्वोक्तार्थे प्रमाणमाह ॥ **शिलावदिति** ॥ १७ ॥ **सुदुर्जयं विष्णुपदमिति** श्लोकार्थे यत्स्थानं सूरयो देवादयोऽप्राप्य परं दूरादेव विचक्षते पश्यंति तत्स्थानं त्वया जितमिति ध्रुवप्राप्तस्थानस्य देवैरप्राप्यत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **शिंशुमार इति**। तत्परं सुरान्विनाऽन्ये पश्यंत्येव न तु याति लोकं तु यातीत्यर्थः ॥ २६ ॥ **नेच्छंस्तत्रात्मनेति** श्लोकार्थे आत्मना परमात्मना संतुष्ट आत्मान दह नन्छन दहादीच्छाशून्यः सन् श्रावयेदित्यन्यथाप्रतीतिनिरासायात्मनेत्यादिपदमपेक्षितमध्याहृत्य व्याचष्टे ॥ **मनसेति**। अननात्र सतापस्य यत्परमात्मज्ञाननिमित्तत्वरूपेत्थंभूतत्वं तस्य द्योतकत्वेन लक्षणेत्थंभूताख्यनेति पाणिनीयसूत्रात् कर्मप्रवचनीयसंज्ञकस्य प्रतिशब्दस्य याग नैवात्मानमिति द्वितीया न तु कर्मणीत्युक्तं भवति ॥ ४९ ॥ इति श्रीभागवततात्पर्यटिप्पण्या द्वादशोऽध्यायः ॥ ४–१२ ॥ छ ॥

हरिः ॐ ॥ **स्वरूपमवरुंधान** इति श्लोकार्थे ध्रुवपुत्र उत्कलनामा स्वरूपमवरुंधानः स्वरूपानुसंधानं कुर्वन्नस्मात्स्वस्वरूपादन्यदतिरिक्तं किमपि नास्तीत्याचक्षतेत्युत्कलस्य स्वस्वरूपातिरिक्तजगदसत्त्वज्ञानमुच्यत इत्यन्यथाप्रतीतिनिरासाय स्वरूपपदमनूद्य यथावद्याचष्टे ॥ **स्वरूपमिति**। अनेन स्वरूपं रूप रूप प्रतिरूपो बभूवेति श्रुतो रूपशब्दस्य बिंबार्थकत्वात्तत्र रूपशब्दो बिंबवाची। स्वशब्दो जीववाचीत्युक्तं भवति। एवं स्वरूपपदं योगवृत्त्या व्याख्यायेदानीं प्रमाणेनैवाखंडस्वरूपशब्दवाच्यस्य द्वैविध्यमाह ॥ **भिन्नेति**। हरिः स्वरूपं तु स्वरूपशब्दवाच्यं तु द्विधेत्यन्वयः। अनेन स्वरूपं मत्स्याद्यभिन्नस्वरूपं ब्रह्मादिभिन्नस्वरूपं वाऽवरुंधानः। मनसीति शेष। इति प्रकारांतरेण भागवतवाक्यं व्याख्यातं ॥ ९ ॥ ननु मत्वा तं जडमिति श्लोके कुलवृद्धा भ्रमेर्यवीयासं कनिष्ठं सुतं वत्सरं भूपतिं चक्रुरिति कनिष्ठस्य राष्ट्राधिपत्यमुच्यते। तदयुक्तं। कल्पान्तरे ज्येष्ठपुत्र सति

कनिष्ठस्य राज्याधिपत्यानर्हत्वादित्याशंकां प्रमाणेनैव परिहरति ॥ कल्प इति । कल्पशब्दप्रवृत्तिनिमित्तकथन कल्पाभिमानीन्नि। शिशुमारानुगः सन् स्थित इत्यन्वयः। शिशुमारानुग इत्यत्रानुगशब्दस्यानेकार्थत्वाद्विवक्षितार्थं प्रमाणेनैव दर्शयति ॥ चक्र इति। क्रिस्तुघ्नः शिंशुमारः कल्पं कल्पनामकं ध्रुवपुत्रं ॥ ११ ॥ अंगोऽश्वमेधं राजर्षिरित्यारभ्यास्त्वेकं प्राक्तनमघमित्यंत श्लोक घ्यंगराजक्रतुं प्रति देवानामनागमने तत्र कर्ता हविषाऽग्रहणे च प्राक्तनपापमेव कारणमुच्यते । तेन प्राक्तनपापेनवार्थादनपत्यत्व मनपत्यत्वादंगराजस्य लोकाभावः प्रतीयते । नापुत्रस्य लोकोऽस्तीति श्रुतिवचनात् । अतस्तन्निरासाय प्रमाणेनैव तच्छ्लोकाभि प्रेतार्थं दर्शयन् भागवतोक्तप्राक्तनपाप चास्फुटत्वात्तत्प्रमाणशेषेणैव स्फुटयति ॥ अनपत्योऽपीत्यादिना। लोकं जयति प्राप्नो तीति लोकजित्। तुरवधारणे। पृथुजन्मार्थं इत्यनेन सबन्ध्यते। तेनानपत्यत्वादेर्देवानामागमनादिकं प्रति कारणत्वं निराकृत भवति। बालहत्या कृतं बालहत्याख्यं कृतं कर्म बालहत्याकृते तस्मिन्। द्वितीयार्थे तृतीयार्थे पञ्चम्यर्थे च सप्तमीति महाव्याक रणवचनादियं सप्तमी तृतीयार्थे असावंगो बालहत्याख्यपापकर्मणाऽनपत्यत्वकर्मा न विद्यतेऽनपत्यत्व अपत्यवत्त्वे कर्म यस्य स तथा। बालहत्याख्यप्राक्तनपापेनापत्यहेतुकर्मरहितो जातः। तथा तेनैव पापेनातोऽगराजाद्दुष्टो वेनाख्यः पुत्रश्चाभवदित्यर्थः । अनेन श्रवणद्वादश्यां भोजनाख्यपापकर्मणा पुण्यनाशवद्बालहत्याख्यकर्मणाऽपत्योत्पत्तिनिमित्तपुण्यनाशो जात इति नरदेहेवेह भवत इति श्लोकार्धतात्पर्यार्थ उक्तो भवति ॥ २३ ॥ नन्विति व्यवसिता विप्रा इत्याद्युत्तरभागवतग्रंथ वेनस्य विष्णुदेवताकयज्ञपुण्य जातत्वस्योक्तत्वात्पापजातत्वं कथमित्यतस्तद्ग्रंथाभिप्रायमाह ॥ इष्ट इति। इष्टो यज्ञो नराधिपो विष्णुः। अतो वनदहात। पृथुः पृथुनामकः पृथ्वंतर्गतः सन् आविरभूदित्यर्थः । अनेन विष्णुदेवताकयज्ञजपुण्येन हर्याविष्टो हरिभक्तः पृथुर्जातः। नत वेन इति तद्ग्रंथस्य तात्पर्यार्थं इत्युक्तं भवति। अनेनैव जातो नारायणांशेन पृथुः पृथुपराक्रम इति श्लोकार्धस्यापि तात्पर्यार्थ

उक्तो भवति ॥ ३५ ॥ स बाल एवेति श्लोके स पुरुषो वेनो यतो मृत्युं मृत्युनामकं मातामहमनुव्रताऽनुसृत्य कर्मवान तन कारणेन बाल एवाधार्मिकोऽभवदिति मृत्युनाममातामहानुवर्तनेन वेनस्याधार्मिकत्वमुच्यते । तदसत् । मृत्योर्देवत्वेन तदनुवर्तनस्य धर्मसाधनत्वेनाधर्मसाधनत्वाभावादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ मृत्युरिति । अनेन यो यमभ्राता मृत्युः स एव देवः । न तु वेनस्य मातामहो मृत्युः स त्वसुर एवेत्युक्तं भवति ॥ ३९ ॥ हंत्यसाधुर्मृगानिति श्लोकार्धेऽसाधुरय यता दीनान्मृगा न्हंति । अतोऽसौ वेन इति जनोऽरौत् शब्दमकरोदिति मृगहतृत्वं वनशब्दप्रवृत्तिनिमित्तमुच्यते । तत्कुथ पदलब्धमित्यतः प्रमाण शेषेण तस्य वेनपदार्थत्वं दर्शयति ॥ पीडामिति । अनेन हतृत्वार्थकेन हतीतिपदेन हननजन्यपीडाहतृत्वमुपलक्ष्य पीडाहतुर्भ भागवते उक्तमित्युक्तं भवति ॥ ४० ॥ इति श्रीभागवततात्पर्यटिप्पण्यां त्रयोदशोऽध्यायः ॥ ४–१३ ॥ छ ॥

॥ हरि ॐ ॥ तं सर्वलोकामरेति श्लोके सर्वलोकामरयज्ञस्वरूपं सम्यगादित्यादिनवग्रहस्वरूप त्रयीस्वरूप द्रव्यस्वरूप तपःस्वरूपं हरि यज्ञैर्यजतस्ते तव स हरिर्भवायैश्वर्याय भवतीति हरः सर्वलोकात्मकत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थं दर्शयिष्यन्नादौ सर्वलोकामरयज्ञसंग्रहपदं स्वय व्याचष्टे ॥ सर्वलोकानिति । तत्सग्रहः सर्वलोकादिसग्रहः । इत्युच्यत इति शेषः । इदानी स्वोक्तार्थे प्रमाण वदंस्तेनैव प्रमाणेन त्रयीमयादिपदाना तात्पर्यार्थ दर्शयति ॥ सर्वस्येत्यादिना । तद्वक्तृत्वाद्देवकृत्वाद्वदस्य सकाशात्साधन्यमस्ति तत्तस्माद्वेदप्राधान्याद्धरिस्त्रयीमय इत्युच्यते । सर्वं हविरादिद्रव्य तप आदिकं तद्विषयत्वेन हरिविषयत्वेन संपादितं चेन्मुख्य भवति । न चेदमुख्य भवति । ततस्तस्माद्द्रव्यादर्मुख्यत्वहतुत्वाद्धरिः सर्वमय इत्यु च्यत इत्यर्थः । अनेन द्रव्यं मयं मुख्यं येन तपोमयं येन हरिणा स तथा तमिति भागवतपदद्वयस्य विग्रहः सूचितः ॥ २९ ॥ यज्ञेन युष्मद्विषय इति श्लोक हरेः कलाः स्वरूपांशाः सुरा देवा यज्ञेन सुतुष्टास्तव वाछितं प्रदिशंतीति त्वाना हरिस्वरूपाश

त्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ विष्णोरिति । तुरवधाग्णे ॥ २३ ॥ नन्ववजानंति थ मूढा इत्यारभ्य मत्तोऽन्यः कोऽग्रभुक् पुमान् इत्यंतभागवतश्लोकेषु वेनस्य यत्परब्रह्मत्वमुक्तं तद्यथार्थमेवेति भाति । तत्र मिथ्या त्वस्यानुक्तत्वादिति चेन्न । इत्थं विपर्ययमतिरित्युत्तरश्लोके वनगतपरब्रह्मत्वस्वरूपत्वज्ञानस्य भ्रमत्वोक्त्या तद्विषयस्य वन ब्रह्मैक्यस्य मिथ्यात्वस्यैवोक्तेरित्याशयवान्विपर्ययमतिपदेन सूचित वेनज्ञानफल प्रमाणेनैव दर्शयंस्तेनैव प्रमाणेन वेनज्ञानविस्मृति च दर्शयति ॥ अहं ब्रह्मेत्यादिना । तद्राद्धांतो वेनस्य ब्रह्मैक्यज्ञानरूपसिद्धांतः । मही व्याप्तमित्युक्तमेव विवृणोति ॥ असुरा इति । तत्पुरःसरस्तेषु क्रोधवशगणेषु मुख्यः । भेर्या ख्यापयतोनिशमिति तात्पर्यवाक्येन न यष्टव्यं न दातव्यं न होतव्यं द्विजाः क्वचिदित्येतदध्यायस्थषष्ठश्लोको व्याख्यातो भवति ॥ ३५ ॥ विनिश्चित्यैवमृषय इत्यादिश्लोकेषु विपन्नस्य मृतस्या त्यंतजीवरहितस्य महीपतेर्महीपतिनामकस्य देहस्योरू ममंथुः । तत्र बाव्हको नाम नर आसीदित्यादिनाऽत्यंतजीवरहितत्वेन दहादेव निषादादयो जाता इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ त्र्यंश इति । वेनो वनजीवस्त्र्यंशः स्वव्यक्तो त्रिभिः सात्विकराजसतामसजीवांशैर्युक्तः समुद्दिष्टः पुराणादावुक्त इत्यर्थः । अनेन विपन्नस्येत्यत्र विपत्तिशब्दस्य राजसजीवेन सात्विक तामसजीवाभ्यां राहित्यमेवार्थः । न त्वत्यंतजीवराहित्यमित्यर्थः । सात्विकतामसजीवयोस्तदानी तत्रासत्त्वादित्युक्तं भवति । योऽपाहरज्जायमान इत्यर्धे यो जायमानो निषाद उल्बणं वेनकल्मषमपाहरदिति निषादपुत्रेण तमोयोग्यत्वेन जीवस्य पापक्षय उच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ पापरूपीति । यस्मात्कारणाद्वेनदेहतः पापरूपी निषादः पृथग्जात स्तस्मात्कारणात्पृथोः पुत्राद्वेनो वेनदेहस्थो रजो राजसजीवांशो दिवं ययावित्यर्थः । अनेन वेनकल्मषपापहरंस्तस्करवदपहृतवा न्स्वकीयमकरोत् । पापदेहः सन् वेनदेहात्पृथग्जात इति भागवतवाक्यं व्याख्यातं भवति ॥ ४४ ॥ ४७ ॥ ऊचुः परमसंतुष्टा

इति श्लोके ऋषयः पृथु भगवत्कलां भगवतः स्वरूपांशं विदित्वेष पृथुर्भगवतः कला स्वरूपांश इत्यब्रुवन्निति पृथोः साक्षाद्धरिस्वरूपत्व मुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थं दर्शयंस्तेनैव प्रमाणेन दत्तपाद्यादीनां हरिस्वरूपांशत्वप्रतिपादकप्रतीयमान ग्रंथांतरतात्पर्यार्थं च दर्शयति ॥ पृथ्वीति । यतो हरिः स्वयं तपु पृथ्व्यादिष्वाविष्टस्तस्मात्पृथ्व्यादिष्वाविशेषावेशतो विशेषावेशादेव तपु पृथ्वादिपु साक्षाद्धर्यंशतावचो युक्तं भवतीत्यर्थः ।किस्तुघ्नः शिशुमारः ॥ ४९ ॥ इयं च लक्ष्मीरिति श्लोकार्थे लक्ष्म्याः साक्षा त्पृथुपत्नीत्वमुच्यत इति भ्रांति प्रमाणेनैव निराकरोति ॥ तत्रेति । यत्र यस्मिन्पुरुषे हरिः सन्निहितस्तत्र तत्पुरुषपत्न्यां श्रीश्च सन्निहिता भवति । तत्स्त्रिया सन्निधिमात्रेण रमा पुरुषसन्निहितस्य हरेः साक्षात्पत्नीत्वं नाव्रजेत् । किंतु क्वचित्सर्निहितः गोप्या दिरूपा गोप्यादौ संनिहिता रमा साक्षाद्धरेश्च पुरुषसंनिहितहरेरेव साक्षात्पत्नी भवति । विपरीतं क्वचिदपि न तु नवत्यर्थः ॥५०॥
इति श्रीभागवततात्पर्यटिप्पण्यां चतुर्दशोऽध्यायः ॥ ४–१४ ॥ छ ॥ ॥

॥ हरिः ॐ ॥ ॥ अयं तु साक्षादिति । श्लोकाधनाय पृथुः साक्षाद्भगवानवति पृथोः साक्षाद्धरित्वमुच्यते । तत्तु तस्मात्परोक्षेऽस्मदुपाश्रितान् फलमित्यादिपूर्वभागवतग्रंथेन । तथा वरान्विभो त्वद्वरदेश्वराद्बुध इत्याद्युत्तरभागवतविंशतितमाध्यायग्रंथेन विरुद्धमित्यतः स्वयं तात्पर्यार्थमाह ॥ तत्रेति । अनेन साक्षाद्भगवानयं तस्मिन्पृथौ तु विशेषेण कलयाऽवतीर्णः सन्निहित इति भागवतवाक्यं व्याख्यातं भवति । तथा सप्तसु प्रथमेति सूत्रादयमिति प्रथमा सप्तम्यर्थे इति सूचितं भवति । उक्तार्थे प्रमाणं दर्श यन्प्रसंगसंगत्या तेनैव प्रमाणेन ब्रह्मादीनां भगवत्कलात्वप्रतिपादकग्रंथांतरतात्पर्यं च दर्शयति ॥ ब्रह्मणीत्यादिना । मनौ स्वायं भुवे । कृतवीर्यजे कार्तवीर्यार्जुने । एवमाद्येषु प्रियव्रतादिषु । एवं दैवमूलरूपेषु हरेर्विशेषसन्निधानमुक्त्वेदानीं दत्तावतारेष्वपि देवद्वारा हरेर्विशेषसनिधानं ज्ञापयितुं देवावतारानाह ॥ नरेत्यादिना । अयं तु साक्षाद्भगवांस्त्र्यधीश इत्यत्र त्र्यधीशपदकृत्य

प्रमाणेनाह ॥ **वैन्य इति** । अनेन त्रयाणां लोकानामधीशो राजेति भागवतपद व्याख्यातं भवति ॥ १–३ ॥ इति श्रीभागवतता त्पर्यटिप्पण्यां पंचदशोऽध्यायः ॥ ४–१५ ॥ छ ॥

॥ हरिः ॐ ॥ ॥ **यस्मिन्नविद्यारचितमिति** श्लोकार्धे यस्मिन्हरावधिकरणेऽविद्यारचितमज्ञानकल्पितं जगत्प्रतीतं नानात्वमिव जीवेश्वरादिभेद इव निरर्थक पश्यंतीति जीवेश्वरादिभेदज्ञानदृष्टांतेन जगता निरर्थकत्वमुच्यत इति भ्रांतिनिरासाया पेक्षिताध्याहारेण स्वयं तात्पर्यार्थमाह ॥ **यल्लोक इति** । प्रतीतं यन्नानात्वं भेदस्तद्दृष्टांतेनेत्यर्थः । अनेन यल्लोके निरर्थकमर्थ क्रियाकारि न भवति तद्यस्मिन्हरौ प्रतीतं नानात्वमिवाविद्यारचितमज्ञानकल्पितं संतो यथा मत्स्यादिरूपे हरो भेदा मिथ्येति पश्यंति न तु सर्व जगदिति भागवतवाक्यं व्याख्यातं । स्वोक्तार्थे श्रुतिस्मृतिप्रमाणमाह ॥ **मत्स्येत्यादिना** । एवं धर्मानित्यस्य यथा लोके यदर्थक्रियाकारि न भवति तदेव मिथ्येति पश्यंति । तानेवानुधावतीत्युत्तरवाक्येनान्वयः ॥ २० ॥ इति श्रीभागवत तात्पर्यटिप्पण्यां षोडशोऽध्यायः ॥ ४–१६ ॥ छ ॥ ॥

॥ हरिः ॐ ॥ **पौरान् जानपदानिति** श्लोके श्रेणीपदस्य विवक्षितार्थाप्रतीतः पंक्तिरूपविपरीतार्थप्रतीतश्चाभिधानेनैव विवक्षितमर्थमाह ॥ **राज्ञेति** । ये राज्ञः समानवयसः संतो राज्ञस्तु विशेषेणागरक्षकास्ते श्रेणय इत्युच्यंत इत्यर्थः ॥ २ ॥ यच्चा न्यदपीति श्लोके भगवतः कृष्णस्य यत्पूर्वदेहकथाश्रयं पूर्वावतारकथाश्रयमन्यत् श्रवः श्रूयत इति श्रवो वचनं तदपि भक्ताय म वक्तुमर्हसीति कृष्णपूर्वो या रामस्तस्य कथाश्रयण विदुरेण प्रार्थ्यत इति भ्रांतिनिरासाय पूर्वदेहकथाश्रयमिति पूर्वदेह इति च पदं यथावद्व्याचष्टे ॥ **पूर्वतनानामिति** । अनेन पूर्वदेहो येषां ते पूर्वदेहाः पूर्वतना हरिभक्तास्तेषां कथाया आश्रयभूतं तत्संबद्धं कृष्णस्य श्रवो यशो वक्तुमर्हसीति भागवतवाक्यं व्याख्यातं भवति ॥ ६ ॥ **नमः परस्मा इति** श्लोकार्धे मायया स्वाश्रयव्यामोहकाज्ञानेन

विन्यस्तनानातनवे विशेषण न्यस्ताः स्थापिता नानातनवः शरीराणि यस्मिन्स तथा तस्मा इति हरेरज्ञानकल्पितानेकदेहवत्त्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **ब्रह्मादीति** । मायादेहाः प्रकृतिविकारभूता देहाः । अनेन मायया स्वेच्छया स्वाधीनप्रकृत्या च विन्यस्ता उत्पादिता नाना तनवो येन स तथा तस्मा इति भागवतवाक्य व्याख्यातं ॥२९॥ **नूनं तवे** शस्येति श्लोके योऽकरोदकारयेद्यस्त्वनेक एकश्च स ईशस्य समर्थस्य यस्य तव सभीहित जनैर्लक्ष्यत तस्य तव सकाशात्परतः । सार्वविभक्तिकस्तासिः । परोऽन्य ईश्वरोऽस्तीति कर्तृकारयितृरूपस्य पृथुसंनिहिताद्धरः परमेश्वरं विधत्त इति भ्रांति परिहरति ॥ **स परत इति** । स तस्य तव सकाशात्परतः परोऽन्य ईश्वरो वेति वा परतः परस्मात्परनिमित्ता नश्वरो नेति वा भागवतवाक्य व्याख्यातं ॥ ३२ ॥ **तस्मै समुन्नद्धेति** श्लोके सम्यगुन्नद्धाऽपौरुषेयत्वादिनोत्कृष्टा वेदांतविरुद्धज्ञानेच्छादिशक्तयो यस्मिन्स तथा तस्मा इति हरेर्ज्ञानेच्छादिगुणाभाव उच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **विरुद्धेति** । चशब्दस्तुशब्दार्थः । तु विशेषेण भगवत इत्यन्वयः । युगपदेव यस्य नित्या विरुद्धशक्तयो लोकविरुद्धा अणुत्वमहत्त्वादिशक्तयः संतीत्यर्थः ॥ ३३ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां सप्तदशोऽध्यायः ॥ ४–१७ ॥ छ ॥

॥ हरिः ॐ ॥ **कृत्वा वत्सं सुरगणा** इति श्लोके वीर्यमोजो बलं पय इत्यनेनेंद्रादिदेवाना पूर्वं सर्वथाऽविद्यमानवीर्यादि गुणानामिदानीं दोहनेनोत्पत्तिर्जातेति प्रतीयते । तथा वत्सं विश्वावसुं कृत्वेत्यादो गंधर्वादीनामविद्यमानसौभाग्यादिगुणाना दोहन नैवोत्पत्तिरिति च भाति । तन्निरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **गुणा इति** । वाह्यान् गुणान् वाह्यरूप पयो दुहुः दुदुहुरित्यर्थः ॥१५॥ ननु **दैतेयदानवा वत्समित्यादि** श्लोकेषु प्रल्हादकपिलादेर्वत्सत्वमुच्यते । तदयुक्तं । वैवस्वतमन्वन्तरे क्रियमाणं पृथिवी-दोहनं वैवस्वतमन्वंतर एवेति काले प्रह्लादकपिलादेरभावात् । तस्यैव वैवस्वतमन्वंतरात्पूर्वमेव समाप्तत्वात् । न च पृथिव्यादिभिः

क्रियमाणं भूदोहनं वैवस्वतमन्वतर एवेति कुत इति वाच्यं। भूदाहनानंतरं पृथ्वारब्धाश्वमेधस्य मघवन्नामकेंद्रेण प्रतिघातस्योक्तत्वात्। मघवन्नामकेंद्रस्तु वैवस्वतमन्वतरयारेव नान्यत्रेति प्रमाणसिद्धं। अतः ब्रह्मादादेर्वेत्सत्वोक्तिरयुक्तेत्याशंकां प्रमाणेनव परिहरति ॥ प्रतिमन्वंतरमिति। बभूविरे। भू सत्तायामिति धातोः। संतीत्यर्थः ॥ १६ ॥ घोषान्व्रजांश्चेति श्लोकार्धे घोषशब्दस्य ध्वन्यर्थत्वाद्व्रजशब्दस्य समूहाद्यर्थत्वाद्विवक्षितमर्थमाह ॥ गोष्ठमिति। गोष्ठं घोष इति प्रोक्तं व्रजस्तन्पालसंस्थितिस्तेषा गवां ये पालाः पालकास्तेषां संस्थितिर्यस्मिन् भूभागे स तथा। गोपालकग्रामः प्रोक्त इत्यर्थः ॥ ३१ ॥ इति श्रीभागवततात्पर्य टिप्पण्यामष्टादशोऽध्यायः ॥ ४-१८ ॥ छ ॥

॥ हरिः ॐ ॥ पापान्निवृत्तं वै भूय इत्यारभ्य साऽश्वं रूपं च तद्धित्वा तस्यावंतर्हितः स्वराडित्यंत श्लोकेषु वैन्यसुतान्वधावनं वैन्ययागीयाश्वस्य स्वजटिलादिरूपस्य च त्याग इंद्रेण कृत इत्युच्यते। तेन पृथुसुतादिंद्रस्य दुर्बलत्वं दुर्बलत्वेनावरत्वं च प्रतीयते। तच्च प्रमाणबाधितमित्याशंकां प्रमाणेनैव तदभिप्रायकथनेन परिहरति ॥ देवा इति। एवशब्दो नेत्यनेन संबध्यते। चो देवता इत्यनन च। शक्ताश्च शक्ता अपि देवा ऋषीणां राज्ञा च सकाशादशक्तवन्मोहाय क्वापि दर्शयेयुः। क्वचिद्धरेराज्ञया वा। क्वचित्कार्यतः। तसेः सार्वविभक्तित्वाच्चतुर्थ्यर्थे तसिः। ऋष्यादीना कीर्तिरूपकार्याय वाऽशक्तवद्दर्शयेयुरित्यर्थः। कुत एतदित्यतः कैमुत्यन्यायसिद्धमाधिकत्वहेतुमाह ॥ न हीति। हि यस्मात्ते ऋष्यादयो दवताश्च नव समास्तस्मात्साम्याभावाद् ऋष्यादिभ्यो देवानामधिकत्वाद्देवाः शक्ता एवेत्यर्थः। देवता समा इत्यकपद्यन क्वचित्पाठः। तत्र चशब्दावन्यान्यसमुच्चये ॥ १७ ॥ मास्मिन्महाराजेति श्लोकार्धे आहतात्मत्यत्र सनिहिततानन्येति लभ्यत। तन मया पूजितस्वरूप इति पृथोश्चतुर्मुखपूज्यत्वं प्रतीयते। तथा भवान्परित्रातुमिति श्लोक पृथोश्चतुर्मुखस्तुत्यत्वं चोच्यत। तदुभयं कवलपृथुजीवस्यैवेति

भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थं दर्शयंस्तत्प्रसंगात्तेनैव प्रमाणेन ऋष्यादीनां देववधत्वादिप्रतिपादकग्रथांतरतात्पर्यार्थं च दर्शयति ॥ प्रणिपातादिकमिति । ऋष्यादिष्वित्यादिपदेन पृथ्वादिनृपा ग्राह्याः । नन्वेतद्भागवतव्याख्यानरूपप्रमाणे राजादिष्विति साक्षात्तत्पदेन राज्ञ आदिपदेन ग्रथांतरोक्ता ऋषयो वाच्याः । तद्विहाय विपरीतोक्तिः कुत इति चेत् । उच्यते । राजापेक्षया ऋषीणामुत्तमत्वेन प्राधान्यात्प्राधान्यक्रमेणेयमुक्तिरित्यदोषः । अत एव देवाः शक्ताश्च मोहायेति पूर्ववाक्ये ऋषीणां चैव राज्ञां चेति ऋषिग्रहणं पूर्वं कृतं । ऋष्यादिसंस्थित इति शेषः । हि यस्माद्देवैः ऋष्यादिषु क्रियमाणवत्प्रतीयमानप्रणिपातादिकं ऋष्यादिसंस्थैर्जनार्दन एव क्रियतेऽतो न तेषां देवानां तेजोभंगः । तर्हि देवेतरेषां मनुष्यादीनां स्वावरनमस्कारादिना तेजोभंगः स्यादित्यत आह ॥ अत्युत्तमानामिति । स्वावरांतर्यामिजनार्दन एव प्रणिपातादिकरणादेवात्युत्तमानां देवेतरेषामप्यवरे प्रणिपातादिना तेजोभंगो न विद्यत इत्यर्थः । अनेनादृत आत्मा परमात्मा यस्मिन्पृथौ स तथेति तत्पदाविग्रहः सूचितः । अनेनैव तात्पर्यवाक्येनोत्तराध्यायस्थस्य एष ते श्यकार्षीद्भंगमिति श्लोकस्य तात्पर्यार्थं उक्तो भवति । तत्र दृष्टांतमाह ॥ यथेति । यथा तिर्यक्षु तिर्यग्रूपावरप्रतिमासु गवाश्वत्थतुलस्यादिषु विद्यमानहरिप्रणामादिना नराणां तेजोभगो नास्ति तथाऽत्रेत्यर्थः । तर्हि कुत्र तेजोभंग इत्यत आह ॥ प्राय इति । प्रायः साम्ये साकल्येन साम्ये स तेजोभंगः ॥३४॥ ऐन्द्रीं च मायामिति श्लोकार्धे उपधर्मेति पदस्योप जीवसमीपे विद्यमानधर्म इत्यर्थभ्रांतिनिरासाय प्रमाणेनैव विवक्षितमर्थमाह ॥ धर्मोपम इति ॥ ३८ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामेकोनविंशोऽध्यायः ॥ ४–१९ ॥ छ ॥

॥ हरिः ॐ ॥ सर्वगोऽनावृत इति श्लोकार्धेऽनावृत इत्यनेन हरव्यक्तत्वमुच्यते । तत्त्वेतादृशं प्रतीतिविशेषानुक्तेः । सर्वजीवान्प्रतीति भाति तदयुक्तं । तदव्यक्तमाह हि । अव्यक्तमचल शांतमित्यादिब्रह्मसूत्रादिविरोधादित्यतः प्रमाणेनैव तत्तात्पर्यार्थं

दर्शयंस्तेनैव प्रमाणेन तस्मिन्नेव भागवतश्लोके समासान्तविधेरनित्यत्वेन अनश्चेति सूत्रेण विहितटच्प्रत्ययरहितस्य निरात्मेत्यस्य निर्मक्षिकमितिवदात्मनोऽभावो निरात्मेति हरेर्जीवभावस्वरूपत्वरूपार्थभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ अन्येषामिति । आत्मा सर्वस्य जगत इति तात्पर्योत्तरार्धेन निरनिश्चयेनात्मा जगत आदानादिकर्ता निरात्मा । निर् नास्त्यात्माऽऽदानादिकर्ता यस्य हरेः स तथेति द्वेधा भागवतवाक्यं व्याख्यातं भवति । अत्र निरुपसर्गस्य निर्निश्चय निर्विशेषनिषेधयोरिति विश्वाभिधानेन निश्चयार्थत्वं निषेधार्थत्वं च ज्ञातव्यं ॥ ७ ॥ कैवल्यं तस्य वा इति श्लोकार्धे केवलं ज्ञानभेदे स्यात्केवलं चैककृत्स्नयोरिति विश्वाभिधाना त्कैवल्यं जीवैनैकत्वमैक्यं तस्य हरेर्धर्म इत्यर्थभ्रांतिः । तथा सुषुप्तं तन्निदर्शनमित्यनेन सुप्त्यवस्थावत्त्वधर्मेण हरेर्जीवोपमत्वमुच्यत इति भ्रांतिश्च भवति । तन्निरासाय पूर्वोदाहृतप्रमाणशेषेणैव तत्तात्पर्यार्थं दर्शयंस्तेनैव हरेर्जाग्रत्साम्यबोधकस्थलांतरस्थवाक्यस्य च तात्पर्यार्थं दर्शयति ॥ सुषुप्तवदिति । चशब्दद्वयमवधारणे । निर्दुःख इत्यादि सुप्तसाम्यादिनिमित्तकथनं । एवं हरेः सुप्तिसाम्य कैवल्ये चैकं निमित्तं प्रमाणेनैव प्रदर्श्य निमित्तांतरं प्रमाणांतरेण दर्शयति ॥ आत्मनैवेति । आत्मनैव स्वरूपेंद्रियेणैव । मुच्यत इति मुक्तिः । मुक्तः केवलत्वेन केवलशब्दार्थत्वेन विज्ञेयः । मुच्लृ मोक्षण इति धातोः कर्मण्यौणादिके क्तिन्प्रत्यये मुक्तिरिति शब्द रूपं । मुक्त इति क्वचित्पाठः । अदुःखता न विद्यत दुःखं यस्य स तथा । तस्य भावस्तत्ता । सप्तसु प्रथमेति सूत्रात्प्रथमा पच म्यर्थे । अदुःखत्वान्निमित्ताद्धरिस्तद्वत्केवलशब्दार्थमुक्तवदित्यर्थः । अनेन केवलस्येदं साम्यं तस्य हरेर्धर्मत्वमिति कैवल्यपदस्यार्था तरमुक्तं भवति ॥ ८ ॥ उदासीनमिवेति श्लोकार्धे उदासीनमिवोदासीनः पुरुषो यथा न किमपि करोति तथा हरिः किमपि न करोतीति सर्वथाकर्तृत्वाभावे हरेरुदासीनपुरुषसाम्यमुच्यते । तच्च स हि सर्वकर्तेत्यादिप्रमाणबाधितमित्यतः प्रमाणेनैव तदर्थं कथयति ॥ हरिरिति । अनेनोदासीनपुरुषे सर्वथाकर्तृत्वाभावात्क्लेशेन कर्तृत्वं नास्ति । हरस्तु कर्तृत्वे सत्यपि क्लेशन कर्तृत्वाभा

वाद्धरेरुदासीनपुरुषसाम्यं न तु सर्वथाकर्तृत्वाभावेनेत्युक्तं भवति ॥ १२ ॥ **भिन्नस्य लिंगस्येति** श्लोकस्य दुर्गमार्थत्वात्प्रमाणेनैव तं व्याचष्टे ॥ **जीवादिति** । मनसः । आधीना इति शेषः । मनोविकाराभिमानेनैव सुखदुःखादिप्रदाः । तदभिमानेन सुखादिप्रदत्व ज्ञात्वा तथाऽविकृतस्वस्वरूपं मनश्च ज्ञात्वा न कुर्वीतेति बाह्यमनोविकारमभिमानं न प्राप्नुयादित्यर्थः ॥ १३ ॥ **स्पृशंत पादयोरिति** श्लोके स्वेन कर्मणा कृतापराधेन व्रीडितं शतक्रतुं परिष्वज्य पृथुर्विद्वेषं विससर्जेतींद्रस्य स्वकृतपृथ्वपराधेन लज्जितत्वमुच्यते । तेनेंद्रस्य पृथुजीवाक्षीचत्वं भाति । तत्प्रमाणबाधितमित्यतो दुष्टमोहायेंद्रेण व्रीडितत्वप्रदर्शनमात्र कृत न त्वपराधः कृतो नापि वस्तुतो व्रीडितश्चेत्याशयवान्प्रमाणेनैव तद्दर्शयति ॥ **आयासेति** । आदिपदेनाशक्तत्वग्रहण । तुशब्दस्यानुक्तस्यानायासादेः समुच्चायार्थः । नियमादनायासशक्त्या व्रीडितं सुखिनोऽपि सुरा इत्यन्वय' ॥ १९ ॥ **स उत्तमश्लोकेति** श्लोके महता मुखाच्च्युतो भवत्पदांभोजसुधाकणानिलस्तव चरणारविंदस्य माहात्म्यलक्षणसुधायाः कणस्य लेशस्यानिल उपदेशरूपो वायुः कुयोगिना कुत्सितयोगवता तत एव विस्मृततत्त्ववर्त्मना विस्मृतहरिमार्गाणा नाऽस्मार्क स्मृति वितरति विस्तारयतीति पृथोः कुत्सितयोगवत्त्वमुच्यते । तथा सदुपदेशस्य कुयोगिनां हरिज्ञानसाधनत्वमुच्यते । तदुभयमसत् । पृथोः सुयोगित्वेन कुयोगित्वाभावात् । अयोग्याना कुयोगिनां सदुपदेशेन हरिज्ञानासंभवादित्यतः प्रमाणेन कुयोगिपदार्थं दर्शयन् श्लोकतात्पर्यमाह ॥ **अपक्वेति** । कुयोगिपदस्यार्थः ॥ **अपक्वेति** । अनेन कुयोगिनामपक्वभक्तियुक्तानां तत एव विस्मृतहरिमार्गाणा महन्मुखादुपदेशः स्मृति प्रायः सपूर्ण विष्णुदर्शन नो वितरति न विस्तारयति ऐहिकनरासक्ताना मद्दुपदेशेन किंचिदेव विष्णुदर्शन भवति न तु प्रायः । अतो वरैरलमिति भागवतवाक्यं व्याख्यातं भवति॥२०॥**जंतोर्जगत्यामिति** श्लोके जगदीशेत्यस्य जगत्स्वामित्वार्थे सिद्धेऽपि पूर्णेशत्वरूपार्थांतरमभिप्रेत्य जगच्छब्दस्य पूर्णार्थत्वेऽभिधानं पठति ॥ **जगदिति** । तत्रैवोत्तरार्धे स्व एव धिष्ण्ये स्वमंदिर एवाभिरतस्येति

धिष्ण्यपदस्य मंदिरार्थत्वभ्रांतिमभिधानेन परिहरति ॥ धिष्ण्यमिति । अत्र स्वे इति पदसाहित्याद्धिष्ण्यपदेन महिमा ग्राह्यः । कस्मिन् भगवः स आस्ते स्वे महिम्नीत्यादिश्रुतिसमाख्यादेवं धिष्ण्यपदं व्याख्यायेदानीं करोषि फल्ग्वपीति श्लोकार्धस्य पूर्वार्धेन संगतिं दर्शयन्नन्वयं दर्शयति ॥अल्पपुण्यत्वादेति। अनेन हे जगदीश जगत्यां भूमौ नोऽस्माकं यत्कर्मणि समीहितं चेष्टितं कर्मविषयानुष्ठानं तज्जंतोः प्राणिनो वैशसमेव हिंसारूपमेव हिंसारूपत्वादल्पपुण्यसाधनमेव भवति। न च तद्वल्पपुण्यतत्कर्मवान्मद्भक्तियोग इति वाच्यं । हे दीनवत्सल यतस्त्वं दीनवात्सल्यादेव फल्ग्वप्यल्पपुण्यमपि कर्मोरूत्कृष्टमेव बृहत्फलसाधनं करोषि । वात्सल्यादेव फल्ग्वप्युरु करोमीति त्वया कस्माज्ज्ञातमिति चेत् । शृणु । स्व एव धिष्ण्ये स्वे महिम्न्येवाभिरतस्य ते वात्सल्यं विना तया श्रियाऽपि किं प्रयोजनमस्ति । यतस्तव नित्यमुक्तलक्ष्मीस्वीकारोऽपि वात्सल्यादेव न तु स्वप्रयोजनापेक्षयाऽतो नः फल्ग्वपि कर्मवात्सल्यादेवोरु करोषीति ह्यायस इति भागवतश्लोको व्याख्यातो भवति ॥ २९ ॥ भजंत्यथ त्वामिति श्लोकार्धे अथानंतरमत एव फल्गुकर्मणोरुकर्तृत्वादेव साधवस्त्वां भजंतीत्यथातःशब्दयोर्भ्रांतिनिरासाय विवक्षितमर्थमाह ॥ अथेति । अनेन न केवलं वात्सल्यात्फल्गुकर्मोरु करोषीत्येव किं त्वथान्यच्च साधुकृतं सेवारूपं कर्म चात एव वात्सल्यादेव स्वीकरोषि । न तु स्वप्रयोजनाय । अतः स्वीकरोष्यतस्त्वां भजंतीति वाक्यं व्याख्यातं भवति ॥ ३० ॥ देवर्षिपितृगंधर्वेत्यादि श्लोकद्वये देवर्षिपितृगंधर्वादयो राज्ञा पृथुना यज्ञेश्वरधियेते सर्वे यज्ञेश्वरात्मका एवेति धिया सभाजिताः पूजिताः सतो ययुरिति पृथुना देवादीनां विष्ण्वैक्यानुसंधानेन पूजनं कृतमिति भाति । तच्च निरवकाशभेदप्रमाणवाधितमित्यतः प्रमाणनैव तत्तात्पर्यार्थमाह ॥ भूतेष्विति । भूतेषु देवादिसर्वभूतेषु हरिर्नियामकत्वेन तिष्ठतीति हरौ भूतानामर्पणधिया हर्याधारेण भूतानि तिष्ठंतीति धिया हरेः सर्वभूतेषु पूजा कार्येत्यन्वयः ॥ ३६ ॥ ३७ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां विंशोऽध्यायः ॥ ४-२० ॥

॥ हरिः ॐ ॥ कोन्वस्य शृणु कीर्तिमिति श्लोके अस्य पृथोः कीर्तिं कोऽनभिज्ञो न शृणोति । कीदृशस्य सपाला इंद्रादिलोकपालैः सहिता लोका यद्विक्रमोच्छिष्टं यस्य पृथोः विक्रमस्य सामर्थ्यस्योच्छिष्टमेकदेशमुपजीवंतीतींद्रादिदेवाना पृथु सामर्थ्यैकदेशसामर्थ्यवत्त्वोक्त्या पृथोर्देवेभ्योऽधिकशक्तिमत्त्वं भवति । तच्च प्रमाणबाधितमित्यत' प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ देवेभ्य इति । कचित्तु विशेषेण मोहार्थं शक्तिमत्तयोच्यंते । कचित्तु हेतुतो वरादिकारणाज्जातात् । कदाचित्तात्कालिकादधिक सामर्थ्यान्निमित्ताच्छक्तिमत्तयाच्यंत इत्यर्थः ॥ १० ॥ इहामुत्र चेति श्लोकार्धे इह मनुष्यलोकेऽमुत्र देवलोके च कचित्प्रदेश-विशेष एव ज्योत्स्नावत्यः प्रकाशमाना भुवः प्रदेशा लक्ष्यंत इति देवलोके मनुष्यलोकेऽमुत्र देवलोके च कचित्प्रदेशमनुष्यलोकयोः समानमेव प्रकाशमानस्थलवत्त्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ प्रकाशवदिति । प्रकाशवन्त्यो भुवः स्थलानि येषां देवाना मनुष्याणां च तथेत्यर्थः । चापिशब्दावन्यान्यसमुच्चये । अत्र केचनेति मनुष्यविशेषणमिह कचिद्भुवो ज्योत्स्ना वत्यो लक्ष्यंते । अमुत्र सर्वा अपि भुवो ज्योत्स्नावत्य इति भागवतवाक्ययोजना सूचिता ॥ २६ ॥ राज्यस्वर्गापवर्गाणामिति श्लोकार्धे राज्यस्वर्गापवर्गाणां प्रायेण बाहुल्येनैकात्म्यहेतुकः प्रधान आत्मेकात्मा तस्य भाव एकात्म्यं प्रधानात्मक नत्प्रति हेतुना राज्यादयः प्राचुर्येण जीवस्य प्राधान्यं प्रति हेतवा भवंतीत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैकात्म्यपद व्याचष्टे ॥ ऐकात्म्येनेति । समस्ततः । जगत इति शेषः । नन्वनेन राज्ये स्वर्गापवर्गाणा प्रायेणैकात्म्यहेतुकः प्रधान आत्मा हरिः । स्वार्थ तद्धित-प्रत्ययः । एकात्मैवैकात्म्य तस्य हेतुता कारणत्वं । हरिः प्रायेण राज्यादेः कारण कादाचित्कस्य कस्यचिन्न भवतीति भागवत वाक्यार्थ उक्तो भवति । सोऽनुपपन्नः । स हि सर्वस्य कर्ता सदाहुरित्यादिप्रमाणबाधितत्वादित्यतः प्रायेणत्यस्यापूर्वमर्थमाह ॥ प्राय इति । प्राय इति शब्दोऽवधारणाक्षेपाऽवधारणरूपाक्षेपार्थः । स्वोक्तार्थेऽभिमान पठस्तेनैवाभिधानेनाऽवधारणाक्षेपशब्दार्थ-

माह ॥ प्रायः पदमिति । आक्षेपपदमाहृत्यावधारणपदेनापि संबंधनीयं । अर्थतोऽनुपपद्यमानार्थावग्रतिरत एव दिवाऽभुंजा नस्य पीनत्वं रात्रिभाजनमाक्षिपतीत्यादिशास्त्रीयप्रधानः। यद्वा। अर्थतः क्षपाऽन्यनिषेधोऽवधृतिरवधारणमा। यथा दृष्टेव न दृश्यत नापरेणेत्यादि । अनेन राज्यस्वर्गापवर्गाणां । कर्मणि षष्ठी । राज्यस्वर्गापवर्गात्यैकात्म्यहतुतेकात्म्यस्य प्रधानात्मना हरेरव हतुता प्रायेण नान्यस्येत्यवधारणाक्षेपेणेति भागवतवाक्यं व्याख्यात । ऐकात्म्यहतुनति भागवत क्वचित्पाठः । तत्र भावप्रधाना निर्देशः । एकात्म्यस्य हरेरेव हतुत्वेन गदाभृतः सकाशान्मन्वादीना कृत्यमस्तीत्यर्थो ज्ञेयः ॥ २९ ॥ असाविहानेकेति श्लोक असा जीव इहानकगुणाध्वरैः संपद्यते संपद्युक्तो भवतीत्यर्थभ्रांतिनिरासाय संपद्यत इति पदमनूद्य यथावद्व्याचष्टे॥ संपद्यत इति। प्राण इत्यनेन नासावित्यदःशब्दस्य ह्यर्थत्वं सूचित भवति ॥ ३३ ॥ प्रधानकालाशयेति श्लोके यथाऽनलो दारुषु विभाव्यत उत्पद्यते तथा चेतना जीवः प्रधानकालादिभिः । सम्यग्गृह्यते गम्यत इति प्रधानकालाशयकर्मसंग्रहः सन् क्रियाफलत्वेन शरीरशष शेषमुर्वरितशरीरं प्रतिपद्य प्राप्य विभाव्यत इति जीवस्यैव भ्रांतिनिरासाय यथावद्व्याचष्ट ॥ प्रधानेति । पुण्यापुण्यकर्मभिर्ज्ञायत इति कर्माणि पुण्यापुण्यानि च तानि कर्माणि कार्याणि च तैः पुण्यापुण्यरूपकार्यस्तत्कारणत्वेन हरिर्ज्ञायत इत्यर्थः । अनन क्रियायाः फलं पुण्यपापादिकं यस्माद्धरेः स तथा तस्य भावस्तत्त्वं तेनेति तत्पदं व्याख्यात । प्रधानादीन् गृहीत्वेत्यनेन प्रधानादीन संगृह्णातीति प्रधानकालाशयकर्मसंग्रह इति पदविग्रहः सूचितः । जीवमित्यनेन शरीरऽशिष्य इति शरीरशषा जीवस्तामिति तत्पदं व्याख्यात । विभाव्यत इत्यस्यार्थः ॥ ज्ञायन इति । वीत्युपसर्गबलाद्भवतेर्ज्ञानार्थत्वं ज्ञयं । गुणवदिधने स्थौल्यादिगुणयुक्त इंधन काष्ट । अत्रेंधनस्य गुणवदिति विशेषणदानेन तद्गुणात्मकस्तेषां दारुणा गुणान् स्थौल्यादीन् आदत्त गति तद्गुणात्मनि तत्पदं व्याख्यातं भवति ॥ ३४ ॥ ब्रह्मण्यदेवः पुरुषः पुरातन इत्यादि श्लोकद्वय ब्रह्मण्यदेवः पुरुषा हरिर्नारायणा यज्ञ-

रणाभिवंदनाद्यस्य ब्रह्मकुलस्य चरणाभिवंदनादनपायिनीं लक्ष्मीं यशश्चावाप तद्ब्रह्मकुलं ब्राह्मणकुलं निषेव्यतामिति । ब्राह्मणचरणाभिवंदनेन लक्ष्म्यादिप्राप्तिरुच्यत इत्यन्वयार्थभ्रांतिनिरासाय स्वतो यथावदन्वयार्थौ दर्शयति ॥ हरिरिंद्र इत्यादिना । अनेन स्वराट् स्वर्गाधिपतिर्हरिरिंद्रो यच्चरणाभिवंदनाद्यस्य विष्णोश्चरणाभिवंदनान्नित्यं यत्सेवया यस्य विष्णोः सेवयाऽनपायिनी लक्ष्मी सपत्यशआदिकं चाप सोऽपि ब्रह्मण्यदेवो ब्राह्मणेषु साधुः क्रीडादिगुणविशिष्टो विष्णुर्यतः कारणाद्विप्रप्रिया ब्राह्मणप्रियस्तत्तस्मात्कारणात्सर्वात्मना ब्रह्मकुलमेव ब्राह्मणकुलमेव निषेव्यता । न केवलं विष्णुप्रियत्वेनैव ब्रह्मकुलं सेव्यं किंतु यत्सेवया यस्य सेवनेनाशेषगुणाश्रय ईश्वरः कामं तु ब्राह्मणस्य सेवनेनाशेषगुणाश्रय ईश्वरः कामं तुष्यत्यतोऽपि ब्रह्मकुलं निषेव्यतामिति भागवतश्लोकान्वयार्थो दर्शितो भवतः । स्वोक्तार्थे प्रमाणमाह ॥ यत्प्रसादेनेति ॥ ३७ ॥ पुमांल्लभेतेति श्लोके अत्र लोके पुमान्नित्यं संबंधनिषेवया नित्यं हरौ संबंधो मनःसंबंधो येषां ब्राह्मणानां ते तथा तेषां सेवया जातादात्मनः प्रसादतो यदत्यंतं शमं मोक्षसुखं लभेत ततः पुंलब्धमोक्षसुखात्परमन्यदुत्तमं सुखं हविर्भुजां देवानां किमस्ति नास्त्येवेति देवसुखस्य ब्राह्मणसेवाहेतुकमनुष्यमोक्षसुखतुल्यत्वमुच्यते । तच्च तारतम्यश्रुत्यादिबाधितमित्यतस्तच्छ्लोकस्थकतिपयपदानि योजयति ॥ तस्मादिति । अनेन पुमानत्र संसारे स्वतः स्वभावेनैव नित्यसंबंधनिषेवया हरिनिष्ठब्राह्मणसेवयाऽतिवेलं क्षिप्रं जातादात्मनः परमात्मनः प्रसादाद्यत्स्वयं स्वकं स्वरूपभूतमत्यंतशर्म । शम् शांताविति धातोः शमशब्दः शांत्यर्थकः । शांतिशब्दस्तु शांतिर्मोक्षोऽथ निर्वाणमिति गीताभाष्यद्वितीयाध्यायोदाहृताभिधानान्मोक्षार्थकः । तथा चात्यंतशांतिं मोक्षं लभेत । ततो मोक्षसुखात्परमन्यत्सुखं हविर्भुजां यज्ञभोक्तॄणामपि देवानां सकाशाद्यादृशेन कृताद्यज्ञादस्ति किं नास्त्येवातो महायासवित्तसाध्ययज्ञाज्जायमानसुखस्याल्पायासवित्तसाध्यब्राह्मणसेवयैव जायमानः ॥ ३९ ॥ अश्नात्यनंत इति श्लोके पारमहंस्यवर्यगुरिति पदस्य दुर्गमार्थत्वाद्विवक्षितमर्थमाह ॥ पारमहंस्येति । अनेन पारमहंस्यर्यतीश्वरैर्वर्यः

स्तुत्या गावो वाक्यानि यस्येति तत्पदविग्रहः सूचितः ॥ ४० ॥ ब्रह्मदंडहत इति श्लोकार्थे पापा वनं यद्यस्मात्पृथाः पुत्रात्तमोऽ
धंतमोऽत्यतरदतिक्रम्यागादिति तमोयोग्यस्य वेनजीवस्य पृथुसामर्थ्येन सर्वथा नित्यनरकप्राप्तिरुच्यत । साऽयुक्ता । यो यद्योग्य
स्तस्य सर्वथा तदप्राप्तेः । प्रमाणबाधितत्वादित्यतः सिंहावलोकनन्यायेन प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ वेनस्य इति ॥ ४५ ॥
अहो वयं त्वयेति श्लोकार्थे वय त्वयैव नाथेन मुकुंदनाथा मुकुंदो नाथो येषां ते तथा । त्वमव मुकुंदाख्योऽस्माकं नाथ इति
पृथुजीवस्यैव मुकुंदरूपनाथत्वमुच्यत इति भ्रांतिनिरासाय तदनूद्य तत्तात्पर्यार्थमाह ॥ अहो इति । कुत इत्यत एतदनंतरश्लोक
ज्ञापकत्वेन पठति ॥ यो ब्रह्मेति ॥ इति श्रीभागवततात्पर्यटिप्पण्यामेकविंशोऽध्यायः ॥ ४–२१ ॥ छ ॥

॥ हरिः ॐ ॥ नैव लक्षयत इति श्लोके येऽस्य जगतो हेतवः कारणभूता ब्रह्मादयस्ते सर्वे यथा सर्वदृशामात्मानं पर
मात्मानं न विदुस्तथाऽयं लोको यान्युष्मान्नैव लक्षयते नैव जानातीति दार्ष्टांतिकबलाद्ब्रह्मादीनां सर्वात्मना हरिज्ञानाभाव उच्यत
इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ सर्वज्ञा इति । सर्वज्ञाश्च सर्वज्ञा अप्यस्य जगता हेतवाऽपीत्यन्वयः । यथा
केशवो वेद तथा न जानीयुरिति व्यतिरेकदृष्टांतः ॥ ९ ॥ व्यक्तं ह्यात्मवतामिति श्लोके भगवान्हरिः सिद्धरूपी सिद्धा
पुरुषा एव रूपाणि स्वरूपाण्यस्य संतीति सिद्धरूपी सन् स्वानामनुग्रहायेमां भूमिं चरतीति हरेः सनकादिसिद्धपुरुषक्यमुच्यत इति
भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ हरेरिति । तु विशेषेण प्रतिमाः । स्वातंत्र्यात्स्वं हरिं यंति प्रापयंतीति स्वयं
हरिं प्रातिसाधनं ज्ञानमित्यन्वयः । स्वयं साक्षान्मुख्यतः प्रभुरित्यर्थः ॥ १६ ॥ अस्त्येव राजन्निति श्लोके अतरात्मना मनसा
मलं मलरूपं कषाय क्वाथरूपं कामं विधुनोतीति कामस्यैव विशेषणद्वयमुच्यत इति भ्रांतिनिरासाय कषायपदस्य निर्वचनपूर्वकमर्थं
दर्शयन्मलशब्दार्थं चाह ॥ कषणेनेति । अनेन कषेण कषणेन प्रायश्चित्तादिघर्षणेन याति गच्छतीति कषायः । अयपयगता

विति धातोरिति तत्पदव्युत्पत्तिरुक्ता भवति। तदुभयं कामः पाप चेत्युभयमेवातरात्मना मनसा मलमित्यर्थः ॥ २० ॥ यद्वा रतिर्ब्रह्मणीति श्लोके यदा ब्रह्मणि रतिस्तदा पुमांस्तया रत्या जीवकोशं जीवगृहस्थानीयं शरीरं जहतीति विष्णुशतिमात्रस्य जीवकोशनाशसाधनत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ रतिरिति। अनेन यदा रतिरित्यत्राकारप्रश्लेष विश्लेषाभ्यां पदद्वयमन्यत्रेति शेषपूरणं च कर्तव्यमित्युक्त भवति। अस्मिन्नेवश्लोकेऽबीजं न विद्यते बीज कारण यस्य जीवकोशस्य स तथा तं। तथा हृदयं हृत् अयते जीवो यस्य स तथेति जीवकोशस्यैव विशेषणद्वयमुच्यत इति भ्रांतिनिरासाय स्वय तदनूद्य व्याचष्टे ॥ अबीजमिति। जीवस्य प्रतिबिंबत्वे बीजं निमित्तं हृदय हृदयोपलक्षितदेह इत्यर्थः। अनेन सञ्ज्ञापूर्वको विधिरनित्य इति परिभाषया सुपो धातुप्रातिपदिकयोरिति सूत्रेणात्र द्वितीया द्वितीयारूपसुपाऽलुक् नास्तीति सूचितं। तथा नञोऽन्यार्थत्वमभिप्रेत्य विनेति तात्पर्यार्थ उक्तो भवति। स्वोक्तार्थं प्रमाणेनैव स्पष्टयति ॥ जीवेति। अपिशब्दो द्विधत्यनेन सबध्यते। अनेन बीजहृदयपदं स्वरूपोपाधिवाचक जीवकोशपदं बाह्योपाधिवाचकमित्युक्त भवति। ननु सर्वोपाधिविनाश एव किं न स्यादित्यत आह ॥ सर्वेति। क्वचित्क्वचिदपीत्यर्थः। न केवलं सच्छास्त्रश्रवणादिना ज्ञानज्ञेयाद्यभावः किंतु भक्तरपुमर्थता चेति चार्थः। अपुमर्थत्वे हेतुमाह ॥ अभावादिति। तुशब्दास्योत्तरत्रोपयोगो ज्ञेयः। ज्ञानान्मोक्ष ज्ञानापेक्ष प्रसिद्ध पुंसा ज्ञातुरभावादत्र ज्ञानज्ञेयाद्यभावः। ज्ञानज्ञेयाद्यभावो ज्ञयमुक्तेरपुमर्थता चेत्यन्वयः। आदिपदेन करण ग्राह्यं। प्रसगस्य विपर्यय पर्यवसा नमाह ॥ सर्वथेति। तुशब्दोऽपुमर्थताऽनुवृत्त्यर्थः। ननु तर्हि केचिन्मुक्ता ज्ञानाद्यभावं कथमंगीकुर्वतीत्यत आह ॥ तस्मादिति। तस्मान्मुक्तेरपुरुषार्थत्वात् ॥ २६ ॥ दग्धाशयो मुक्तेति श्लोके पुरुषो यद्यदा दग्धाशयो दग्धदेहो मुक्तो भवति तदा मुक्तसमस्तत द्गुणास्ते प्रसिद्धाश्च ते ज्ञानादयो गुणाश्च तद्गुणाः समस्ताश्च तद्गुणाश्च समस्ततद्गुणा मुक्तः समस्ततद्गुणैरिति मुक्तसमस्तत

द्गुणो ज्ञानादिसमस्तगुणशून्यो भवति। ततश्चात्मनो बहिरंतश्च किमपि न विचष्टे। तथा परमात्मना यद्व्यवधानं भेदस्तत्पुरस्तादेव संसारावस्थायामेवास्ति। तद्विनाशे संसारविनाशे मुक्तो यथा स्वप्नो मिथ्या तथा मिथ्येति मुक्तौ ज्ञानाद्यभावो जीवेश्वरभेदाभावश्च वेदव्यासेन स्वसिद्धांतत्वेनोच्यत इति भ्रांतिनिरासाय बीजं हृदयमित्युक्तानंगीकारेऽनिष्टप्रसंगार्थत्वेन तं स्वयं व्याचष्टे॥ दग्धाशय इत्यादिना। अनेन पुरुषो यदि दग्धाशयो दग्धबीजहृदयः स्यात्तर्हि जीवाशयनाशे मुक्तसमस्ततद्गुणः स्याज्ज्ञानादिगुणभाववत्स्यात्। ततश्च ज्ञानादिगुणाभावादात्मनो बहिरंतश्च किंचिदपि नैव विचष्टे विचक्षीत पश्येत्। तथा यद्यदा यदि परमात्मनाऽरीश्वरजीवयोर्व्यवधानमंतरं। भेद इति यावत्। पुरस्तात्संसारावस्थायामेव स्यात्तदा तर्हि स्वप्ने यथा स्वप्न इवेत्येतावत्। यथा स्वाप्नाः पदार्थाः स्वाप्न एव प्रतीयंते न जाग्रदादौ तथा जीवेश्वरभेदः संसार एव प्रतीयते न तु मुक्तावित्येतदंगीकृत स्यात्। किंच तद्विनाशे जीवहृदयनाशे त्वपुरुष एव पुरुषाभाव आत्मनाश एव स्यात्। अतो भेदादिसर्वज्ञानाभावरूपादात्मनाशरूपान्मोक्षात्संसारावस्थैवोत्तमा स्यात्। ततश्च मोक्षार्थं कोऽपि शास्त्रश्रवणादियत्नं न कुर्यात्। तथा च शास्त्रवैयर्थ्यमेव भवेदिति भागवतश्लोकतात्पर्यार्थं उक्तो भवति। उक्तार्थे प्रमाणमाह॥ भिदेति। प्रवृत्तिधर्ममेव प्रवृत्तिधर्मनिमित्तकसंसारमेवाहमुत्तमं मन्य इत्यर्थः॥ २७॥ नन्वात्मानमिंद्रियार्थं चेत्यादि श्लोकद्वयस्य प्रकृततर्कस्य विपर्ययपर्यवसानप्रदर्शकत्वेन संगतिर्दृश्यते॥ इंद्रियैर्विषयाकृष्टैरिति श्लोकस्य तु प्रकृतसंगतिर्न दृश्यत इत्यतस्तस्य प्रकृतसंगतिं दर्शयति॥ एवं विधेति। ननु यदि मोक्षज्ञानं प्रमाणसिद्धं ज्ञानादेरपलापनिमित्तस्याज्ञानस्य कारणमाहेत्यर्थः। इत्यादि इत्यादिनेत्यर्थः। आदिपदेन भ्रश्यत्यनुस्मृतिश्चित्तमित्यारभ्य न कुर्यात्कर्हिचित्संगमित्यंतश्लोका गृह्यंते॥ २८॥ २९॥ ३०॥ इंद्रियैर्विषयाकृष्टैरिति श्लोके बुद्धेर्जीवस्य चेतना चैतन्यं हरत इत्यर्थभ्रांतिनिरासाय प्रमाणेनैव चेतनाचेतनशब्दार्थमाह॥ स्वपक्षेति। भोगार्थं व्यापृतस्य व्यापारवतः पुरुषस्य भोगेऽभ्यासाच्चाभ्यासादेव तु

विशेषेण स्वपक्षपात आग्रहो भवेत् । ततो भोगाग्रहादनेकशास्त्रयाथार्थ्यस्मरणेशिताऽनेकशास्त्राणां यथावस्थितार्थस्य यत्स्मरणं तस्य शिता स्वामित्वं । स्मरणे शक्तिरिति यावत् । नश्यतीत्यर्थः । अनेनेंद्रियैर्विषयाकृष्टैरित्यारभ्य भ्रश्यत्यनुस्मृतिरित्यतभागवततात्पर्यार्थ उक्तो भवति । तत्र ध्यायत इत्यस्यार्थः ॥ भोगार्थं व्यापृतस्येति । आक्षिप्त मनश्चेतना हरतेत्यस्यार्थ. ॥ स्वपक्षपाती भवेदिति । अनुस्मृतिर्भ्रश्यतीत्यस्यार्थः ॥ अनेकशास्त्रयाथार्थ्यस्मरणेशिता नश्यतीति । स्मृतिक्षय चित्तं भ्रश्यतीत्यस्यार्थः ॥ तेनैवास्य ज्ञानविपर्ययो भवेदिति । तद्रोधं कवयः प्राहुरिति श्लोकस्य तात्पर्यार्थः ॥ न च ज्ञानविपर्यासादन्यन्नाशकरं क्वचिदिति । सर्वस्यैतस्य मूलं हीत्यादि तात्पर्यश्लोकद्वयेन न कुर्यात्कर्हिचित्संगमिति भागवतश्लोकस्य तात्पर्यार्थ उक्तो भवति । तु विशेषेण मूलं हीत्यन्वयः । अबुद्धेर्दुष्टसंगाच्च दुष्टसगादेव विष्णोः स्वात्मत्व स्वैक्यं मन्यते हीत्यन्वयः। आत्मनोऽन्यस्याभावं च मुक्तेर्निरात्मतामपीति चापिशब्दान्वयः ॥ ३१–३५ ॥ मनोमात्रमिदमिति श्लोके इद विश्व मनोमात्र केवलमनःस्वरूपं तथा वासनामात्र वासनास्वरूपं चेति जगतो यस्यकस्यचित्पुरुषस्य मनोवासनाभ्यामैक्यमुच्यत इत्यन्यथाप्रतीति निरासाय प्रमाणेनैव मनोमात्रपदं व्याकुर्वंस्तेनैव प्रमाणेन वासनामात्रपदार्थज्ञायमानार्थस्थलांतरस्थवासनामयपदतात्पर्यार्थमाह ॥ मनोमात्रमित्यादिना । मीयते निर्मीयते उत्पाद्यते स्थितत्वाद्वासनामयं । वस आच्छादन इत्यस्माद्वासनामय चेत्यनेन वासनं वासं हरिं मनसि स्थितमाच्छादनं वा आमाति प्राप्नोतीति वासनामय वासनामात्रं चेति तत्पदोत्पत्तिः सूचिता । अत्र कर्मण्युपपदे आङ्पूर्वान्मान इति धातोः कर्तर्यौणादिके डप्रत्यये त्रप्रत्यये च सति एतत्पदरूपसिद्धिर्ज्ञेया अतो वासनामयत्वात् । विष्णोरनीहायां सृष्ट्यादिव्यापाराभावे व्यापाररहिते प्रलयेऽखिलं जगल्लीयत इत्यर्थः । अनेन यथा स्वप्ने क्रियते उत्पाद्यते इति क्रिया स्वप्नगजतुरगादिकं । मनःक्रिया मनोविकारवासनया क्रियते तथेद विश्वं मनोमात्रं वासनामयमात्र च । अतस्तद्विश्वमनीहायां

प्रलीयत इति भागवतवाक्यं भवति ॥ ३७ ॥ एवं मनोमात्रमिति श्लोके हरेः सृष्ट्यादित्रयकर्तृत्वार्थत्वेन प्रमाणेनैव व्याख्याये- दानीं तत्प्रमाणशेषेणैवात्या त्वनीहयति श्लोकमप्रतीतिनिरासाय हरिमुक्तिप्राप्यत्वार्थत्वेन व्याचष्टे ॥ अनीहेति । न विद्यते ईहा हरेर्जगत्सृष्ट्यादिविषयव्यापारो यस्मिन्काले सोऽनीहोऽनीहे प्रलयकालेऽवस्थितिर्यस्य हरेः स तथा । प्रलयकालस्थ इत्यर्थः । अत्रानीहावस्थ इत्यनेनानीहेति भागवते युक्त इति पदाध्याहारः सूचितः । मुमुक्षुभिरव्याप्यत इत्यनेन प्रसिद्ध्यतीति भागवतपदं व्याख्यातं । एवं विद्वान्बंधशक्तिमिति तात्पर्यश्लोकार्धेनैवं व्युदस्यात्ममायामिति भागवतश्लोकार्धं व्याख्यातं भवति । आत्म मायामित्यत्र मायाशब्दो बंधकशक्तिमिति प्रमाणेन बंधकशक्त्यर्थत्वेन व्याख्याय तत्राभिधान पठति ॥ प्रकृतिरिति । यतो यया बंधकशक्त्याऽयं लोको ह्यव्यनिशं बंभ्रमीत्यंतं पुनः पुनर्वा भ्रमति । अतो वा भ्रमश्चेत्यभिधीयत इत्यन्वयः । अनन भ्रामयतीति भ्रम इति हरिबंधकशक्तौ भ्रमशब्दो निरुक्तः । तेन निर्वचनेन हरिशक्तेर्भ्रमज्ञानरूपत्वभ्रांतिश्च निरस्ता ॥ ३८ ॥ न यत्र मूर्च्छेति श्लोके यत्र ब्रह्मण्यनुवृत्तिरनुकूला वृत्तिर्वचनं नास्तीत्यर्थभ्रांतिनिरासाय प्रमाणेनेव तत्तात्पर्यार्थमाह ॥ अनुवृत्तिरितीति । अनेन यत्र परब्रह्मणि स्थितस्यानुवृत्तिः पुनरावृत्तिरूपा जीवन्मुक्तिर्नास्ति किं त्वपुनरावृत्तिरूपा परममुक्तिरेवास्तीति भागवतवाक्य व्याख्यातं ॥ ३९ ॥ तत्त्वं नरेंद्रेति श्लोके हे नरेंद्र पृथो यो भगवान्देहेंद्रियासुधिषणात्मभिरावृतानां जगतामथ तस्थुषां च तत्त्वमनारोपितं रूपं परमार्थतो भिन्नो विष्वगापिश्च विष्वक् सर्वत्रासमंताद्धीयते सर्वव्याप्तः सन् अनयोः स्थावरजंगमयोर्हृदि प्रत्यक चकास्ति प्रकाशते स भगवान् अहमस्मीति भगवदैक्येन तं हरिं त्वं क्षेत्रविदवेह्युपास्वेति सनत्कुमारेण पृथु जीवेश्वरैक्योपासना विधीयत इति भाति । तत्तु प्रमाणबाधितमित्यतः प्रमाणेनैव तात्पर्यार्थमाह ॥ सर्वसत्तेति । अनेन हे नरेंद्र यो भगवान् देहें द्रियादिभिरावृतानां जगतामथ तस्थुषां तत्त्वं तत्सत्ताप्रदत्वात्तद्व्यापकत्वाच्च तत्त्ववाच्यस्तं भगवंतमनयोः स्थावरजंगमयोः स्थित

॥ ॥

मवैहि । यश्च भगवान्क्षेत्रे विद्यत इति क्षेत्रविज्जीवरूपक्षेत्रे विद्यमानः सन् प्रत्यक् प्रत्यक्त्वेन बिंबत्वेन चकास्ति प्रकाशते यश्च विश्व गाधिर्विष्वक् नानाऽऽधिर्दुःखं यस्माद्धरेः स तथा। यश्च सर्वांतर्यामकोऽहयत्वादहं नामा पराक्षत्वात्स नामा प्रतियोगित्वात्त्वं नामाऽसनान्मितेश्चास्मिनामा तं भगवंतं हृदि स्वहृदि स्थितमवैहीति पदसमन्वयेन भागवतश्लोको व्याख्यातः।एव भागवतश्लोकं सर्वं पदसमन्वयेन हरिपरत्वेन प्रमाणेन व्याख्यायेदानीं जीवेश्वरपरत्वेनापि स्वयं व्याचष्टे॥ त्वमनयोरित्यादिना। जीवोऽसीति शेषः। स्थितं। त्वामिति शेषः। कचिद्धृतिमिति पाठः। प्रत्यक् प्रत्यक्त्वेनाभिमुख्येन। बिंबत्वेनेति यावत्। इति च। भागवतश्लोकार्धस्यार्थ इति शेषः। नन्वत्र श्लोकेऽव्यवहितान्वयेन जीवेश्वरैक्यपरत्वेनैकवाक्यत्वमेव प्रतीयते न तु व्यवहितान्वयेन भिन्नवाक्यत्वमतः कथमेव व्याख्यायत इति चोद्य प्रमाणेनैव परिहरति॥ व्यवधानेनेति। अनेनात्राधमानामव्यवहितान्वयेनैक्यपरत्वेनैक्यवाक्यत्वे प्रतीतेऽप्युत्तमानां व्यवहितान्वयेन भेदपरत्वेन भिन्नवाक्यत्वमपि प्रतीयते। अतो न कश्चिद्दोष इत्युक्तं भवति। अस्मिन्नेव श्लोके देहेंद्रियासुधिषणात्मभिरित्यस्य दहेंद्रियादिस्वरूपैरित्यर्थभ्रांतिनिरासायाभिधानेनैवात्मशब्दार्थमाह॥ अभिमान इति। अनेनात्रात्मपदमहंकारवाचीति सूचितं॥४०॥ यास्मिन्निदमिति श्लोके स्रज्यहिबुद्धिर्वा यथा स्रज्यहेर्भ्रांतिकाले सत्त्वेन बुद्धिर्बाधकालेऽसत्त्वेन बुद्धिर्भवति। तथा यस्मिन्हराविद विश्व भ्रांतिकाले सदसदात्मतया बाधकालेऽसदात्मतया भाति। यस्मिंश्च मायाविवेकविधुतिर्मायाकल्पितविवेकस्य जीवभेदस्य विधृतिरभावोऽस्ति तं नित्यमुक्तपरिशुद्धविबुद्धतत्त्वं हरिं प्रपद्य इति जगतो मिथ्यात्वं हरौ जीवाभेदश्चोच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह॥ यत्स्वरूपतयेति। रज्जौ सर्पवत्सर्पज्ञानविषयसर्पभावदज्ञानां यत्स्वरूपतया यस्य विष्णोः स्वरूपतया भातं गगनादिकं विवेकज्ञानिनां विधूयते निरस्यते तं विष्णु भजेदित्यन्वयः। नित्यमुक्तभावेन नित्यमुक्तस्य भावो धर्मो नित्यमुक्तभावो तेन नित्यमुक्तत्वेनेत्यर्थः। भगवतोक्तपरिशुद्धत्वादेरुपलक्षकमिदं। निरस्तप्रकृतिमित्यनेन प्रत्यूढकर्मकलिलप्रकृतिमिति

भागवतपदं व्याख्यातं । अनेन नित्यमुक्तेत्यादिपदेनोक्तार्थस्य प्रत्यूढेत्यादिवचोऽर्थं प्रति हेतुत्वं सूचितं भवति । ननु जगतो हरिस्वरूपत्वज्ञानस्यैव भ्रमत्वं कुतो जगज्ज्ञानस्यैव भ्रमत्वं किं न स्यादित्याशंकां प्रमाणेनैव परिहरति ॥ न भ्रांतिरिति । मायाविवेकविधुतिरिति भागवतपदं विवेकज्ञानिनां विधूयत इति पूर्वप्रमाणेन व्याख्यातमप्यस्पष्टत्वात्प्रमाणांतरेण स्पष्टं व्याचष्टे ॥ मायेत्यादिना । विवेकिन इति षष्ठी तृतीयार्थे । नन्वत्र श्लोके रज्जुसर्पबुद्धिदृष्टांतेन जगतो ब्रह्मण्यारोपितत्वं तज्ज्ञानस्यैव भ्रमत्वं च प्रतीयते न तु जगतो ब्रह्मतया ज्ञानस्य । अतः कथं तत्स्वरूपतया भानमज्ञानामित्यनेन जगतो ब्रह्मरूपत्वे ज्ञानस्य ब्रह्मार्थत्वेन श्लोको व्याख्यायत इत्याशंकां श्लोकयोजनया परिहरति ॥ ज्ञानप्रकृतीति । विधूयत बाध्यतेऽनेन सत्पृथिव्यादिकमसद्गगनादिकमिदं विश्वं यस्मिन् । षष्ठ्यर्थे सप्तमी । सुपां सुपो भवंतीति वचनात् । यस्य हरेरात्मतया स्वरूपतया विभाति । सा प्रतीतिश्च स्रज्यहिबुद्धिरिव मायाविवेकविधुतिः । माया च माया च माये ज्ञानप्रकृती तयोर्विवेकाद्धरिर्ज्ञानदेह एव न प्रकृतिदेह इति विवेकज्ञानाद्विधुतिर्बाधो यस्याः सा तथा । जगतो यस्य विष्णोः स्वरूपत्वेन ज्ञानं विवेकज्ञानेनावाप्यते तं विष्णुं प्रपद्य इति भागवतवाक्ययोजना प्रदर्शिता भवति । ननु रामकृष्णादिरूपस्य विष्णोर्देहोऽस्मदादिदेहवत्पांचभौतिकदेह एव दृश्यतेऽतः कथं प्रकृतिर्न हरेस्तनुरुच्यत इत्याशंकां प्रमाणेनैव परिहरति ॥ पंचभूतेति । अनेन हरिदेहस्य पांचभौतिकत्वज्ञानं च भ्रम इत्युक्तं भवति ॥ ४१ ॥

यत्पादपंकजपरागेति श्लोके संत उत्तमास्तद्विमतयोऽपि तस्मिन्हरौ द्विरूपा मिश्रा मतिर्येषां ते तथा मिश्रज्ञानिनो मध्यमाश्च विरुद्धमार्गो येषां ते विरुद्धमार्गाः । सृ गताविति धातोः । सरंति गच्छंतीति स्रोतसगता ज्ञानादिगुणा येषां ते तथा । विरुद्धमार्गाश्च ते स्रोतो गुणाश्चाधमाश्च यत्पादपंकजपरागभक्त्या कर्माशयग्रथितं तत्त्वं जगत्तत्त्वं नोद्ग्रथयंत्युत्कृष्टत्वेन प्रतिपादयंतीत्युत्तममध्यमाधमानां हरिभक्त्या जगदुत्कृष्टत्वज्ञानाभाव उच्यत इतिभ्रांतिनिरासाय यथावद्व्याचष्टे ॥ द्विमतय इत्यादिना । उद्ग्रथयत्युत्कृष्टत्वेन ग्रथयंति

संबंधयंति प्रतिपादयंतीत्यर्थः । अनेनैव भागवतश्लोको व्याख्यातो भवति । संतः सज्जना द्विमतयोऽपि द्वयोर्हरिजगतो मतिर्येषां सतां ते तथा । तादृशा अपि यत्पादपंकजपरागविलासभक्त्या यस्य हरेः पादपंकजे पराग इव पद्मपत्रमिव तस्य विलासाः विलासा भावलीलयोरित्यभिधानात् । भावाः क्रीडादिगुणास्तेषु भक्त्या सर्वोत्कृष्टत्वज्ञानपूर्वकस्नेहेन कर्माशयग्रथित आशयो मनस्तेन ग्रथितसंबधं तत्प्रसिद्धं तत्त्वं जगत्तत्त्वं नोद्ग्रथयंति ग्रंथे सबंधयति प्रतिपादयंति किंतु वासुदेवमेवोद्ग्रथयन्त्यतस्तं वासुदेवमरण व्रज गच्छ कुतो नोद्ग्रथयंतीत्यत आह ॥ विरुद्धा इति । यतस्ते विरुद्धमार्गस्रोतोगुणाः स्रति जीवाऽस्मिन्निति स्रोतः संसाररूपं जगत् । तत्रोत्कृष्टत्वादिगुणाःस्रोतोगुणा मार्गः । मृगपदे मांसप्रभेदेऽन्वेषणाध्वनोरिति विश्वप्रकाशान्मार्गोऽन्वेषण प्रतीतिर्विरुद्धप्रमाणबाधिते मार्गे प्रतीतिर्येषां स्रोतोगुणानां तथा विरुद्धमार्गाः स्रोतोगुणा यषा सता ते तथोक्ताः । हरिजगद्विदोऽपि संतो यस्य वासुदेवस्य भक्त्या संसाररूपे जगत्युत्कर्षादिगुणान्प्रमाणबाधितान् ज्ञात्वा कर्माशयग्रथित जगत्तत्त्व नोद्ग्रथयति त वासुदेव शरणं गच्छेति सर्वश्लोकाभिप्रेतार्थः । ननु ब्रह्मरुद्रादिजगति विष्ण्वधीनस्वावरोत्कर्षादिगुणा हिरण्यगर्भः समवर्ततात्र इत्यादिगुणकथाः कथंचिन्न विवक्षिताः किं त्वपराधीनाः संकुचितसर्वोत्कर्षादय एव विवक्षितास्ते विष्णावेव संति नान्यत्रेत्येतदर्थं व्याप्तिप्रतिपादकप्रमाण नैव सूचयति ॥ नैज इति । यस्मिन्वस्तुनि नैजः स्वाभाविक एव न तु परान्निमित्तकः सर्वगुणोत्कर्षः पूर्णानंदगुणरुत्कर्षोऽस्ति तद्वस्तु सर्वेभ्योऽसंकुचितसर्वेभ्यो महदुत्कृष्टमुच्यत इत्यर्थः ॥ ४२ ॥ मनोवाङ्मूर्तिभिः सौम्यैर्गुणैः स रंजयन्प्रजा इत्यारभ्य बृहस्पतिब्रह्मवादे इत्यंत श्लोकेषु सोमादिदृष्टांतेन ये रंजकत्वादयो गुणा उक्तास्ते पृथुजीवतदाविष्टहरिविवक्षयैवेति ज्ञयं । सोमादिवदुभयो रंजकत्वादिगुणानां संभवात् । आत्मतत्त्वे स्वयं हरिरित्यत्र या हरिदृष्टांतेन परमात्मज्ञानाख्यगुण उक्तः स तु नोभय विवक्षया किंतु पृथ्वाविष्टहरिविवक्षयैवेति ज्ञेयं । पृथुजीवे हरिवत्परमात्मज्ञानाभावात् । ननु पृथुजीवे हरिवत्परमात्मज्ञानाभावः कुतः

सिद्ध इति चेन्न । पृथुजीवादुत्तमजीवानां हरिवत्परमात्मज्ञानाभावप्रतिपादकप्रमाणादेव तदधमपृथुजीवस्यापि हरिवत्परमात्मविषयज्ञानाभावः सिद्धः । अत आत्मतत्त्वे स्वयं हारेरित्यत्रोक्तज्ञानाख्यगुणः पृथ्वाविष्टहरिविवक्षयैवोक्तो न तूभयविवक्षयेत्याशयवान्देवादीनां हरिवत्परमात्मविषयज्ञानाभावे प्रमाणमाह ॥ अनाद्यंतमिति । अनाद्यतमिति विशेषणेन देवादीना स्वस्वयोग्यतानुसारेण हरिज्ञाने विद्यमानेऽपि हरेरिव साकल्येन परमात्मज्ञानं नास्तीति सूचितं । न विदुः । हरिवदिति शेषः । तत्परं ब्रह्म विराट् विशिष्टत्वेन राजत इत्यर्थः । स्वराडिति क्वचित्पाठः ॥ ४९ ॥ भक्त्या गोगुरुविप्रेष्वित्यादि श्लोकद्वये पृथुर्विष्वक्सेनानुवर्तिषु गोगुरुविप्रेषु भक्त्या ह्रिया प्रश्रयशीलाभ्यां च परोद्यम चात्मतुल्यः स्वेनैव तुल्यो न त्वन्येन तुल्यः । कीदृशः पृथुस्त्रलाक्ये पुंभि रूर्ध्वगीतया कीर्त्या सतामिव योगिनामिव स्त्रीणां कर्णरंध्रेषु प्रविष्टः । पुनः कीदृशः रामो रमयाति प्रजा इति रामः सुखप्रद इत्यर्थ भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ गुरुविप्रेष्विति । अनेनेवशब्दस्य रामशब्देनान्वयः सूचितः । तथा पृथुर्हि शीलेन चात्मतुल्यो गुरुभक्त्यादिगुणैरात्मतुल्यः कीर्त्या सतां योगिनां कर्णरंध्रेषु प्रविष्टः । राम इव स्त्रीणां कर्णरंध्रेषु प्रविष्ट इति भागवत श्लोकयोजना सूचिता । ननु भक्त्या गोगुरुविप्रेष्वित्यनेन पृथोगुरुभक्त्या रामतुल्यत्वं यदुक्तं तदयुक्तं । साक्षान्नारायणावतारस्य गुरोरेवाभावेन सुतरां तद्भक्त्यभावात् । इत्यतः प्रमाणेनैव तदभिप्रायमाह ॥ न गुरुरिति । न गुरुर्न च धर्मोऽस्तीति क्वचित्पाठः। अनेन धर्मरक्षणार्थं रामेण या गुरुभक्तिः प्रदर्शिता तयेव रामसाम्यमुक्तं । न तु जीववत्साधनरूपभक्त्येत्युक्तं भवति ॥६४-६५॥
इति श्रीभागवततात्पर्यटिप्पण्यां द्वाविंशोऽध्यायः ॥ ४-२२ ॥ छ ॥

॥ हरिः ॐ ॥ ज्ञानं विरक्तिमदिति श्लोकार्धे भगवतोऽनया भक्त्या तथा पृथोर्ज्ञानमभूदित्युक्त्या पृथाः पूर्वमज्ञत्वमिदानीमेव ज्ञानित्वमिति प्रतीयते। तच्चेतः पूर्वमपि पृथोर्ज्ञानित्वप्रतिपादकभागवतादिप्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥

आविर्भावेति। अज्ञ इत्युच्यते। तथा तु विशेषेण ज्ञानमुत्पन्नमिति चोच्यत इत्यन्वयः॥११॥ छिन्नान्यधीरिति श्लोके यन वयुनेन ज्ञानेनेदं संसारबधनमच्छिनत्तज्ज्ञानं तत्यजे तत्याजेति संसारनाशकज्ञानत्याग उच्यते। सोऽनुपपन्नः। न हि घटादित्यागवज्ज्ञानत्यागः संभवति। संसारानिवर्तकत्वेनेष्टज्ञानत्यागस्यासंगतत्वाच्चेत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अपरोक्षतयेति। स्वरूपज्ञानस स्थित्याऽऽवृत्तिज्ञानसंकीर्णस्वरूपज्ञानस्य संस्थितेरपरोक्षतया साक्षात्कारेण हेतुना वृत्तिज्ञानभेदनिरीक्षण सर्ववृत्तिज्ञानाना भेदा विदारण नाशस्य निरीक्षणं प्रत्यक्षज्ञानं ज्ञानस्य त्याग उदीर्यते। असंकीर्णस्वरूपज्ञानं प्रत्यक्षहेतुकं भविष्यत्सर्ववृत्तिज्ञानाभावस्य निरीक्षणं ज्ञानत्याग इत्यर्थः। तथा च स्वरूपज्ञानत एव विष्णुकथासु सम्यग्रतिश्च ज्ञानत्याग उदीर्यत इत्यन्वयः। स्वरूपज्ञानतः सम्यगिति तात्पर्यार्थेन यावद्योगगतिभिः प्राणायामादियोगमार्गैः स्वरूपज्ञानद्वारा गदाग्रजकथासु रति न कुर्याद्रतिमात्र भवत्तावद्योग गतिभिर्यतिरपि प्रयत्नवानप्यप्रयत्नस्तस्य योगगतिप्रयत्नो व्यर्थः स्यात्। अतो यथा हरिकथारतिहेतुर्भवत्तथा योगगतिभिर्यत्नः कर्तव्य इति तावद्योगगतिभिरिति भागवतश्लोकार्थ व्याख्यात भवति ॥ १२ ॥ ब्रह्मभूतो दृढमिति श्लोकार्धे ब्रह्मभूत इति पृथोर्ब्रह्मैक्यमुच्यत इति भ्रांतिनिरासाय ब्रह्मभूतपदं व्याचष्टे ॥ ब्रह्मणीति ॥ १३ ॥ एव स वीरप्रवर इत्यादि श्लोकेषु स वीरप्रवरः पृथुरात्मनि परमात्मन्यात्मान मनः संयोज्य दृढ ब्रह्मभूतः सन् काले समाधिकाल एव स्वकलेवर तत्याजेति कलेवर त्यागमुक्त्वा तमेव त्याग सपीड्य पायुं पार्ष्णिभ्यामित्याद्युत्तरश्लोक विव्रीयते। तेषु श्लोकेषु कलेवरस्थपृथिव्यादीना स्वस्वकारणेषु व्यधादित्यादिना स्थापनरूपविलापनमुच्यते। तत्तु नाश एवेति भ्रांतिं सयुक्तिकप्रमाणेनैव परिहरति ॥ अस्थैर्यमिति। ज्ञानमेव विलापन स्थापनं नाम न तु नाशः। नाशे देहादेः पुनर्दर्शनं न स्यादिति भावः ॥ १५ ॥ तं सर्वगुणविन्यासमिति श्लोके असावनुशयी पुमान् पृथुः महांतं महत्तत्त्वाभिमानिनं चतुर्मुखं मायामयेऽविद्याकल्पिते जीव व्यधात्। त मायामय जीवमनुशयस्थं

व्यधात् । तमनुशयमात्मस्थं स्वस्वरूपस्थं व्यधादित्यर्थभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थं दर्शयन्ननुशयशब्दस्य स्वरूपस्थ अन्यत्र स्वरूपशब्दस्य चार्थं तेनैव प्रमाणेन दर्शयति ॥ मायेतीत्यादिना । अनुशयोऽपि चेत्यत्र चशब्दः श्रीरित्यनेन संबध्यते । अपि शब्दोऽनुशयीत्यनेन संबध्यते । माया जडप्रकृतिर्मापयति प्रकृतिरिति च कथ्यते । जीवश्च जीवस्तु यस्मात्केशवमनुसृत्य शेते तस्मादनुशय इति कथ्यते । न केवलं मायाप्रकृत्यनुशयशब्दौ मायाजीवावेवोच्येते किंच श्रीश्च तु विशेषणैर्मायादिनामभिर्वाच्या । श्रियामनुशयशब्दप्रवृत्तिनिमित्तमाह ॥ विष्णोरिति । अनपायिनीति क्वचित्पाठः । तत्र विश्लेषराहित्यमर्थः । तथवेत्युत्तरत्र संबध्यते । यतो जीवः सदा तयाऽनुशायिन्या बद्धोऽतोऽनुशयीत्यपि कथ्यते । तथैव पूर्षु शरीरेषु शयनात्पुरुष इति कथ्यते । तथाऽह्नानादहं स्मृतः । अप्राकृततनुत्वादिति तात्पर्यप्रमाणेन स्वस्वरूपभूतं रूपं देहो यस्य हरेः स तथा तस्मिंस्तिष्ठतीति स्वरूपस्थ इति भागवतपदविग्रहः सूचितः । नित्यचिद्दर्शनादित्यादि भागवततंत्रवाक्यं । एवं पूर्वप्रस्तुतनित्यविच्छब्दब्रह्मशब्दयोरर्थप्रदर्शकं ज्ञातव्यं । अनेन स्वरूपस्थोऽप्राकृतदेहविष्णुस्थोऽनुशयी श्रिया बद्धः पुमान्पुरुषः शरीरस्थोऽसौ पृथुस्तं महांत चतुर्मुखजीवे चेतन रूपे मायामयेऽभिमानित्वेन जडप्रकृतिप्रधानश्रीतत्त्वे व्यधात्तदधीनत्वेनाचिंतयत् । मायामयं चानुशयं केशवमनुशेत इत्यनुशय कृश वालिंगितलक्ष्मीरूपाभिन्नं व्यधादचिंतयत् । तमनुशयं चात्मस्थं व्यधादचिंतयदिति भागवतवाक्यं व्याख्यातं भवति ॥ १८ ॥ अहो इयं वधूरिति श्लोके धन्येतिपदस्य धनसंबंधित्वरूपार्थभ्रांतिनिरासाय प्रमाणेनैवार्थमाह ॥ अनपेक्ष इति ॥ २५ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां त्रयोविंशोऽध्यायः ॥ ४-२३ ॥ छ ॥

॥ हरिः ॐ ॥ यां वीक्ष्य चार्विति श्लोके शुकीमिवेत्यत्र शुकीशब्दस्य शुकपक्षिपत्न्यर्थभ्रांतिनिरासाय प्रमाणेनैवार्थमाह ॥ राजपुत्रीमिति ॥ ११ ॥ स्वधर्मनिष्ठः शतेति श्लोके यः स्वधर्मनिष्ठः पुमान् शतजन्मभिस्ततःपर विरिंचता चतुर्मुखत्वमतीति

रुद्रेण यस्य कस्यचित्स्वधर्मनिष्ठस्य जीवस्य शतजन्मानंतर स्वप्राप्तिस्तदनंतरं चतुर्मुखरूपत्वमुच्यत इत्यर्थभ्रांतिनिरासाय प्रमाणनव तत्तात्पर्यार्थं दर्शयिष्यन्नादौ तत्प्रमाणानुसारेण स्वयं मामित्यस्यार्थमाह ॥ मामिति । इदानी श्लोकतात्पर्यार्थदर्शक प्रमाणमुदा हरति ॥ ऋजव इत्यादिना । अपरोक्षज्ञानोत्पत्तिकल्पाव्यवहितपूर्वकल्पमारभ्य शतेषु ब्रह्मकल्पेषु जन्मसु हरविंशेषोपासकाः । संत इति शेषः । अस्मिन्नर्थे लिंगाज्ज्ञातव्यतः पूर्वमृजो ब्रह्मत्वतः शतादित्यनुव्याख्यान तत्रत्यास्येतद्ब्रह्मकल्पादारभ्य ब्रह्मकल्पानां शते गते ब्रह्मत्वं भविष्यतीति सुधा च प्रमाण विशेषोपासका इत्यत्र विशेषपदग्रहणेन ततः पूर्व सामान्यनोपासका इति सूचित । तदेव स्पष्टयति ॥ अनादीति । अनेनाव्याकृतं भागवतोऽथेति भागवतस्थभागवतपदमुक्ततात्पर्यार्थं भवति । यदि सर्वदा ज्ञान भक्त्यादौ सर्वजीवनिकायतो विशिष्टास्तर्हि शतजन्मनीति षाड्गुण्ये शतजन्माभिरिति भागवते च कालनियमः किमर्थ इत्याशक्य परिहरति ॥ विशिष्टा इति । अपि यद्यपि सर्वजीवनिकायतो ज्ञानभक्त्यादौ सर्वदा विशिष्टास्तथाऽपि विशेषण सर्वजन्मप्रयत्नतः शतेषु ब्रह्मकल्पेषु जातेषु जन्मसु हर्युपासनारूपयत्नादेव स्वपदप्राप्तिः स्वयोग्यब्रह्मपदप्राप्तिः स्वयोग्यब्रह्मपदप्राप्तिरुद्दिष्टा । न तून शतजन्मप्रयत्नात् । अतः कालनियमो युक्त इत्यर्थः । एवं विरिंचपदयोग्यजीवस्य तत्पदप्राप्तौ कालनियममाह ॥ तथैवेति । अत्र पदं शैव चेति चशब्दस्तुशब्दार्थः । तेन ब्रह्मपदयोग्यस्य जीवस्य शतब्रह्मकल्पजातजन्मसु कृतया हरेर्विशेषोपासनया ब्रह्म-पदप्राप्तिरिंद्रपदयोग्यस्य जीवस्य सूर्यादिपदयोग्यस्य जीवस्यापि विंशद्ब्रह्मकल्पदशब्रह्मकल्पजातजन्मसु कृतया हरेर्विशेषोपासन यैंद्रसूर्यादिपदप्राप्तिर्भवति । रुद्रपदयोग्यजीवस्य त्वपरोक्षज्ञानोत्पत्तिब्रह्मकल्पमारभ्य पंचाशद्ब्रह्मकल्पेषु मध्येऽष्टब्रह्मकल्पान्विहाया नंतरब्रह्मकल्पमारभ्य चत्वारिंशद्ब्रह्मकल्पजातजन्मसु कृतया हरेर्विशेषोपासनया रुद्रपदप्राप्तिर्भवतीति रुद्रपदप्राप्तिसाधनहरिविशेषो पासनायाः सकाशाद्ब्रह्मादिपदप्राप्तिसाधनहरिविशेषोपासनाया विशेषो द्योतितो भवति । यद्वा । चशब्दो दशभिरिति वक्ष्यमाण

पदस्यानुकर्षणार्थः । तथा चापरोक्षज्ञानोत्पत्तिकल्पाव्यवहितपूर्वकल्पद्वयमारभ्य दशभिः सहितैश्चत्वारिंशद्भिः पचाशत्कल्पेषु जातै र्जन्मभिः शैवं पदं प्राप्यत इत्यर्थः । एवमेव विंशद्भिरित्यादिवाक्यमपि व्याख्येयं । नन्वपरोक्षज्ञानोत्पत्तिकल्पमारभ्यैव शतादि कल्पो ग्राह्यः । न तु ततः पूर्वकल्पमारभ्येति चेन्न । तथात्वे एकाधिकशतादिकल्पेषु ब्रह्मादीनां प्रारब्धक्षयाऽगीकृतः स्यात् । तत्तु ब्रह्मणां शतकालान्त्वित्याद्यनुव्याख्यानमूलप्रमाणविरुद्धं । न च शतादिशब्द एकोनशताद्यर्थकः । अतो नानुव्याख्यानविरोध इति वाच्यं । उक्तरीत्या मुख्यार्थग्रहणेनैव विरोधपरिहारे संभवत्यमुख्यार्थग्रहणायोगात् । भागवताद्युक्तविरिंचादिपदप्राप्तिसाधनस्य संकोचापत्तेश्च । अनपरोक्षज्ञानकल्पे स्वयोग्यपदप्राप्तिसाधनानुष्ठाने प्रमाणाभावादयुक्तमेतदिति न वाच्यं । यज्ञेन यज्ञमयजंत देवा इत्यादिश्रुत्यादेरेवात्र प्रमाणत्वात् । सा च श्रुतिर्योग्यमनुष्या एव विद्याकर्मभ्यां देवादया भवंतीति भाष्यटीकाकारैरेव व्याख्यातेति । अत्र स्वधर्मनिष्ठ इत्यस्यार्थः ॥ विशेषोपासका हरेरिति । पुमानित्यस्यार्थः ॥ ऋजवो नामेति । देवा देवत्वयोग्याः ॥ २९ ॥ अथ भागवता इति श्लोकार्धेऽथशब्दस्यानंतर्यार्थत्वभ्रांतिनिरासाय विवक्षितमर्थं दर्शयन्नपेक्षितमध्या हृत्यान्वयं दर्शयति ॥ अथेति । अथेत्यनूद्यात इति व्याख्यातं । यत एवमनादिभक्तोऽहमित्यतावानध्याहारः । अत एवान नाथ मेऽनादिभक्तत्वाद्भागवता भगवद्भक्ता यूयं मे प्रिया इति भागवतवाक्यं व्याख्यातं ॥ ३० ॥ भवतां राधसे इति श्लोकार्धे सर्वस्मै सर्वरूपायेत्यर्थभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ सर्वांतरिति ॥ ३३ ॥ स्वाराज्यस्यापीति श्लोकार्धे स्वाराज्यस्येति पदस्य स्वस्यासमंताद्राज्यं स्वाराज्यमित्यर्थभ्रांतिनिरासायानुवादपूर्वकं प्रकृतोपयुक्तमर्थमाह ॥ स्वाराज्यस्येति । अनेन स्वरव्ययं स्वर्ग नाक इत्याभिधानात्स्वः स्वर्गः स एव राज्यं निवासस्थानं यस्येंद्रादेः स स्वाराज्यस्तस्येति पदविग्रहः सूचितः । तथा रोरीति सूत्रेण रेफलोपे ढ्लोप इति सूत्रेण स्वेत्यत्राकारस्य दैर्घ्ये स्वाराज्यस्येति शब्दरूपसिद्धिरिति च सूचित । तेन चात्म

विदा परमात्मज्ञानिनां भगवत्प्रार्थिर्यया सा आत्मविद्व्यतिरेकांतेन भगवद्भक्तिः स्वाराज्यस्यापीन्द्रादेरप्यभिमतेति भागवतपद्यं व्याख्यात ॥ ५५ ॥ क्षणार्धेनापि तुल्य इति श्लोके क्षणार्धेन जातस्यापि भगवत्संगिसंगम्य स्वर्गं न तुलयत तुल्यं न जान । अपुनर्भव इष्टप्राप्त्यनिष्टनिवृत्तिरूपमोक्षमपि न तुल्य इति सपूर्णमोक्षात्सगस्योत्तमत्वमुच्यत इति भ्रांति सयुक्तिकप्रमाणेनैव परिहरति ॥ संग इति । भूयान् श्रेष्ठः । अनेनात्र पुनरुत्पातिमृतिरूपानिष्टानिवृत्तिरूपमोक्षादेव सत्संगस्य वरत्वमुक्तं । न तु पूर्णमोक्षादित्युक्त भवति ॥ ५८ ॥ अथानघांघ्योरिति श्लोके अनघ तवांघ्योः कीर्तितीर्थयोरिति षष्ठ्या कीर्तितीर्थयोर्भगवदंघ्रिसंबंधः प्रतीयत । तस्यानेकविधत्वात्प्रकृत कः संबंध इति न ज्ञायतेऽतस्तमाह ॥ अंघ्योरिति । अनेन जन्यजनकभावसबंध उक्तो भवति ॥ ५९ ॥ यत्रेदं व्यज्यत इति श्लोकार्धे यद्ब्रह्म विश्वस्मिन्नवभातीति जगति परब्रह्मणः सर्वथा प्रकाशाभाव उच्यत इति भ्रांतिनिरासाया पेक्षिताध्याहारेण तद्वाक्य व्याचष्टे ॥ विश्वस्मिन्निति ॥ ६१ ॥ यो माययेदमिति श्लोके सदिव स्तुतः सन्न भवति । सन्निव यत्र भेदबुद्धिर्जीवाद्भेदः प्रतीयत इति जीवेश्वरभेदस्यासत्त्वमुच्यत इति भ्रांतिनिरासाय तद्वाक्य यथावद्व्याचष्ट ॥ यस्येति । यस्य हरेः दिवा सहितः सदिवा । दिवाशब्दस्य सम्यग्ज्ञानमिति वाच्यार्थकथनं । सम्यग्ज्ञानविषयेन्यादि तु तात्पर्यार्थकथनं । सम्य-ग्यथावस्थिततत्वेन ज्ञायत इति सम्यग्ज्ञानं सम्यग्ज्ञान विषयो यस्याः सेत्यर्थः । सम्यग्ज्ञानेत्यत्र ल्युग्न बहुलमिति बहुलग्रहणात्कर्मणि ल्युट् ज्ञेयः । सत्यैव यथार्थैवेत्यर्थः । दिवाशब्दस्य सम्यग्ज्ञानवाचित्वेऽभिधान पठति ॥ रात्रिरिति । उक्तार्थ प्रमाणमाह ॥ जीवेभ्य इति । अनेन यद्भेदबुद्धिर्यस्य हरेर्जीवादिभ्यो भेदबुद्धिः स दिवा । सम्यग्ज्ञानसहितां सम्यग्ज्ञायत इति सम्यग्ज्ञान यथाऽव स्थितोऽर्थस्तेन सहिता तद्विषया । यथार्थेति यावत् । तं हरिमात्मतंत्रं स्वतंत्रं प्रतीमाहि चितयाम इति भागवतवाक्य व्याख्यात भवति ॥ ६२ ॥ क्रियाकल्पैरिदमेवेति श्लोके भूतेंद्रियांतःकरणोपलक्षणमित्यस्य भूतेंद्रियादीनामुपलक्षणमित्यर्थभ्रांतिनिरासाय त्रिव

क्षितमर्थमाह ॥ भूतेति । उपलक्ष्यते तत्पेरकत्वेन ज्ञायत इत्यर्थः ॥ ६३ ॥ त्वमेक आद्यः पुरुष इति श्लोके सुप्ता लीना शक्तिर्यस्यति हरेः शक्तिनाम उच्यते । स तु परास्य शक्तिर्विविधैव श्रूयत इत्यादिश्रुत्यादिबाधित इत्यतस्तदनूद्य यथावद्याचष्टे ॥ सुप्तेति । अनेन सुप्ता माप्ता स्थिता शक्तिः शक्यत्वाच्छक्तिशब्दवाच्या श्रीर्यस्मिन्निति विग्रहः सूचितो भवति । सुप्तशक्तिमित्यस्य स्ववचनैकमर्थमुक्त्वा प्रमाणेनार्थांतरं दर्शयन् शक्तिशब्दस्य सामर्थ्यार्थत्वभ्रांतिनिरासाय विवक्षितमर्थं च दर्शयति ॥ प्रकृतेरिति । अदर्शनं तु दर्शनमेव हरौ विशेषेण रतिरपि स्वाप उद्दिष्ट इत्यन्वयः । चशब्दस्योत्तरत्रान्वयः । नन्वेवं कुतो व्याख्यायत । सुप्त्य वस्थैव किं न स्यादित्यत आह ॥ ज्ञानेति । यतः प्रकृतिर्ज्ञानात्मिका च सदा हरिजगद्विषयज्ञानरूपैवाता ज्ञानरूपा सुप्तिरस्या न संभवतीत्यर्थः ॥ ६४ ॥ अथो विदुस्त्वां पुरुषमिति श्लोके सारघमित्यस्य शब्द एव घोरे बलत्वार्थभ्रांतिनिरासायाभिधा नेनैव विवक्षितमर्थमाह ॥ अवधारण इति ॥ ६५ ॥ कस्त्वत्पदाब्जमिति श्लोकेऽब्जकेतनो ब्रह्मा उपपत्ति विना धनाद्युपपत्तिं विना यत्पदाब्जमर्चयतीत्यन्यथाप्रतीतिनिरासायोपपत्तिं विनेत्यस्य विवक्षितमर्थमाह ॥ अस्मादिति । अपिपदमव धारणे । अस्माद्दर्यर्चनादेतत्फलं भवतीत्युपपत्त्यपेक्षा स्वसमीपे फलप्राप्त्यपेक्षा विनैवेत्यर्थः ॥ ६८ ॥ यत्स्पृष्टोऽहरहर्मुक्तेति श्लोके जनो यत्स्पृष्टो येन तवांघ्रिणा स्पृष्टो विना पुरुषो मुक्तक्लेशः सन् अमृतांबुधावहरहः शेते तत्तवांघ्रि तावदादौ वद । अथा नंतरं तदनुस्मरते चेत्यन्वयार्थभ्रांतिनिरासायाहरहर्मुक्तक्लेश इत्यस्यापेक्षिताद्याहृतेनान्वयं दर्शयंस्तावदेवेत्यस्यार्थमाह ॥ अहरह इति । दौर्लभ्यज्ञापनार्थं । हर्यंघ्र्यपरोक्षज्ञानस्येति शेषः । अनेनाहरहः प्रतिदिनं मुक्तक्लेशः क्लेशरहितः सुप्त्यवस्थापन्ना जनः सुप्तौ यत्स्पृष्टो येन तवांघ्रिणा स्पृष्टोऽमृताबुधौ सुखसमुद्रे शेते तत्तवांघ्रि जीवः स्पृष्टमपि तावत्तदा सुप्तौ न वेद न पश्यति । अथ च सुप्तेरुत्थानानंतरमपि तत्ते चरणारविंदमनुस्मरत एव न तु पश्यति । अतस्ते चरणारविंदापरोक्षज्ञानं दुर्लभमिति भागवतवाक्यं

व्याख्यातं भवति ॥ ६९ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां चतुर्विंशोऽध्यायः ॥ ४—२४ ॥ छ ॥

हरिः ॐ ॥ ननु कर्मणा ज्ञानमातनाति कर्मणैव हि संसिद्धिमास्थिता जनकादय इत्यादिश्रुतिस्मृत्यादिना ज्ञानसाधनत्वेनोक्तस्यावश्यकर्तव्यस्य कर्मणः श्रेयस्त्वं कतमद्राजन्नित्यादिभागवतश्लोकैर्निंदा कथं क्रियत इत्यतः प्रमाणेनैव कर्मभेदं दर्शयन्निंदावचनविषयं दर्शयति ॥ यथावदित्यादिना। ज्ञानसहाय्यकारकं ज्ञानस्योत्तरभावि यथावत्कर्मसहाय्य पूर्वभावि यथावत्कर्मकारक कारणमित्यर्थः। तुशब्दो यथावत्कर्तुरन्यथाकर्तुं कुर्वतः सकाशाद्विशेषार्थकः। इति यद्यपि तथाऽपि निंदाति। कुतः। यतो निरयसाधनमिति शेषः। यतश्चांजसा कर्म कर्तुं न शक्य ज्ञानफलस्य कर्मफलापेक्षया बहुत्वादपि कर्मणो निंदितत्वात्सर्वथा कर्म न कर्तव्यमिति दुष्टानां मोहनाय चेत्यर्थः। अनेन निरयसाधनकर्मणोऽञ्जसा कर्तुमशक्यकर्मणस्तज्ज्ञानापेक्षया फलकर्मणश्चोक्तप्रकारेण दुष्टमोहनायात्र निंदा कृता न तु ज्ञानसाधनोत्तरभाविशक्यकर्मणः। अतो न कश्चिद्दोष इत्युक्तं भवति ॥ ४ ॥ ७ ॥ ननु ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिरिति विमलज्ञानं प्रार्थितवंतं प्राचीनबर्हिषं प्रति नारदेन गृहेषु कूटधर्मेष्वित्यादिना कर्म निंदितं। तदनंतरं ज्ञानोपदेशः कर्तव्यः। तं विहायात्र ते कथयिष्येऽहमित्यादिना प्रकृतानुपयुक्ता पुरंजनकथा संसारकथा किमर्थमुच्यत इति चेत्। उच्यते। संसाराद्विरक्तस्य ज्ञानयोग्यता। संसाराद्विरक्तिस्तु ससारज्ञानं विना न सभवति। अतः प्राचीनबर्हिषं प्रति जीवसंसारं ज्ञापयित्वा ज्ञानोपदेष्ट्रा नारदेन जीवसंसारसमपुरंजनसंसारकथाऽत्रोक्तेत्यर्थं प्रमाणेनैव दर्शयन्पुरंजनस्य नित्यसंसारिजीवाभिमानित्वं दर्शयंस्तत्प्रसंगात्तेनैव प्रमाणेन देवासुरजीवाभिमानिनोऽपि दर्शयति ॥ देवजीवेत्यादिना। अत्र देवासुरशब्दाभ्यां मनुष्योत्तमाधमावपि ग्राह्यौ। ब्रह्मैव तु विशेषेण सन्मार्गप्रवर्तकत्वेन देवजीवाभिमानी तु देवजीवानामेवाभिमानी। न त्वन्यजीवानां विशेषाभिमानी। मनुष्याणां तु मध्यममानुषाणामेव। स राजा तु राजैव। असुराणा त्वसुराणामेव

तु विशेषेणासन्मार्गप्रवर्तकत्वेनाभिमानीति व्याख्येयं । एवं व्याख्यानेन ब्रह्मकल्पोः सामान्येनाखिलजीवानामभिमानित्वमुक्तं भवति । तेन जीवाभिमानिनश्चैवं त्रिविधाः संप्रकीर्तिता इत्येकादशस्कंधतात्पर्योदाहृतब्रह्मवैवर्तवाक्यविरोधः परिहृतः । तस्मान्मानुषजीवाभिमानित्वात्पुरंजनकथा पुरंजनस्य संसारकथा जीवसंसृतिवत्तु जीवसंसारवदेव भवति । यस्मा ज्जीवसंसृतिवद्भवति तस्माज्जीवसंसृतिज्ञप्त्यै पुरंजनकथां नारदः प्राचीनबर्हिषमश्रावयदित्यन्वयः । प्रत्येकशोऽपि तत्कथा जीवस्थिता तु जीवस्थितैव ॥ ९ ॥ १० ॥ इति तौ दंपतीति श्लोके तौ दंपती पुरंजनस्त्रियौ तां पुरीं प्रवेश्य शतं समा वर्षाणि मुमुदात इति पुरंजनस्य स्वस्त्रिया शतं वर्षेषु सुखवत्त्वमुच्यते । तच्च संसारिजीवे न संभवति । अतः कथं तत्कथा प्रत्येकशो जीवस्थितेत्युच्यत इत्यत उक्तं ॥ प्राय इति । नन्वथाऽप्येतदयुक्तं । स्वर्णरूप्यायसैः श्रृंगैः सकलां सर्वतो गृहैरित्या युक्तस्य जीवपरेऽसंभवादित्यत आह ॥ प्रत्येकमिति । यत्पदं प्रत्येकं जीवे यथा यदर्थत्वेन युज्येत तत्पदं तत्र व्याख्यातं चेत्याह ॥ उक्तमिति । जीवानामिति षष्ठी सप्तम्यर्थे । यावत्पदजातं जीवानां जीवेषूपपन्नार्थत्वेनांगीक्रियते । तावत्पदजातमे तदेतस्मिन्नेव पुरुषं पुरंजनं विद्यात् । यच्चानन्त्यात्मनां पुरं एकत्रिद्विचतुष्पादं बहुपादकमित्यादौ भागवते उक्तमपि जीवेभ्य व्याख्यातं च । तदन्यज्जीवे उक्तादर्थजातादन्यत्प्रसिद्धं बाह्यमर्थजातं केवलं तस्य पुरंजनराजस्यैवेत्यर्थः । एवं पुरंजनसंसारस्य जीवसंसारसाम्य पुरंजनस्य मानुषस्य मानुषजीवाभिमानित्वेनोक्त्वदानीं न केवलं तावतैव किंतु पुरंजनयोषिद्भृत्यादीनां मानुष जीवांतःकरणवृत्तिबुद्ध्याद्यभिमानित्वेनापि पुरंजनसंसारजीवसंसारयोः साम्यमित्याशयवान्पुरंजनस्त्र्यादीनां मानुषजीवबुद्ध्याद्यभि मानित्वेन प्रमाणं वदंस्तत्प्रसंगात्तेनैव प्रमाणेनोत्तमाधमजीवबुद्ध्याद्यभिमानिनाऽप्याह ।॥ ये पुरंजनेत्यादिना । न केवलं मानुष बुद्ध्यादेर्मानुषजीवा एवाभिमानिनः किंतु ये पुरंजनभृत्याद्यास्त एव सर्वेऽपि तु विशेषेणाभिमानिन इत्यपि तुशब्दयोरर्थो ज्ञेयः ।

तेऽपि चेत्यत्रापिपदमध्याहृतेन संबध्यते । चोऽवधारणे । गायत्र्या इत्यनेन संबध्यते । गायत्र्याद्या एव देवानां चतुर्मुखादति-रिक्तदेवानां बुद्ध्यादेस्तु विशेषेणोत्तमाभिमानिनः । न केवलं गायत्र्याद्या देवबुद्ध्यादिविशेषाभिमानिन इत्येव किंतु ते गायत्र्याद्या एतेषु देवव्यतिरिक्तमानुषजीवबुद्ध्यादिषु सामान्येनोत्तमाभिमानित्वेनापि संस्थिताः । अलक्ष्मीद्वापराद्यास्तु विशेषेण स्थिताः कलिव्यतिरिक्तासु जीवबुद्ध्याभिमानिनः । न केवलमलक्ष्मीद्वापरांताद्या असुरजीवबुद्ध्यादिविशेषाधमाभिमानिनोऽपीत्यर्थः । अनेन देहेंद्रियप्राणधियां त्रिधैव त्वभिमानिन इत्याद्येकादशतात्पर्योदाहृतब्रह्मतर्कवाक्यविरोधः परिहृतः । तत्र गायत्र्याद्याः पुरंजन-भृत्याद्या अलक्ष्मीद्वापराद्या इति पदैस्तस्मिन्नेव ब्रह्मतर्के विद्यमानदेवासुरमानुषजीवशब्दानामर्थश्च विवृतो भवति ॥ २१ ॥ पितृभूर्नृपपुर्याद्वारित्यादि श्लोकद्वये दक्षिणमार्गेण दक्षिणपांचालं याति । उत्तरमार्गेणोत्तरपांचालं राष्ट्रं पातीत्युच्यते । तच्च पुरंजनराजपक्षे सुगममेव । जीवपक्षे तु दक्षिणोत्तरमार्गौ दक्षिणोत्तरराष्ट्रे च न ज्ञायेते । अतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ दक्षिणेनेति । पितॄणां । लोकमिति शेषः । अत्रोत्तरेणेत्यस्यार्थः । ॥ दक्षिणश्रोत्रमार्गेणेति । दक्षिणेत्यस्य ॥ वामश्रो-त्रेणेति । उत्तरपांचालराष्ट्रमित्यस्यार्थः ॥ देवलोकमिति । दक्षिणपांचालराष्ट्रमित्यर्थः । पितॄणां लोकमिति पाठक्रमादर्थक्रमो बलीयानिति न्यायमाश्रित्य देवानां पित्रपेक्षया प्राधान्यात्क्रमोल्लंघनं । अनेनैव देवभूः पितृभूरिति पदद्वयमपि व्याख्यातं भवति ॥ ॥ ५१ ॥ ५२ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां पंचविंशोऽध्यायः ॥ ४–२५ ॥ छ ॥ ॥

॥ हरिः ॐ ॥ तीर्थेषु प्रतिदृष्टेष्विति श्लोके लुब्धो राजा यावदर्थं मेध्यपशून्हन्याद्यावदर्थात्परमलं न हन्याद्धनन आसुरी वृत्तिर्भवेदिति लुब्धस्य यावदर्थाधिकहनननिषेधोक्त्याऽर्थादलुब्धस्य यावदर्थादिकहनने दोषाभाव उक्तः । सोऽयुक्तः । व्यर्थहिंसाया निषेधत्वेन तत्करणे दोषवत्त्वनियमादित्याशंकामपेक्षिताध्याहारेण परिहरन्नर्थादुक्तमर्थं स्पष्टयति ॥ अलुब्ध इति । अलुब्धो

यदि लोकोपकारार्थं सज्जनोपकारार्थमात्मार्थाधिकं हन्याच्चत्वधिकं घ्नन्नपि सः । नैव दूष्यतीति शेषः । उक्तार्थे प्रमाणं वदस्तेनैव प्रमाणेन कर्मणा तेन राजेंद्रेति श्लोकस्यापि तात्पर्यार्थमाह ॥ उपकार इत्यादिना । दुष्टमपि कर्म ज्ञानिनो न लिप्यत इत्यन्वयः ॥ ६ ॥ ७ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां षड्विंशोध्यायः ॥ ४-२६ ॥ छ ॥ ॥

॥ हरिः ॐ ॥ द्वाविमावनुशोचंतीति श्लोके यल्लोकशास्त्रोपनतं तयो न राति न ददाति यश्च नेच्छतीमौ द्वावनुशोचति विद्वांसः शास्त्रमात्रसिद्धस्यार्थस्यादातुरनिच्छस्य शोच्यत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अलौकिकामिति यदलौकिकं लोकसिद्धं शास्त्रीयं शास्त्रसिद्धं । शास्त्रमात्रसिद्धमिति यावत् । यच्च शास्त्रीयं लौकिकं लोकसिद्धं तदुभयमेव कर्तव्यं । लौकिकं तु लोकमात्रसिद्धं तु कुतो न कुतोऽपि कर्तव्यमित्यर्थः । कुत इत्यत आह ॥ लोकार्थामिति । लोकमात्रसिद्धमर्थमंगीकृत्य शास्त्रहा शास्त्रं हंति त्यजति स निरयं याति । इतर उक्तोभयविधकर्ता सुरान्यातीत्यर्थः ॥ २५ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां सप्तविंशोऽध्यायः ॥ ४-२७ ॥ छ ॥

॥ हरिः ॐ ॥ स व्यापकतयाऽऽत्मानमिति श्लोके स मलयध्वजः साक्षिणं हरिं व्यापकतया चात्मनि स्वस्मिन्नेव संश्रितयन् आत्मानं स्वं स्वप्न इव स्वप्नो यथा मिथ्या तथाऽविद्याकल्पितत्वेनामृश्य निश्चित्य विरराम त्यन्यथाप्रतीतिनिरासाय स्वप्नशब्दस्यावस्थाद्यनेकार्थत्वात्प्रमाणोदाहरणपूर्वकं विवक्षितमर्थमाह ॥ स्वप्नेनेति । शारीरं जीवं स्वप्नेन स्वप्नावस्थयाऽभिप्रहत्य संबध्य स्वयमसुप्तः स्वप्नावस्थारहितः सन् सुप्तान् जीवान् अभितश्चाकशीति प्रकाशयतीति श्रुतिप्रसिद्धश्रुतौ प्रसिद्धः स्वाप्नो जीवः स्वप्न इवेत्यत्र दृष्टांतत्वेनोच्यत इत्यर्थः । ननु समानधर्मेण हि दृष्टांतो भवति । अत्र कः समानधर्म इत्यपेक्षायां तं दर्शयति ॥ स्वप्नो हीति । अतोऽस्वतंत्रत्वात् । अनेन स्वाप्नजीवस्यास्वातंत्र्येण परमेश्वराधीनत्वं च समानधर्मेण दृष्टांतत्वमित्युक्तं भवति । ततश्च किमित्यत

आह ॥ अतो जीवेति । स्वोक्तार्थे प्रमाणमाह ॥ स्वप्न इति । यथा स्वप्ने जीवो न स्वतंत्रोऽतस्तत्र स्वप्ने तद्दर्शकस्तस्य जीवस्य स्वाप्नगजादिदर्शकः पर उत्तमो जीवादन्यो विज्ञेयः । स तु विष्णुरित्यवधार्यतामित्यर्थः । स्वप्नो यतो न स्वतंत्रस्ततस्तद्दर्शकः पर इति क्वचित्पाठः । तत्र स्वप्नः स्वप्नयुक्तो जीव इत्यर्थः । अनेन स पुरंजनः स्वप्न इव स्वप्ने यथा जीवोऽस्वतंत्रः परमेश्वराधीनश्च तथाऽऽत्मानं स्वमस्वतंत्रं परमेश्वराधीनं चामृश्य सम्यग्ज्ञात्वाऽऽत्मनि स्वस्मिन् स्थितमात्मानं परमात्मानं साक्षिणं साक्षाद्द्रष्टारं व्यापकतया नियामकत्वेन सर्वत्र स्थिततया सर्वस्माद्व्यतिरिक्ततया स्वात्मनि मनसि विशन् प्रवेशयन् । ध्यायन्निति यावत् । विररामेति भागवतवाक्यं व्याख्यातं भवति ॥ ४० ॥ विचरन्पदमद्राक्षीरित्युक्तपदस्य पंचारामं नवद्वारमिति श्लोकेन पंचारामत्वादिविशेषणान्युक्तानि । तद्विवरणार्थं पंचेंद्रियार्था आरामा इति श्लोकः प्रवृत्तः । तत्र गोलकेंद्रियसंग्रह इत्यस्य दुर्गमार्थत्वादर्थमाह ॥ इंद्रियाणीति । अनेनेंद्रियाणि संगृह्यंते यस्मिन्स तथा गोलकलक्षण इंद्रियसंग्रहः । गोलकेंद्रियसंग्रह इति वा । गोलकेष्विंद्रियाणि संगृह्यंते यस्मिन्पदसंज्ञे देहे स गोलकेंद्रियसंग्रह इति विग्रहः सूचितः ॥ ५७ ॥ अहं भवान्न चेति श्लोके बोधकहरिणा बोध्यजीवस्य स्वरूपैक्यमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ जीवसत्तेति । तदभेदेन जीवाभेदेन ॥ ६२ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामष्टाविंशोऽध्यायः ॥ ४ २८ ॥ छ ॥

॥ हरिः ॐ ॥ पंचेंद्रियार्थप्रक्षेप इति श्लोके मृगतृष्णामित्यस्य मृगतृष्णा मरीचिकेत्यमराभिधानान्मरीचिकार्थः प्रतीयते। मरीचिका तु सूर्यमरीचिष्वारोपितं जलं । तच्च प्रकृतासंगतमित्यतः प्रमाणेनैव तस्य विवक्षितमर्थमाह ॥ सुखवदिति । अनेन यथा मरीच्यारोपितं जलं दूरेण सुखप्रदत्वेन दृश्यमानमपि समीपेऽलाभेन दुःखप्रदमेव भवति तथा वैषयिकभोगोऽप्यनुपमर्दे सुखहेतुरिति भाति । उपमर्दे दुःखहेतुरेव भवति । अतो मृगतृष्णापदेन भागवते उक्त इत्युक्तं भवति ॥ २० ॥ दुःखेष्वेकतरेणा

पीति श्लोके जीवस्य चैद्यादिदैवभूतात्महेतुषु दुःखेषु मध्ये एकतरेणापि व्यवच्छेदः स्याचर्हि तत्प्रतिक्रिया तस्य परिहारो यत्नेन कर्तव्य इत्यर्थभ्रांतिनिरासाय तत्प्रतिक्रियेतिपदस्य विवक्षितान्वयार्थमाह ॥ तत्प्रतीति । तदित्येतदनूद्य दुःखमिति व्याख्यातं । तत्प्रतिक्रियाऽपीत्यनेन भागवते एकतरेणापीत्यपिशब्दस्तत्प्रतिक्रियेत्यनेनापि संबद्ध इति सूचितं । अनेन जीवस्य दैवादिहेतुषु दुःखेषु मध्ये एकतरेणापि दुःखेन व्यवच्छेदश्चेत्स्याचर्हि तत्प्रतिक्रिया तत्परिहारो यत्नाऽपि तद्दुःखं दुःखहेतुरेवेति भागवतवाक्यं व्याख्यात भवति ॥ २३ ॥ अर्थे ह्यविद्यमानेऽपीति । श्लोके यथाऽविद्यमाने स्वप्ने विषये विचरतो विजानतः पुरुषः स्वप्नो न निवर्तते तथाऽविद्यमानेऽर्थे सुखदुःखादिरूपेऽर्थे विषये विचरतः संसृतिः सुखदुःखादिसंसारो न निवर्तत इति दुःखादिसंसारगजादिस्वप्नयोरसत्येन धर्मेण साम्यमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव साम्यनिमित्तं धर्मं दर्शयति ॥ संसृतेरिति । तुरवधारणे । यथार्थज्ञानवर्जनमित्यनेन संबध्यते। यथार्थज्ञानस्य वर्जनमभावः । अयथार्थज्ञानमिति यावत् । तन्निमित्तकं साम्यमित्यर्थः। अनेनायथार्थज्ञानविषयत्वमेव स्वप्नसंसारयोः साम्ये निमित्तं न त्वसत्यत्वमित्युक्तं भवति । नन्वयथार्थज्ञानविषयत्वेनापि स्वप्नसंसारयोः साम्यं नांगीकर्तुं शक्यं । तथात्वेऽपसिद्धांतः स्यात् । अयथार्थज्ञानविषयस्यासत्यनियमादिति चेत् । न । न ह्यस्माभिः सर्वस्य संसारस्य स्वप्नस्य वा यथार्थज्ञानविषयत्वमंगीक्रियते । येनापसिद्धांतः स्यात् । किं नाम संसारस्वप्नैकदेशस्यैवातो न कश्चिद्दोष इत्याशयवान्प्रमाणेनैव यथार्थज्ञानविषयं संसारस्वप्नैकदेशं दर्शयति ॥ जाग्रतीति । जाग्रद्रूपे ससारे । आदिपदेन जीवस्वातंत्र्यादिकं ग्राह्यं । जाग्रत्त्वं जाग्रदैक्यं । ज्ञायत इति ज्ञानं जाग्रत्त्वं च तज्ज्ञानं तज्जाग्रत्त्वज्ञानमित्यर्थः । अनेन यथा स्वप्नेऽविद्यमानमेव जाग्रदैक्यं ज्ञायते तथा जाग्रद्रूपसंसारे विद्यमानो योऽर्थः । अर्यते ज्ञायत इत्यर्थः । देहात्मत्वादिस्वातंत्र्यादिश्च । तस्मिन्विषये लिंगरूपेणालिंगरूपेण देहांतर्गतत्वेन ज्ञापकरूपेण वा मनसा विचरतः । चर गतिभक्षणयोः गत्यर्थानां ज्ञानार्थत्वात् ।

विजानतः संसृतिर्न निवर्तते । अविद्यमानदेहात्मत्वज्ञानवतः संसारनिवृत्तिर्नास्तीति भागवतवाक्यं व्याख्यातं भवति ॥ ३६ ॥ प्रजापतिपतिः साक्षादिति श्लोके साक्षान्मुख्येन भगवानैश्वर्यादिगुणवान् प्रजापतिपतिः प्रजापतेश्चतुर्मुखस्य पतिश्चेति हरिरुच्यते तद्युक्त । तथात्वे गिरिशादिसहपाठे तद्धरेः पश्यंतोऽपि न पश्यंतीत्युक्तविष्णुज्ञानाभावः स्यात् । स तु प्रमाणबाधित इत्यतः प्रमाणेनैव प्रजापतिपतिशब्दार्थमाह ॥ प्रजापतीति । अनेन साक्षाद्रुद्रापेक्षया मुख्यतो भगवानिति भागवतवाक्य व्याख्यात भवति ॥ ४३ ॥ मंत्रलिंगैरिति श्लोकार्धे मंत्रैर्वेदैर्लिंगैरनुमानैश्च व्यवच्छिन्न भदवंतमित्यन्यथाप्रतीतिनिरासाय तदनूद्य तस्य विवक्षितमर्थमाह ॥ मंत्रलिंगैरिति । वेदयति ज्ञापयत्यर्थमिति वेदो वेदश्चासौ शब्दश्च वेदशब्दा वेदशब्देनोक्तमात्रक केवल मुक्तमेव न तु साकल्येन प्रतिपादितमित्यर्थः । अत्र वेद इत्यनेन भागवतस्थलिंगपदार्थ उक्तः । शब्द इत्यनेन मंत्रशब्दार्थ उक्तः । त्यक्तमात्रमित्यनेन व्यवच्छिन्नपदस्य तात्पर्यार्थ उक्तः । तेन च मंत्रलिंगै । लिंगं स्वरूपमुद्दिष्ट लिंग ज्ञापक-मुच्यत इत्यभिधानात् । मंत्रैर्वेदादिशब्दरूपैर्लिंगैर्ज्ञापकैर्व्यवच्छिन्नं विशेषणावच्छिन्नं सबद्धमात्रक न तु साकल्येन संबद्धं । संबधश्च प्रतिपाद्यप्रतिपादकभावलक्षण इति भागवतवाक्यं व्याख्यातं भवति । स्वोक्तार्थे प्रमाणमाह ॥ वेद इत्यादि । कुत्रचित् कस्मिन्नपि देशे काले नारोहयति । हरिमिति शेषः । हरिं साक्षादनुभवारूढ न करोतीत्यर्थः । तत्र हेतुमाह ॥ अप्रसिद्धत्वात् । अव्यक्त स्वरूपत्वादित्यर्थः । ननु कदाऽप्यनुभवाभावेन मोक्षाभावः स्यादित्यत आह ॥ अथाऽपीति । अनुभव आरोह. स्थितिर्यस्य हरेः स तथा । अथाऽप्यव्यक्तत्वेऽपि केशवे प्रसन्ने सति केशवो जीवस्य किंचिदनुभवारूढो भवदित्यर्थः । स्वय तु वेदप्रतिपाद्यो हरिस्त्वमुं हरिं सम्यक् तु सम्यगेव । साकल्येनेति यावत् । अनुभवतीत्यर्थः ॥ ४६ ॥ यदा यस्यानुगृण्हातीति श्लोके भगवान्यदा यस्यानुगृण्हातीति तदा स वेदे परिनिष्ठितां ग्राह्यत्वेन विद्यमानां मति जहातीति वेदविषयग्राह्यत्वबुद्धित्यागोक्त्या

वेदत्याग एवोक्तो भवति । सोऽप्युक्तः । तथात्वे बौद्धसाम्यं स्यादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ यदा त्वित्यादिना । अनुभवी तु साक्षादनुभव्येव भूयाद्भवेत् । शब्दमात्रानुरोधनमपौरुषेयपौरुषेयशब्दमात्रस्यानुसरणं त्यक्त्वेत्यन्वयः । अथ तदा तमनुभाविनं । अथ तदाऽस्माद्भयादित्यत्रान्वयः । त्यक्तवेदत्वं न सर्वेषां सर्वदा चेत्याशयवानाह ॥ प्राय इति । तुशब्दो विशेषार्थकः । ब्रह्मेत्यनेन संबध्यते । वै निश्चयेन रुद्राद्याः सर्वेऽपि बहुजन्मसु भक्त्या केशवसंपूजनात्पुरा वैदिका एव न तु त्यक्तवेदाः । केशवपूजनात्पश्चादपि वैदिकाः । तेष्वपि रुद्रादिव्यतिरिक्तमनुष्योत्तमादयः पश्चात्प्रायो वैदिकाः कदाचित्त्यक्तवेदा रुद्रादयस्तु पश्चात्प्रायस्त्यक्तवेदाः कदाचिद्वैदिका इत्यर्थः । चतुर्मुखं विहाय रुद्राद्या इति रुद्रस्यैव कंठतो ग्रहणेन तथा तुशब्देन सूचितं चतुर्मुखे रुद्रादिभ्यो विशेषं दर्शयन् प्रायःपदसूचितं रुद्रादीनां पश्चात्त्यक्तवेदत्वं स्पष्टयति ॥ वैदिक इति । पुरेत्यनुवर्तते । एको ब्रह्मैव पुरा बहुजन्मसु केशवाराधनात्पुरा वैदिकस्त्यक्तवेदश्च । ततस्तदनंतरं स तु विशेषेण भक्त्या हरिं सपूज्य परमेष्ठिनः परमे परमात्मनि तिष्ठंतीति परमेष्ठिनो ब्रह्माद्याः । हलदंतात्सप्तम्याः संज्ञायामिति सूत्रेण परमशब्दस्य सप्तम्या अलुक् ज्ञेयः । तेऽस्य दासत्वेन सतीति परमेष्ठी हरिस्तस्य प्रसादात्केवलं त्यक्तवेदत्वं त्यक्तवेदत्वमेवापन्नो भवति । तथा आपन्न इति समुदायैवचनं । रुद्रादिजीवसमुदायः केवलं भक्त्याऽत्यंतभक्त्या बहुजन्मसु हरिं संपूज्य परमेष्ठिनो हरेर्विरिंचस्य प्रसादात्त्यक्तवेदत्वमापन्न इत्यर्थः । ततस्तु केशवं भक्त्येति त्यक्तवेदत्वमापन्ना इति क्वचित्पाठः । तत्राप्ययं श्लोकश्चतुर्मुखरुद्रादिपरत्वेन व्याख्येयः । तत्र चतुर्मुखपरत्वे केवल- 
शब्दाभ्याहारो वचनव्यत्यासश्च कर्तव्यः । वैदिका एव रुद्राद्या इत्यादौ प्रयुक्तवैदिकशब्दस्य वेदपाठकमात्रार्थत्वभ्रांतिनिरासाय प्रमाणाभ्यां तदर्थं दर्शयंस्ताभ्यामेव प्रमाणाभ्यां प्रसंगाद्यदा त्वनुभवी भूयादित्यनेन प्रमाणेन व्याख्यातमपि त्यक्तवेदपदमस्पष्टत्वात्स्पष्टं व्याचष्टे ॥ केवलमित्यादिना । वेदात्मकः शब्दो वेदशब्दः । जानन् । परापरतत्त्वमिति शेषः । अनुभवात्साक्षिरूपा

द्वेदो यस्य पुरुषस्योह्यं प्रमितिमनुसरेदनुसृत्यार्थं बाधयेत् स त्यक्तवैदिको वेदस्यानुसरणवैदिकं त्यक्तवैदिकं येनासौ त्यक्तवैदिक इत्यर्थः ॥ ४९ ॥ सत्वं विचक्ष्वेति श्लोके चित्तं चित्तिमिति पदद्वयस्यैकार्थत्वभ्रांतिनिरासाय प्रमाणेनैवार्थभेदमाह ॥ चित्ति- रिति ॥ ५७ ॥ एकं पंचविधमिति श्लोके एकस्यैव लिंगस्य पंचविधत्वादिकमुच्यते । तत्तु मतभेदेनेति भ्रांतिं प्रमाणेनैव निवारयंस्तेनैव प्रमाणेन त्रिवृत्पंचविधशब्दार्थं दर्शयति ॥ प्राणेंद्रियेत्यादिना । ते सर्वं इत्युक्तमेव स्पष्टयति ॥ प्राणा इति । तस्मात्प्रत्येकं पंचविधत्वात् । पंचविधं पंचदशविधं स्मृतं । तदेव पंचदशविधं लिंग पुनस्तृतीयविधरूपातःकरणात्मकमनसा सह षोडशक प्राहुरित्यर्थः । अत्र प्राणेंद्रियेत्यादितात्पर्यप्रथमार्धेन त्रिवृदिति भागवतपदं व्याख्यातं पंच पंचेति तात्पर्यश्लोकेन पंच विधमिति भागवतवाक्यं व्याख्यातं । तत्रापि पंचपंचेत्यनेन भागवते पंचविधमित्यस्य पंचदशविधमित्यर्थ उक्तो भवति ॥ ७६ ॥ भक्तिः कृष्ण इति श्लोकेऽकुंठज्ञानमित्यस्याकुंठस्य हरेर्ज्ञानमिति हरिविषयज्ञानमात्रार्थत्वप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्या र्थमाह ॥ देहादीत्यादिना । यस्य पुरुषस्य सदा विष्णौ भक्तिदर्शनस्पर्शनदर्शनादनु अनुसृत्याह देहादिव्यतिरेकेण देहादिभेदेन चिद्रूपोऽस्मीति स्फुटं सदाऽनुभवश्च स्यादसौ क्षिप्रं संसारान्मुच्यत एवात्र संशयो नास्तीत्यर्थः । अनेनाकुंठज्ञानपदं अकुंठस्य काला दिनाकुंठरहितस्य हरेर्ज्ञानमकुंठस्य कालकुंठनारहितस्य जीवस्वरूपस्य ज्ञानमिति द्वेधा व्याख्यातं भवति ॥ ८२ ॥ अदृष्टं दृष्टवन्न क्ष्येदिति श्लोके दृष्टवद्भूतं विद्यमानमदृष्टं च जगत्स्वप्नवदन्यथा मिथ्याभूत नंक्ष्येद्बाध्यत इति जगतो मिथ्यात्वेन स्वप्नसाम्यमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव स्वप्नसाम्यनिमित्तं दर्शयति ॥ संसारस्थमिति । भूतमित्यस्यार्थः ॥ संसारस्थमिति । संसारा वस्थायां विद्यमानमिदं सर्वं काम्यकर्म यतो वृथा मोक्षफलं न भवत्यतो मृषेति प्राहुस्तथेदं जगदैहिकफलकं च काम्यकर्मादि यतोऽ न्यथा वृथा मोक्षफलरहितमतः स्वप्नवत्स्वप्नेन तुल्यं तथा भूतं भविष्यच्च जगच्च यतो नक्ष्येन्नश्यत्यतः सुप्त सुप्तवदिति प्रसंगः

स्यादित्याशंकां सुप्तिशब्दयोः प्रत्येकमुभयार्थत्वेऽभिधानं पठित्वा भूतं भवदित्युत्तरार्धमनूद्य स्वयं परिहरति ॥ सुपुप्तीति । अतःशब्दो निर्णयाख्यग्रंथे सुप्तिशब्दस्य स्वप्नार्थत्वस्योक्तत्वाद्भूत भवद्भविष्यत्वेत्युत्तरार्धे सुप्तशब्दस्येति शेषः । स्वप्नोऽर्थ इत्यर्थः । तस्मिन्नेव श्लोके सर्वरहो रह इत्यत्र रहशब्दस्य भज सर्वात्मना हरिमित्यारभ्य सर्वरहो रह इत्यतस्य हरिप्रकरणत्वेनैव सिद्धं यद्वर्यर्थत्व तत्रैवाभिधान च पठति ॥ रह इति । अनेनैकांतभजनीयत्वेन रहःशब्दवाच्यं ब्रह्म रहः सर्वमच्छास्त्रप्रतिपाद्यरहस्य रूपमिति भागवतवाक्यं व्याख्यातं भवति ॥ ८३ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामेकोनत्रिंशोऽध्यायः ॥ ४-२९ ॥ छ ॥

॥ हरिः ॐ ॥ प्रचेतसोंऽतरिति श्लोके पुरंजनपदस्य मानुषजीवाभिमानिपुरंजनार्थत्वभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ पुरेऽव्यक्तेति । पुरेषु शरीरेषु तु विशेषेणांजनादभिव्यक्तेः । जीवस्येति शेषः । न केवलं विष्णोः शरीरजनकत्वमेव किंतु तयो र्जीवशरीरयोर्व्यंजकत्वमपि प्रकाशकत्वमपीत्यर्थः । अनेन पुरष्वज्यते व्यज्यत इति पुरंजन इति जीवे पुरंजनशब्दविग्रहः सूचितः । यथा यथात्मशरीरमित्यादिश्रुतेः । पुराणि भगवच्छरीरस्थानीयान् जीवानजयति शरीराणि च जनयतीति विष्णौ पुरंजनशब्द विग्रहः सूचितः । तथा सप्तम्यंतपुरशब्दोपपदादंज व्यक्ति व्यजयति क्षणकांतिगतिष्विति धातोः कृत्यल्युटो बहुलमिति बहुल ग्रहणात्कर्मणि ल्युट्प्रत्यये तथा द्वितीयांतपुरशब्दोपपदातणींत ण्यर्थात्तस्मादेव धातोर्बहुलग्रहणादव कर्तरि ल्युटप्रत्यय उपपदाकार लोपे च सति पुरंजनशब्दनिष्पत्तिश्च सूचिता । तथा द्वितीयांतपुरशब्दापपदातणींत ण्यर्थाज्जनजनन इति धातोः कर्तरि अचप्रत्यय संज्ञापूर्वको विधिरनित्य इति परिभाषया सुपा धातुप्रातिपदिकयोरिति सूत्रप्राप्तद्वितीयाविभक्तिलोपाभावे सति पुरंजनशब्दनिष्पत्तिश्च सूचिता भवति ॥ ३ ॥ दिव्यवर्षसहस्रांते इति श्लोके सहस्रशब्दस्य दशशतार्थत्वभ्रांतिनिरासाय तथा दिव्यवर्षसहस्राणां सहस्रमिति श्लोके दिव्यवर्षसहस्राणां सहस्रमित्यस्य दशलक्षदिव्यवर्षार्थत्वभ्रांतिनिरासाय च प्रतीकग्रहणपूर्वक विवक्षितमर्थमाह ॥

दिव्यवर्षेति । ननु श्लोकद्वयस्थसहस्रशब्दो बहुत्वार्थकत्वेन कुतो व्याख्यायत । प्रतीत एवार्थः किं न स्यादिति चेन्न । प्रतीतार्थस्यैतद्भागवतव्याख्यानरूपप्रबलप्रमाणेन बाधितत्वादित्याशयवांस्तत्प्रमाण पठति ॥ मानुषाणामिति । पुरेत्यत्र पुरा आ इति पदद्वयं । तत्राभिविध्यर्थस्याङो लक्षद्वादशकमित्यनेनान्वये कृते सत्यां लक्षद्वादशकमिति भवति । न च तर्हि पचम्यपाङ्परिभिरिति सूत्रेणालक्षद्वादशकादिति पंचम्यंतेन भाव्यमिति वाच्यं । षट्सु द्वितीयेति सूत्रात् सुपां सुपो भवतीति वचनाच्च द्वितीयायाः प्रथमाया वा विभक्तेः पंचम्यर्थत्वात् । ततश्चैवं तात्पर्ययोजना । प्रचेतसोभिः पृथिवीपालनात्पुरा मानुषाणा वत्सराणामालक्षद्वादशका द्वादशलक्षामभिव्याप्य जपयज्ञेन हरिः संतोषितः तदनंतरं तावंतं कालमभिव्याप्यवहितेंद्रियै स्तैः पृथ्वी पालितेति । अनेन प्रचेतसा दिव्यवर्षसहस्राणां । द्वितीयार्थे षष्ठी । सहस्राणि । मानुषद्वादशलक्षवर्षाण्यभिव्याप्य जपयज्ञेन पुरंजनं देहजनकं विष्णुमतोषय न्निति पूर्वश्लोको व्याख्यातः । तथा दिव्यवर्षसहस्राणां सहस्रं मानुषद्वादशलक्षवर्षाण्यभिव्याप्य भौमान् भोक्ष्यसेऽयुत्तरश्लोकश्च व्याख्यातो भवति । ननु भागवतोत्तरश्लोकस्थाहन्यतौजस इति पदव्याख्यानरूपाव्याहतेंद्रियैरिति पदबलादस्य प्रमाणवाक्यस्योत्तरश्लोकव्याख्यानरूपत्वमेव प्रतीयते न तु भागवतपूर्वश्लोकव्याख्यानरूपत्वं । तज्ज्ञापकाभावात् । अध्याहारश्च दोष इति चेत् । सत्यं । प्रमाणवाक्ये ज्ञापकाभावेऽप्याचार्यवाक्ये ज्ञापकस्य सत्त्वात् । आचार्यैरस्य प्रमाणवाक्यस्य श्लोकद्वयव्याख्यानरूपत्वज्ञापनार्थं दिव्यवर्षसहस्राणामिति श्लोकद्वयस्थसाधारणपदस्यैव प्रतीकत्वेन गृहीतत्वात् । अन्यथा विशेषपदमेव प्रतीकत्वेन गृह्णीत । अतो ज्ञापकसद्भावात् श्लोकद्वयव्याख्यानरूपत्वेन व्याख्यानं युक्तमेवाध्याहारोऽप्यावश्यक इति ॥ १७ ॥

न व्यवच्छिद्यते यज्ञ इति श्लोके ब्रह्मवादिभिः परब्रह्मवादिभिर्यज्ञो ज्योतिष्टोमादियज्ञो व्यवच्छिद्यते एतद्ब्रह्मैव व्यवच्छिद्यत इति भ्रांतिनिरासाय तदनूद्य स्वयं व्याचष्टे ॥ यज्ञो ब्रह्म इति । अत्र विष्णुपदग्रहणेन यज्ञो विष्णुर्देवतेति

श्रुतिप्रमाणं सूचयति । यथा यादृशोऽनुभवो यस्य ब्रह्मणस्तद्यथानुभव ब्रह्म यथाऽनुभूयत तथा व्यवह्रियत इत्यर्थः । इदं तु व्याहतिपरिहारार्थमध्याहृतं ज्ञातव्यं । स्वोक्तार्थे प्रमाणमाह ॥ सूक्ष्मेणेति ॥ २० ॥ शुद्धाय शांतायेति श्लोके स्वनिष्ठमनसि स्वातंत्र्यात्स्वे हरौ निष्ठा येषांते स्वनिष्ठास्तेषां मनसि विलसत्प्रतीयमानं द्वयं भदो यस्मिन्हरौ स तथेति सज्जनाना हरिगतस्वावयवादिप्रतियोगिकभेदज्ञानमुच्यत इति भ्रांतिनिरासाय स्वनिष्ठमनसीत्येतद्यथावद्व्याचष्ट ॥ स्वेति । अनेन मुष्ट न विद्यते निष्ठा यस्य तत्स्वनिष्ठं । स्वनिष्ठं मनो यस्य स्वनिष्ठमनास्तस्मिन्निति पदविग्रहः सूचितः । एव पदार्थमुक्त्वेदानीं प्रमाणे नैव वाक्यार्थमाह ॥ अनवस्थितेति । हरेः सकाशाद्द्वितीयं । स्वतंत्रमिति शेषः । तस्यैव श्लोकस्योत्तरार्धे गृहीतमायागुण विग्रहाय गृहीतो मायागुणात्मको विग्रहो येन हरिणा स तथेति हरेः प्राकृतदेहवत्त्वमुच्यत इति भ्रांतिनिरासाय तत्तात्पर्यार्थं प्रमाणे नैवाह ॥ नित्यमिति । तुरवधारणे । विग्रहा ज्ञानानंदाद्यात्मका एव तथा निर्गुणाः सत्त्वादिप्राकृतगुणकार्यशून्या एव । तत्र त्रिषु विग्रहेषु मध्ये द्वौ विग्रहौ । अनेन गृहीता मायागुणाः सत्त्वाद्याश्च विग्रहाश्च मायागुणविग्रहा येन हरिणा स तथा तस्मा इति तत्पदविग्रहः सूचितः॥ २३ ॥ नमो विशुद्धसत्त्वायेति श्लोके विशुद्धसत्त्वाय रजस्तमाभ्याममिश्रितकेवलप्राकृतसत्त्वगुणात्मकाये त्यन्यथाप्रतीतिनिरासाय तथा हरिमेधस इत्यस्य मेधां हरति नाशयतीति हरिमेधा इति बुद्धिनाशकत्वरूपार्थभ्रांतिनिरासाय क्रमस्या विवक्षितत्वाद्युत्क्रमेण पृथक् प्रमाणेनैव पदद्वयं व्याचष्ट ॥ हरणादिति । अनेन हरिश्चासौ मेधा च हरिमेधास्तस्मै हरिमेधस इति कर्मधारयः सूचितः । ननु कर्मधारयसमास हरिमेधस इति असच्प्रत्ययांतत्वं न स्यात् । तस्य नित्यमसिच् प्रजामेधयो रिति सूत्रेण बहुव्रीहावेवोक्तत्वादिति चेन्न । नित्यपदग्रहणात् यथा नञ् दुस्सु व्यतिरिक्तोपपदेष्वपि अल्पमेधस इत्यादौ असिच् प्रत्ययो भवति तथा अबहुव्रीहिसमासेऽपि भवति प्रयोगानुसारित्वाद्व्याकरणस्येति ॥ २४ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां

त्रिंशोऽध्यायः ॥ ४–३० ॥ छ ॥

॥ हरिः ॐ ॥ दीक्षिता ब्रह्मसत्रेणेति श्लोकार्धे ब्रह्मसत्रेण परब्रह्मसंबंधिसत्रयागेन दीक्षिता तथा सर्वभूतात्ममेधसा सर्वभूतानामात्मत्वेन परमात्मत्वेन मेधया बुद्ध्या युक्ताश्चेत्यर्थभ्रांतिनिरासायादौ ब्रह्मसत्रपदार्थं प्रमाणेनैवाह ॥ पारिव्राज्यमिति अनेन ब्रह्मसत्रेण संन्यासेन दीक्षिताः सन्यासदीक्षायुक्ता इति भागवतवाक्यं व्याख्यातं भवति । इदानीं सर्वभूतात्ममेधस इति पदं स्वयं व्याचष्टे ॥ सर्वभूतात्मनीति । अनेन सर्वभूतानामात्मनि नियामके हरौ मेधा यस्मिन्ब्रह्मसत्र तत्तथा तेनेति विग्रहः सूचितो भवति । स्वोक्तार्थे प्रमाणमाह ॥ हरिमेधा इति । हरौ हरिविषये यद्यस्मात्कारणात् । अत्र सन्यासे ॥ २ ॥ श्रेयसामपीति श्लोके हरेः श्रेयोऽवधित्वमुक्त । तत्कथमित्यतस्तद्घटयति ॥ तावदिति । तावत्पर्यंतं मुक्तस्थानस्थहरिपर्यंतमेव फलमपेक्षणीयं । ततः परं नास्तीति कारणाद्धरिरवधिरित्युक्त इत्यर्थः ॥ १२ ॥ यथाऽसव इति श्लोकार्धे द्रव्यक्रियाकारकविभ्रम इत्यस्य द्रव्याणां पृथिव्यादीनां क्रियाणां सन्ध्यावंदनादीनां कारकाणां मृत्पिंडादीनां यो भ्रमस्तस्यात्यया नाश इत्यर्थभ्रांतिस्तथाऽन्वयश्च न दृश्यते तथाऽसवः प्राणा जाग्रति जाग्रदवस्थायुक्ता भवतीत्यर्थभ्रांतिश्च भवत्यतस्तन्निरासाय प्रमाणेनैव तात्पर्यार्थमाह ॥ आत्मभाव इत्यादिना । आत्मनो भावो धर्मो आत्मभाव आत्मत्वं तज्ज्ञानोपलक्षकं । एवमुत्तरत्रापि ज्ञेयं । तुशब्दस्त्वयमवधारण। तेन द्रव्यभ्रमादिशब्दानां पृथिव्यादिभ्रमाद्यर्थत्वं निरस्त भवति । यदा प्राणभक्त्या श्वासादिवृत्तिलोपेन श्वासोच्छ्वासादिरूपवृत्तीनां लोपेन निरोधनेन प्राणायामेन सह योगिनां जपाद्युपायवतां । अत एव नित्यास्वापवतां नित्यं स्वापरहितानामधिकारिणा प्राणा इंद्रियाणि स्फुटं मुक्तिसिद्ध्ये उद्योगिन उत्कृष्टेन हरिणा योगिना संबंधवतस्तज्ज्ञानजनका भवंति तदैते विभ्रमा विलीयंत इत्यर्थः । उद्योगिन इत्यस्याभ्याहृतपदत्वभ्रांतिनिरासायाह ॥ उद्योग एवेति । अनेनोद्योगजाग्रत्पदयोरेकार्थत्वमुक्तं भवति । ततश्चैवं भाग

वतवाक्ययोजना । सुप्तशक्तयः सुप्ता अबोधिता शक्तिः श्वासादिवृत्तिर्यैस्ते तथा । प्रथमा षष्ठ्यर्थे । प्राणायामादियोगवतामधिकारिणामसव इंद्रियाणि यदा जाग्रत्युद्योगिनो भवंत्युत्कृष्टहरिज्ञानजनकानि भवंति । तदैव द्रव्यक्रियाकारकविभ्रमात्ययो देहात्मत्वादिभ्रमनिवृत्तिर्भवति । न तु सर्वदेति यथा तथा जगदात्मनो हरेः पदं स्वरूपं सकृदेव विभातं न तु सर्वदेति ॥ १६ ॥ स्वतेजसा ध्वस्तेति श्लोकार्धे आत्मैकभावेनात्मनां जीवानां परमात्मनश्चैकभावेनैक्येन भजध्वमिति जीवेश्वरैक्यमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ पूर्ण इति । अनेनात्मा गुणपूर्ण एक एवेति भावो भक्तिरात्मैकभावस्तेनेति पदविग्रहः सूचिता भवति ॥ १८ ॥ निरस्तसंकल्पेति श्लोकार्धे हरेः संकल्पविकल्पराहित्यमुच्यते । तथा जीवभेदाभावश्चोच्यते । तदुभयं सत्यसंकल्पत्वजीवभेदप्रतिपादकप्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ संकल्पश्चेति । सः विष्णुः । अनेन निरस्तौ संकल्पविकल्पौ येन प्रसन्नेन हरिणा स निरस्तसंकल्पविकल्प इति तत्पदविग्रहस्तथा न विद्यते द्वय समं यस्येति पदविग्रहः सूचितः ॥ १९ ॥ न भजति कुमनीषिणेति श्लोकेऽधनात्मधनप्रिय इत्यस्याधनात्मनां धनांतःकरणरहितानां यद्धनं तदेव प्रियं यस्येत्यर्थभ्रांतिनिरासाय च स्वयं विवक्षितमर्थमाह ॥ अधनाश्चेति । अनेन न विद्यते सुवर्णादिधनं येषां तेऽधना आत्मा परमात्मैव धनं येषां ते आत्मधना अधनाश्च ते आत्मधनाश्च तेषां प्रियं त एव प्रिया यस्येति वा विग्रहः सूचितो भवति ॥ २२ ॥ श्रियमनुचरंतीति श्लोके हरिर्यतो निजभृत्यवर्गतंत्रोऽतोऽयं कंचन निजभृत्यं विना श्रियं विबुधाधीश्च न भजति न बहुमनुत इति मनुष्यादिहरिभक्तस्य लक्ष्म्याद्यपेक्षयाऽधिकहरिकृतबहुमानविषयत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ श्रियमिति । केशवः श्रियं देवांश्चात्मार्थायात्मप्रयोजनाय न बहुमन्यते । किंतु भृत्यत्वादेव बहुमन्यते । कुतो यतस्ते लक्ष्म्याद्या भक्त्या तु भक्त्यैव सर्वोत्तमा इत्यर्थः । अनेन यो हरिः स्वपूर्णः स्वरूपसुखपूर्णः । हेतुगर्भविशेषणमेतत् । आत्मसुखाय श्रिय विबु

धांश्च न भजति किंतु नित्यभृत्यवर्गतंत्रः सन् भजति । लक्ष्म्यादीनां भक्तोत्तमत्वेनैव बहुमनुते । अमु हरिं कृतज्ञः कथमुद्विसृजे दिति भागवतवाक्यं व्याख्यातं भवति २३ ॥ तत्पदं सर्वेति श्लोकार्धे मायाधिष्ठितमित्यस्य मायामाधिकृत्य स्थितमविद्यारो पितमित्यर्थभ्रांतिनिरासाय प्रमाणेनैव मायाशब्दार्थमाह ॥ सर्वोत्तमत्वादिति । अनेन मय एव माया मायनाधिष्ठितमधिवासि तामिति तत्पद व्याख्यातं भवति । मुनयाऽप्यापीत्यर्धे यत्पदं धाताऽरुहत्तत्पदं मुनयोऽप्याप्युदीक्षेत पश्यत्येव न चापुरिति ध्रुवस्था नस्य सर्वमुन्यप्राप्यत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ देवानिति । ध्रुवा यद्धरगृहं प्रविष्टस्तद्धरेः शैशुमा रक गृहं देवान् ध्रुवादप्युत्तममुनींश्च विना के प्रविष्टा न कोऽपि किंतु देवास्तु देवा एव । चशब्दाद्ध्रुवोत्तममनुक्त्यव तद्गता शैशुमा रकं गृहं गता भवतीत्यर्थः । अनेन भागवतस्थमुनिशब्दो ध्रुवोत्तममुनिदेवव्यतिरिक्तमुन्यर्थक इत्युक्तं भवति ॥ २६ ॥ इति श्रीभाग वततात्पर्यटिप्पण्यामेकत्रिंशोऽध्यायः ॥ ४–३१ ॥

चतुर्थस्कधतात्पर्यं प्रबोधिन्यच्युतप्रिया ॥ छलारिनारायणजा भूयान्मध्वेशतुष्टये ॥ १ ॥

॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितश्रीमद्भागवततात्पर्यस्य टीकाय प्रबोधिन्या छलारीनारायणाचार्यविरचितायां चतुर्थः स्कंधः समाप्तः ॥ ४ ॥ श्रीकृष्णार्पणमस्तु ॥ छ ॥



॥ हरिः ॐ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवद्व्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ वरीयानिति श्लोके श्रोतव्यादिषु यच्छ्रोतव्यं अथो जाप्यमिति प्रथमस्कंधांतिमाध्यायस्थश्लोकस्थेषु श्रोतव्यजप्यादिविषयप्रश्नेषु मध्ये यः परो यद्वा विपर्यय इत्यंतिमस्ते तव प्रश्नः स एष वरीयानित्यन्यथाप्रतीतिमपेक्षिताध्याहृतेनान्वयस्य प्रदर्शनेन परिहरति ॥ यः पर इतीति । अनेन हे नृप ते त्वया लोकहितमुद्दिश्य पुंसां श्रोतव्यादिषु श्रोतव्यजाप्यादिविषयकप्रश्नेषु यः परः । इति हेतुप्रकरणप्रकारादिसमाप्तिष्वमराभिधानात् । अत्रेतिशब्दः प्रकारवाची । पर आत्मवित्संमतस्ततो वरीयानिति भागवतवाक्ययोजना सूचिता ॥ १ ॥ निद्रयेत्यत्र निद्राशब्दस्य नक्तं ह्रियत इत्यनेनैवान्वयभ्रांतिं परिहरति ॥ अपश्यतामिति ॥ निद्रया । अविद्यया । अनेन निद्रापदस्य प्रसिद्धनिद्राऽविद्या चेत्यर्थद्वयमुक्तं भवति ॥ २ ॥ देहापत्येति श्लोके ऽसत्स्वित्यनेन देहापत्यादीनामत्यंतासत्त्वमुच्यत इति भ्रांतिनिरासाय तदनूद्य व्याचष्ट ॥ असत्स्विति । अनेन सता भद्रा मंगलरूपा न भवन्तीत्यसतः तेष्विति तत्पदविग्रहः सूचितः । सच्छब्दस्य साधुत्वार्थत्वं कुत इत्यतस्तत्प्रमाणमाह ॥ सद्भाव इति ॥ ४ ॥ प्रायेणेति श्लोके प्रायेण विधिनिषेधतो निवृत्ता इत्यन्वयेन नैर्गुण्यस्थानां कदाचिद्विधिनिषेधबद्धमुच्यत इति भ्रांतिनिरासाय तदभिप्रेतार्थमाह ॥ प्रायेणेति । अनेन प्रायेण मुनयो मननशीला ध्यानिन इत्यन्वयार्थावुक्तौ भवतः । अत्रैव श्लोके नैर्गुण्यस्था इति पदस्य नैर्गुण्येन ज्ञानानन्दादिगुणराहित्येन तिष्ठंतीति नैर्गुण्यस्था इत्यर्थभ्रांतिनिरासाय तदनूद्य यथावद्व्याचष्ट ॥ नैर्गुण्येति । ननु नैर्गुण्यस्थपदस्य मुक्तार्थत्वमयुक्तं । तथात्वे गुणानुकथने रमंत इत्येतदयुक्तं स्यात् । न हि मुक्तानां गुणानुकथनमस्तीत्यतः प्रमाणेनैव तद्दर्शयति ॥ गतादिति ॥ गतेन । सामज्ञानादिसर्वगुणैर्मत्स्यादिसर्वरूपेषु समत्वात्सामशब्दवाच्यं ब्रह्म ॥ गायन् । कथयन् । आस्ते इत्यर्थः ॥ ७ ॥ अधीतवानिति श्लोकार्धे द्वापरादावित्यस्य द्वापर आदिर्यस्येत्यर्थभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ द्वापर इति । अनेन द्वापरश्च

आदिश्वेति तत्पदविग्रहः सूचितः । ननु तर्हि द्वापरयुगादिरिति स्यादिति चेन्न । द्वंद्वकरणभावनापत्तेः । न च तर्हि द्वापरान्तिनीति भाव्यमिति वाच्यं । अनित्यमागमशासनमिति परिभाषायास्ताश्चनत्यादिवन्नमागमाभावादन्तावित्युपपत्तेः । कृष्णावतारादादावीति कुत इत्यतस्तत्र ज्ञापकं प्रमाणमाह ॥ व्यास इति । नन्वनेन कृष्णावतारादादौ शुकाऽधीतवानित्ययमर्थः कथं लभ्य इति चेत् । उच्यते । वेदव्यासो भारतभागवतादिकं कृत्वा शुकमुत्पाद्य तस्य भागवतादिकमुपदिश्यानन्तरं धृतराष्ट्रमुत्पादितवान् । धृतराष्ट्रोत्पत्त्यनंतरं कृष्णावतारो जातोतः शुकस्य कृष्णावतारादादौ भागवताध्ययनमित्यर्थोऽनेन लभ्यत इति । अयमर्थस्तु भागवततात्पर्य निर्णय एव ततो नृणां कालवलात् । भागवतं पुराणमित्यारभ्य शुकं तमाशु प्रविवेश चायुर्व्यासस्य नानार्थमवतीर्णस्य ज्ञानदान विजातीयधृतराष्ट्रोत्पादनादिव्यापारनिवारणाच्छुकादीनां ज्ञानदानानंतरं धृतराष्ट्रोत्पत्तिप्रतीतेः कृष्णावतारस्य धृतराष्ट्रोत्पत्त्यनंतरं भावित्वस्य सुप्रसिद्धत्वान्निश्चीयते ॥ ८ ॥ परिनिष्ठित इति श्लोकार्थं निर्गुणमत्र नर्गुण्य तस्मिन्परिनिष्ठितः परिनिष्ठावानित्यन्यथाप्रतीतिनिरासाय तत्पदमनूद्य यथावद्व्याचष्टे ॥ परिनिष्ठित इति ॥ अस्य । हरेः सकाशात् । अस्य ममेत्यर्थः । परिनिष्ठितपदस्य निश्चितार्थत्वेऽभिधानं पठति ॥ उदरमिति । ननु यद्येवं शुकपरिनिष्ठितस्य भागवताध्ययनं व्यर्थं स्यात् । भागवताध्ययनस्य मोक्षार्थत्वान्मोक्षस्य चाध्ययनाभावेऽपि निश्चितत्वादित्याशंकां प्रमाणेनैव परिहरति ॥ ऋषीत्यादिना ॥ ऋष्युत्तमाः । उत्तमर्षयः । नैर्गुण्यपदस्यार्थो विमुक्तीति । विमुक्ता परिनिश्चिता इति कचित्पाठः । शुभकर्मस्विति विषयसप्तमी ॥ ९ ॥ मन इति श्लोकार्थे शुभार्थ इत्यस्य शुभकर्मार्थ इत्यर्थभ्रांतिनिरासाय तदनूद्य यथावद्व्याचष्टे ॥ शुभार्थे इति । भगवतीत्युक्त्या शुभा अर्था निरवधिकैश्वर्यादिषड्गुणरूपा यस्मिन्स तथा तस्मिन्निति विग्रहः सूचितः ॥ १८ ॥ मनो निर्विषयमिति श्लोकार्थं निर्विषयं विषयशून्यं मनः युक्त्वा संयुज्यत ततः किंचिदपि न संस्मरेदिति मनसः सर्वथा विषयाभावः सर्वथा स्मरणाभाव उच्यते

इत्यन्यथाप्रतीतिनिरासाय तत्सम्यग्व्याचष्ट ॥ विषयेभ्य इति । निर्गत्य स्थितमिति शेषः ॥ तत्रैव । भगवत्येव ॥ युंक्त्वा । संयुज्य । अन्यत् । हरेरिति शेषः ॥ १९ ॥ आष्वेति श्लोकार्धे भद्रपदस्य निःश्रेयस शिवं भद्रमित्यभिधानान्निःश्रेयसार्थत्वभ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ भद्रमिति ॥ २१ ॥ यथेति श्लोके धारणा यथा संधार्यते तथा वद । यत्र यस्मिन्संधार्यते तं वद । यादृशी मनोमलं हरेत्तादृशी वदेन्यथाप्रतीतिनिरासाय यथा यत्र यादृशीति पदत्रयस्थप्रातिपदिकरूपयच्छब्दार्थमाह ॥ यच्छब्द इति । स्वोक्तार्थं श्रौतप्रयोगाभिधानाभ्यां दृढयति ॥ यतश्चेति । यच्छब्द इति च । अनेन यथा कथं केन साधनेन । यत्रकुत्ररूपा यादृशीकीदृशी किं प्रकारा धारणेति पदत्रयस्यार्थ उक्तो भवति ॥ २२ ॥ एतत्प्रश्नत्रयपरिहाराय शुको जितासन इत्यादिकमुवाच । तत्र केन कः प्रश्नः परिहृत इति न ज्ञायतेऽतस्तस्य प्रश्नत्रयपरिहारकत्वं विविच्य स्वयं दर्शयति ॥ यथेत्यस्येत्यादिना ॥ इत्यादि । पूर्वार्धं । परिहारकमिति शेषः । यत्रेत्यस्य स्थूल इत्याद्युत्तरार्धं । परिहारकमिति शेषः ॥ २३ ॥ विशेष इत्यादिपदेन पातालमेतस्य हि पादमूलमित्याद्युत्तरग्रंथो गृह्यते । तेन पातालादिजनकतदाश्रयपादमूलत्वादिप्रकारा धारणेत्युक्तं भवति । विशेषपदस्य वैशेषिकाद्यभिमतात्यविशेषार्थत्वभ्रांतिनिरासायोत्तरभागवतश्लोकानुसारेण विवक्षितमर्थमाह ॥ विशेष इति ॥२४॥ आंडकोशे इति श्लोकेऽस्मिन्नाडकाशे शरीरे भगवान्स्थित इति ब्रह्मांडस्य साक्षाद्भगवच्छरीरत्वमुच्यते । तत्तु प्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ शिलावदिति । शिलायत शिलावदेव । देहः प्रतिमा । न तु साक्षाद्देहः ॥ सावृतिः । आवृतिभिः पृथिव्याद्यावरणैः सहितः ॥ तत्स्वतंत्रत्वात । हर्यधीनत्वात् । चशब्दो निरनिष्टो निरवद्य इत्यादिप्रमाणसिद्ध दुःखादिसर्वदोषविदूरत्वसमुच्चयार्थः । अस्मिन्नेव श्लोके वैराजपदस्य चतुर्मुखार्थत्वभ्रांतिनिरासाय प्रमाणेनैव विवक्षितमर्थमाह ॥ आंडकोश इति । अनेन विराट्संबंधी विराड्गतः वैराजः । विशिष्टः सर्वोत्तमः राजा ।

विरा विराट् विराडेव वैराज इति वैराजपदस्यार्थद्वयमुक्तं ॥२५॥ पातालमित्याद्युत्तरग्रंथे पातालादिजडानां साक्षाद्विष्णु पादाद्यंगत्वमुच्यते। तच्च प्रमाणबाधितमित्यतः स्वयं विवक्षाभेदेन तदभिप्रायमाह ॥ प्रतिमेति ॥ प्रतिमापेक्षया। ब्रह्मा द्यास्व्यहरिप्रतिमामपेक्ष्य ॥ अंगानि। पातालादीनि साक्षात्पादमूलादितदंगानि। स्वरूपापेक्षया। तदंतर्गतभगवत्स्वरूप मपेक्ष्य ॥ तज्जानि। पातालादीनि हरिपादमूलानि जातानि। तदाश्रितानि च। न तु साक्षादंगानीत्यर्थः। ननु त्वगिन्द्रियाख्यशरीरणी चक्षुरभूत्पतंग इत्यत्र चक्षुर्जातत्वेनोक्तस्य सूर्यस्य पुनर्दृष्ट्याज्जातत्वोक्तिरयुक्ता। न ह्येकस्योभयजन्यत्वमुभयाश्रितत्वं च संभवतीत्यत आह ॥ बहुरूपत्वादिति। आदिपदेन कस्तस्य मेंढ्रवृषणौ च मित्रौ मनस्तु चंद्रमा इत्यादिकं ग्राह्यं। प्रतिमापेक्षयेत्याद्युक्तार्थ प्रमाणमाह ॥ प्रतिमेति ॥ स्वरूपतः। भगवत्स्वरूपापेक्षयेत्यर्थः ॥ तदाश्रितानि। भगवदंगाश्रितानि तज्जातानि च ॥ बहुत्वतः। बहुरूपत्वतः ॥ बव्हंगत्वं। बव्हंगजातत्वं तदाश्रितत्वं चेत्यर्थः ॥ २६–३१ ॥ इति श्रीभागवततात्पर्य टिप्पण्यां प्रथमोऽध्यायः २–१ ॥ छ ॥

॥ हरिः ॐ ॥ शब्दस्य हीति श्लोकेऽपार्थैर्निरर्थकैर्नामभिर्यद्ध्यायति एषः शब्दस्य ब्रह्मणो वेदस्य पंथा मार्ग। तत्र मार्गेऽर्थान्न विंदत इत्यन्वयार्थभ्रांतिनिरासाय सम्यगन्वयं दर्शयन्नादौ एष इत्येतदनूद्य व्याचष्टे ॥ एष इति। अत्र एष इत्यस्य हर्यर्थकत्वकथनेन शब्दस्य ब्रह्मणो वदराशेः एषः हरिः पंथा इत्यन्वयः प्रदर्शितः। तता यदपार्थैर्ध्यायति तत्रार्थान्न विंदत इत्यन्वयप्रदर्शनेन। यत् इंद्रादिकं। अपार्थैर्नामभिः इंद्रादिनामभिः। ध्यायति। तत्र इंद्रादौ। अर्थान् तन्नामार्थान्। न विंदत। इंद्रादौ इंद्रादिनामार्थभूतपरमैश्वर्यादिकं नास्त्यतो नेंद्रादिरिंद्रादिशब्दवाच्य इत्यर्थः सूचितः। तत्र पंथा इत्यस्य मुख्यवाच्य इत्यर्थ उक्तो भवति॥२॥ नन्वेवं चेदिंद्रादिशब्दैरिंद्रादिव्यवहारो न स्यादित्याशंकापरिहाराय अतः कविरिति भागवतश्लोकः प्रवृत्तः। तम

प्रतिपत्तिविप्रतिपत्तिनिरासाय प्रमाणेनैव व्याकुर्वंस्तेनैव प्रमाणेन शब्दस्य हीति पूर्वश्लोकस्य स्वोक्तार्थं दृढयति ॥ सर्वनामेति ॥ सर्वं नामा । परममुख्यवृत्त्येति शेषः । न तु नैव परममुख्यतयेति शेषः । किन्तु ॥ यावदर्थस्तु । यावदर्थ एव । यावानर्थो व्यवहाराख्यप्रयोजनं यस्य स तथा । व्यवहाराख्यप्रयोजनेच्छयैव स्मरन्स्यात् । इन्द्रादिशब्दानां मुख्यवृत्त्येंद्राद्यर्थत्वं स्मरत ॥ अन्यथा । प्रकारांतरेणेंद्रादिव्यवहारे सिद्धे सतींद्रादिशब्दानां परममुख्येंद्राद्यर्थत्वं यदि स्मरेत्तर्हि ॥ स्वात्महा भवेत् । स्वस्य नरकान्तिप्राप्तिरूपनाशकर्ता भवेत् । स आत्महेति क्वचित्पाठः । तत्रात्महा परमात्महेत्यर्थः । अत्र स्मरस्तु यावदर्थः स्यादित्यनेन अतः यावानर्थः यावानर्थः व्यवहारप्रयोजनं यस्य स तथा । व्यवहारेच्छुश्चेत्तर्हि नामसु कविः इन्द्रादिनाम्नाममुख्येंद्राद्यर्थस्मरणवान्स्यादिति भागवतवाक्यं व्याख्यातं भवति । अन्यथा स्वात्महा भवेदित्यनेन अन्यथा इंद्रादिशब्दानां मुख्यवृत्त्येंद्राद्यर्थत्वाभिधानरूपप्रकारांतरेणार्थे व्यवहाररूपप्रयोजने सिद्धे सति तत् तत्रेंद्रादिशब्दपरममुख्यार्थत्वे न यतेत् स्मरणरूपं यत्नं न कुर्यात् । यतस्तत्रेंद्रादीनां इंद्रादिशब्दपरममुख्यार्थत्वस्मरणे परिश्रमं परितः श्रमं समीक्ष्यमाणः पश्यति स्वात्मनाशरूपपरिश्रमवान्भवत्यतो न यतेतेति भागवतवाक्यं व्याख्यातं ॥ ३ ॥ नं निर्वृत इति श्लोकार्धे नियतार्थ इत्यस्य नियतः परिमितोऽर्थो द्रव्यं यस्येत्यर्थभ्रांतिनिरासाय विवक्षितार्थमाह ॥ एतामिति । अहामितः प्रत्य एतं परमात्मानं ॥ अभिसंभवितास्मि । अभितः सम्यक् प्राप्तवानस्मीति ॥ नियतः । निश्चितः । अर्थः प्रयोजनं यस्य स तथेत्यर्थः ॥ ६ ॥ स सर्वविदिति श्लोके यथा सुप्तजनक्षिता तथायमिति दार्ष्टांतिकानुक्तेरस्य दृष्टांतवाक्यस्यासंगतत्वभ्रांतिः । तथा आत्मपदस्य जीवार्थत्वभ्रांतिश्च । ता प्रमाणेनैव परिहरति ॥ यश्चेति । अमृतशब्दार्थः प्रभुरिति । प्रकर्षेण भवतीति प्रभुर्व्याप्तः । तु विशेषेण । एकः मुख्यः । ईशः हरिः । स्वयमसुप्तः सन् बहून्सुप्तान् यथा पश्यति एवं स्वयं नित्यदृक् सन् बहूनज्ञान्जीवान् । उपलक्षणमेतत् । सर्वं जगत्पश्यतीत्यर्थः । अनेन स एकः मुख्यः

प्र० १४

सर्वोत्तमः आत्मा व्याप्तः प्रभुरीशः यथा सुप्तजनक्षिता एवं । सर्वविन् सर्वं वत्तीति । भागवतवाक्यं व्याख्यातं तेन हरेरेव सुप्त्या दिसर्वजीवावस्थाप्रेरकत्वं च सूचितं । हरः सुप्तक्षितृत्वं श्रुति चाह ॥ स्वप्नेनेति । असुप्तः । परमात्मा शारीरं । जातावेकवचनं । शारीरान् जीवान । स्वप्नेन स्वप्नावस्थया । अभिसहत्य । संबद्ध्य । सुप्तास्तान । अभिचाकशीति अभिता जानातीत्यर्थः । अस्मिन्नेव श्लोकेऽनुभूतसर्वसत्यशब्दानां क्रमाज्ज्ञातृत्वजगदात्मकत्वयथार्थत्वार्थप्रतीतिनिरासाय प्रमाणेनैव तदर्थान्दर्शयंस्तेनैव प्रमाणेन ग्रंथांतर स्थोदध्यादिशब्दार्थं च दर्शयति ॥ यश्रेष्ठेनेति ॥ यथेष्ठभवनात् । आविर्भावात् ॥ केवलसारत्वात् । अत्यंतश्रेष्ठत्वात् । अनेन सच्छब्द उत्तमं ब्रूयादिति प्रमाणादतिशयेन सत्तमः सत्य इति सत्यशब्दार्थ उक्तो भवति ॥ ७ ॥ ईक्षेत चिंतामयमिति श्लोकार्थे चिंतामयमित्यस्य चिंतास्वरूपमित्यर्थभ्रांतिनिरासाय तदनूद्य यथावद्व्याचष्टे ॥ चिंतेति । अनेन चिंताया धनस्य तज्जन्य फलस्य च मयं प्रधानं नियामकमिति तत्पदं व्याख्यातं । स्वोक्तार्थं प्रमाणेनैव स्पष्टयति ॥ यस्मादिति । संचितिता यातः । चिंतितं चिंताजन्यफलं ॥१३॥ तावत्स्थवीय इति श्लोकार्थे पुरुषस्य हरः स्थवीयो व्याप्तं रूपं स्मरतेति स्थवीयपदस्य व्याप्तरूपा र्थत्वभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ स्थवीय इति । इत्यादि इत्यादिनोक्तं ॥ १५ ॥ कारे चेति श्लोकार्थे जितासुरित्यत्रासु पदेन मुख्यामुख्ययोर्मुख्य संप्रत्यय इति न्यायेन मुख्यवायुर्वाच्यस्तस्य सर्वदेवोत्तमस्योपासकाजितत्वमनुपपन्नमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ भक्त्येति ॥ १६ ॥ मनश्चेति श्लोके एतां बुद्धिं क्षेत्रज्ञे जीवे तं जीवमात्मनि परमात्मनि आत्मानं परमा त्मानं आत्मनि मनस्यवरुंध्येत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव क्षेत्रादिपदत्रयस्यार्थमाह ॥ जीवस्थ इत्यादिना । जीवस्थः जीवहृदयस्थः हृद्गतः देहहृदि गतः । तु विशेषणे । आत्मेति भण्यते । न केवलं जीवदेहहृद्गत एवात्मेति भण्यते किंतु व्याप्तोऽपि हरिरित्यपिशब्दार्थः । अस्मिन्नेव श्लोके क्षेत्रज्ञ एतां निनयेदित्यादिना बुद्ध्यादेः क्षेत्रज्ञादौ नयनमुच्यते । तदयुक्तं । न ह्युपासको

बुद्धिं क्षेत्रज्ञे हरौ तं हरिमात्मनि हरा नतु शक्नातीत्यतः प्रमाणनैव नयनशब्दार्थं विविच्य दर्शयति ॥ हराविति । अन्यत्र बुद्ध्यादा । तन्नियम्येति भावप्रधानो निर्देशः । आदिपदेन तल्लयो ग्राह्यः ॥ १७ ॥ न यत्र काल इति श्लोकार्धे न यत्र काल इत्यनन वैष्णवे पदे क्षणलवादिकालाभाव उच्यते । सोऽनुपपन्नः । क्षणादिकालस्य देशतो व्याप्तत्वन प्रवाहतो नित्यत्वेन च वैष्णवपदेऽपि सत्त्वादित्यतस्तत्पदमनूद्य यथावद्व्याचष्टे ॥ काल इति । स्वोक्तार्थे प्रमाणं वदंस्तेनैव प्रमाणेनान्येषामपि कालशब्दवाच्यत्वमाह ॥ हरिश्चेत्यादिना । अनन मुक्तौ वायुर्नास्तीति द्योतितं ॥ १८ ॥ नाभ्यां स्थितमिति श्लोकार्धे उदानगत्यत्यस्य उदानाख्य वायुगमनेनेत्यर्थभ्रांतिनिरासायानुवादपूर्वकं विवक्षितमर्थमाह ॥ उदानेति । अनेनोदानस्य गतिर्गमनं यस्या ब्रह्मनाड्या सा तथा तयेति पदविग्रहः सूचितो भवति । स्वोक्तार्थे श्रुतिमाह ॥ अथेति । उदान एकया ब्रह्मनाड्योर्ध्वमायातीत्यर्थः । अस्मिन्नेवार्थे स्पष्टं प्रमाणमाह ॥ प्राणापानावित्यादि । वर्ततः वर्तत । संज्ञापूर्वको विधिरनित्य इति परिभाषया वर्तत इति साधु । सर्वत्र सर्वेषु । संधिषु नाडीसंधिषु । सर्वत्रैव नाडीषु संधिषु चेत्यर्थः ॥ २१ ॥ स्थित्वा मुहूर्तेति श्लोकार्धे परगत इत्यस्य पर परमात्मान गतः प्राप्त इत्यर्थभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ परमिति । पर परमात्मान । गत्यर्थाना ज्ञानार्थत्वमभिप्रेत्य चितयन्नित्युक्तं ॥२२॥ अष्टाधिपत्यमिति श्लोकार्धे उत्क्रान्तो योगी ॥ गुणसंनिवाये । गुणाना ज्ञानभक्त्यादिगुणाना सम्यङ्निवायः । वा गति गंधनयोरिति धातोः । स्थितिर्यस्मिन्मुक्तस्थाने तत्तथा तस्मिन् । मनसा इंद्रियैश्च सहैव गच्छेदित्युक्तातस्य जडेंद्रियैः सहत्र मुक्तिप्राप्ति रुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ चिन्मात्राणीति । चिन्मात्राण्यवेन्यत्रशब्दसंबंधः । अन्यदा तु संसारावस्थायां तु । स्वरूपतो विभिन्नानि विगतभदवति । अभिन्नानीति क्वचित्पाठः । तान्यव चिन्मात्रेंद्रियाण्यव । जडयुक्तानि जडेंद्रिययुक्तानि भवंतीत्यर्थः ॥ २३ ॥ योगेश्वराणामित्यादि श्लोके त्रिलोक्या बहिर्या योगेश्वराणा गतिमामनंति ता गति

कर्मभिर्नाप्नुवंतीत्यन्वयपूर्त्या पवनांतरात्माति प्रथमैकवचनातपदस्यानन्वितभ्रांतिनिरासायापेक्षिताध्याहारेणान्वयं दर्शयंस्तस्य विवक्षितार्थद्वयमाह ॥ पवनस्येति । द्यौर्वाव विद्युत्पति वायुमुपगम्य तेनैव ब्रह्म गच्छतीति श्रुतिमनुसृत्य पवनश्चांतरात्मा चेति द्वंदसमास उक्तः । तत्र पूर्वव्याख्यानेंऽतरात्मपदेन हरिर्ग्राह्यः । द्वितीयव्याख्याने तत्पदन चतुर्मुखो ग्राह्यः । इदं व्याख्यानद्वय मप्रतीकालंबनप्रतीकालंबनाभिप्रायेण ज्ञातव्य । एवं पवनांतरात्मेति स्वयं व्याख्याय तत्र प्रमाणं वदंस्तेनैव प्रमाणेनोर्वरित श्लोकं सम्यग्व्याचष्टे ॥ ईयुरित्यादिना । मुख्या अप्रतीकालंबनाः । तदन्ये प्रतीकालंबनाः । अनेन यः पवनांतरात्मा पवनस्यांतरात्मांऽतर्नियामको हरिस्तं हरि योगेश्वराणामप्रतीकालंबनानां गति । गम्यत इति गति । गम्यमामनंति । यः पवो वायुश्चातरात्मा चतुर्मुखश्च तं पवनं विरिंचं च योगेश्वराणां प्रतीकालंबनानां गति गम्यमामनंति । ता गति गम्यं हरि वायु वा । येऽपक्वास्ते कर्मभिर्नाप्नुवंति . यांतीति भागवतवाक्यं व्याख्यातं । पवनांतरात्मेति पदस्य द्वितीयव्याख्यानपक्षे द्वंद्वैकवद्भावा न्नपुंसकलिंगेन भाव्यं तदभावेन यत्पुंस्त्वं तद्व्यत्ययेनेति ज्ञातव्यं ॥ २४ ॥ वैश्वानरमिति श्लोके योगी हरेरुदस्तादुपरिष्टात् हरिप्राप्त्यनंतरं शैशुमारचक्रं प्रयातीति हरिप्राप्त्यनंतरं शिंशुमारप्राप्त्युच्यत इति भ्रांतिनिरासाय तेषां पदाना विवक्षितमन्वयं दर्शयति ॥ हरेरिति । तद्युदस्तादिति पदमसंगतं स्यादित्यतोऽध्याहृतपदेन तस्य संगतिमाह ॥ वैश्वानरेति । वैश्वानरात् । उदस्तात् उपरिष्टात् । विद्यमानं शिंशुमारं चक्रमिति पूर्वेणान्वयः । अनेन भागवते वैश्वानरादिति शेषः पूरणीय इति सूचितं । अस्मिन्नेव श्लोके विहायसा हृदयाकाशेन गतो योगी सुषुम्नया ब्रह्मपथेन वैश्वानरं याति । अथ तस्मा त्यनंतरं विधूतकल्कः शैशुमारचक्रं प्रयातीति वैश्वानरलोक एव पापत्यागो भवतीति भ्रांति प्रमाणेनैव परिहर्तुंस्तेनैव प्रमाणेन स्वोक्तान्वयं दृढयति ॥ वैश्वानर इति । वाशब्दोऽधिकारिभेदेन व्यवस्थितविकल्पे । किंस्तुग्नः शिंशुमारः ॥ २५ ॥ वैश्वानर

मित्युक्तो वैश्वानरः क इत्यपेक्षाया तं दर्शयितुं योऽतः पचतीति श्लोकः प्रवृत्तः । तत्र स वैश्वानरा देवानां पितृणा मुनेश्च मार्ग इति वैश्वानरस्य देवादिमार्गत्वमुच्यते । तदयुक्तं । न हि देवादया वैश्वानरमार्गेण गच्छंतीत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ पितृयानमिति । पितृयानं पितॄन्यात्यनेन मार्गेणेति पितृयानं । एवं देवयानादिशब्दार्था ज्ञेयः । इति त्रिविधमार्गेण गच्छन् । देवादिकं प्रतीति शेषः । वैश्वानरं याति । तस्मात्स वैश्वानरो मार्ग इतीरितः । अनेन सोऽग्निर्देवाना पितृणां मुनेः ज्ञानपूर्णस्य ब्रह्मणश्च मार्गः मार्गे स्थित इति भागवतवाक्य व्याख्यातं भवति ॥ २६ ॥ देवयानमिति श्लोके पिंगलाभिरिडाभिः सुषुम्नयेति विशेषणत्रयस्य विशेष्यानुक्तेरनन्वितभ्राति यथा पिंगलाभिः पिंगलवर्णाभिरिडाभिरिति विशेषणविशेष्यभावभ्राति च प्रमाणेनैव विशेष्यप्रदर्शनेन परिहराति ॥ दक्षिणा इति । नाड्य इति पदस्य दक्षिणा वामा इति पदद्वयेनान्वयः । पिंगलाः पिंगलशब्दवाच्याः । इडा इडापदवाच्याः । मध्यमा । नाडीति शेषः । अत्र नाड्या इति बहुवचनपदेन दक्षिणवामनाडीनां बहुत्वोक्त्या मोक्तेत्येकवचनपदेन मध्यमाया एकत्वोक्त्या च । शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैकेति श्रुत्यर्थः संगृहीतो भवति । तेन दक्षिणनाडीनां पंचाशत्वं वामनाडीना पंचाशत्वं च सूचित । तेन बहुवचनोपपत्तिर्योतिता भवति । अस्मिन्नेव श्लोकेऽहानि रात्रीरित्यहोरात्रपदयोः प्रसिद्धाहोरात्रित्वभ्रांतिं तथा देवयानं पितृयानमित्यनयोर्वैयर्थ्यभ्राति च प्रमाणेनैव तदर्थकथनेन परिहराति ॥ देवयानस्येति । देवान्प्रति यानस्य गमनस्य मार्गे स्थिताः । देवा इति शेषः । एवमुत्तरत्रापि ज्ञेयं । अत्र मार्गस्य पृथगुक्तत्वात् यानशब्देन गमनमेव न तु मार्गः । यानं गतौ वाहने चाति विश्वकोशोक्तेः । अनेन भागवते देवयानामिति प्रथमा षष्ठ्यर्थे । तस्यानंतरं मार्गस्या इति शेषः पूरणीयः । पितृणामित्यस्यानंतरं यानस्य मार्गस्था इति शेषश्च पूरणीय इत्युक्तं भवति । अत्रैव श्लोके शतायुषेत्यस्य शतवर्षायुष्यार्थत्वभ्रांतिनिरासायाभिधानेनैव तदर्थमाह ॥ शतायुरिति । एव

चशब्दौ परस्परसमुच्चये। कालिकं मरणं च परमाऽप्तिश्च मुख्यत्वेन वर्तनाभावाश्च शतायुः पदेनोच्यंत इत्यर्थः । एवं प्रमाणेन पदार्थमुक्त्वेदानीं स्वयं वाक्यार्थमाह ॥ पिंगलाभिरीति । शतायुषा कालिकमरणेन । देवयानं देवयानमार्गस्थितं दवं । पितृयानं पितृयानमार्गस्थितं देव । सुषुम्नया देवपथेन । शोचिषेत्यत्र देवयानमार्गत्वेनोक्तायाः सुषुम्नाया विषुवत्ता सुषुम्नयेत्यनेन विषुवत्तामार्गत्वमुच्यते । तेनैकस्या एवोभयमार्गत्वभ्रांतिं प्रमाणेनैव तदर्थकथनेन निवारयंस्तेनैव प्रमाणेन देवयानपितृयानमार्गवाचकपिंगलेडाशब्दयोर्देवयानपितृयानयोरपि योगेन वृत्तिं च दर्शयति ॥ विषुवत्तेति । यतो ब्रह्मयानात् । अनेन विशेषण सुसुखं यस्य सकाशादस्ति तद्विषुवत् तस्य भावस्तत्तामिति पदविग्रहः । नामग्रहणे तदेकदेशग्रहणमिति न्यायश्च इणः परस्य तस्य षत्वं च सूचितं भवति । पिंगाख्यसुखदमित्यनेन पिंगं सुखं लाति । ला दान इति धातोः । ददातीति पिंगलेति पदविग्रहः सूचितः । एवं मार्गाः । देवयानादेरिति शेषः ॥ २७ ॥ तद्विश्वनाभिमिति श्लोके विश्वनाभि विश्वस्य नाभिरूपं विष्णोस्तद्रूपमिति हरिरूपस्य जगन्नाभ्याख्यावयवस्वरूपत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तं श्लोके व्याचष्ट ॥ अशेषेति । विश्वनाभिमित्यस्यार्थोऽशेषजगदाधार इति । त्वां नत्वा परमं पदं यातीत्यन्वयः । अस्मिन्नेव श्लोके कल्पायुषो विबुधा यत्प्रतिपद्य रमंते तद्विश्वनाभिमुपैतीत्यन्वयभ्रांतिनिरासाय स्वयं सम्यगन्वयं दर्शयति ॥ तद्विष्णोरिति । अनेन योगी तद्विश्वनाभि विश्वाधारं विष्णो रूपं प्रतिपद्य यत् यत्र लोके कल्पायुषो विबुधा रमते तं महर्लोकमुपैतीति श्लोकान्वयः प्रदर्शितः । न कल्पायुषा यत्र लोके रमंते स महर्लोकः । कुतोऽन्यलोक एव न स्यादित्याशंका प्रमाणेनैव परिहरति ॥ मन्वंतरेति । स्वर्ग्याः स्वर्गलोकस्थाः । काल्पिका कल्पायुषः । आब्रह्मणः चतुर्मुखदेहलयारंभं मर्यादीकृत्येत्यर्थः । जनाद्याः जनलोकादिस्थिताः । आदिपदेन तपःसत्यलोकयोर्ग्रहणं । महर्लोके ये वरा उत्तमाधिकारिणस्तेऽपि आब्रह्मण इत्यन्वयः ॥ २८ ॥ अथोऽनंतस्येति श्लोके पार

मष्ठयं धिष्ण्यं निर्याति नितरां यातीति प्रलयकाले विशिष्य सत्यलोकप्राप्त्युक्त्या विशेषविधिः शेषनिषेधं गमयतीति यावन्न विष्णुलोकप्राप्तिस्तदा नास्तीति भ्रांतिर्भवति। तां प्रमाणेनैव सिंहावलोकनन्यायेन परिहरंस्तत्र प्रमाणनान्यप्रमेयविशेषं च दर्शयति ॥ विष्णोर्लोकमिति । एके अधिकारिणः। हरेराज्ञया । तदेव प्रलयकाल एव । विष्णोर्लोकं यांति। अपरेऽधिकारिणः। हरेराज्ञयेत्र कालान्तरे विष्णोर्लोकं यांति। केचिदधिकारिणः अपूर्तेः साधनस्येषदपूर्तेर्हेतोस्तत्पूर्त्यर्थमन्यल्लोकेषु जनादिलोकेषु विहृत्यैव कालांतरे विष्णोर्लोकं यांति। एते सर्वेऽप्यधिकारिणो ब्रह्मणा सहैव। मुच्यते लिंगभंगवतो भवतीत्यर्थः ॥२९॥ न यत्र शोक इति श्लोके ऋत इत्यस्य दुरंतदुःखप्रभावदर्शनादृते विनेति विनार्थत्वभ्रांतिनिरासायाय विवक्षितमर्थमाह ॥ ऋते इति। अनेन यत्र ऋते इत्यन्वयः सूचितः। अत्रैव श्लोके कृपयाऽनिदं विदामित्यत्र नितरां ददातीति निदं ब्रह्मविदां ज्ञानिनां इति पदपदार्थभ्रांतिं निराकर्तुं पूर्वकृतानेकार्थं परामर्शकस्येदंशब्दस्य प्रकृतोपयुक्तप्रकृतार्थपरामर्शकत्वं दर्शयति ॥ अनिदमिति । अत्रैव श्लोके दुरंतदुःखप्रभवेति पदस्य दुरंतदुःखस्य प्रभव इति विग्रहभ्रांतिनिरासाय विवक्षितविग्रहं दर्शयति ॥ दुरंतेति । अनेनानिदं विदां दुरंतदुःखप्रभावानुदर्शनात् कृपया दयया यश्चित्ततोदो मनोव्यथा सोऽपि सत्यलोके नास्तीति भागवतवाक्यं व्याख्यातं भवति । क्रिययेति भागवते क्वचित्पाठः । तत्र क्रियया जातदुरंतदुःखप्रभवानुदर्शनात् । यश्चित्ततोदः सोऽपि यत्र नास्तीत्यन्वयः । नन्वेवं चेत्तर्हि सत्यलोकस्थानां मुक्तसाम्यं स्यादित्याशंकां प्रमाणेनैव परिहरति ॥ सर्वदुःखेति । चोऽवधारणे । सर्वदुःखविहीना इत्यनेन संबध्यते । ये मुक्तास्ते सर्वदुःखविहीना एव । जनाद्येषु जनस्तपःसत्यलोकेषु स्थिताः । अमुक्तास्तु प्रायशस्तादृशाः सर्वदुःखविहीनाः । तत्रापि सत्यगा विशेषेण तु विशेषेणैव तादृशा इत्यर्थः । अत्र जनाद्येष्वित्युक्त्या भागवते ऋतपदं जनतपोलोकोपलक्षकमिति सूचितं ॥ ३० ॥ ततो विशेषमिति श्लोके ततस्तदनंतरं विशेषं विशिष्यतेऽनेनेति विशेषोऽसाधारणधर्मस्तं प्रतिपद्यत्यर्थभ्रांति

निरासाय पदद्वयं यथावद्व्याचष्ट ॥ ब्रह्मणेति । अनेन ततस्तेन ब्रह्मणा सह विशेषं पृथिवीं प्रतिपद्यति भागवतवाक्यं व्याख्यातं भवति । तथा तसिस्तृतीयार्थे तृतीया च सहार्थे इति सूचितं । अस्मिन्नेव श्लोके तेनात्मनेत्यस्य तेन स्वेनत्यर्थभ्रांतः । तथा ज्योतिर्मय इत्यस्य ज्योतिर्विकार इत्यर्थभ्रांतश्च निरासाय पदद्वयमनूद्य व्याचष्ट ॥ तेनेति । पृथिव्या आत्मना अंतर्नियामकेन । अनेनेति तृतीया षष्ठ्यर्थे । तेन तस्य । तस्य विशेषाख्यपृथिवीपदार्थस्य । आत्मनाऽतर्नियामकेनेति । तथा ज्योतिर्मयः प्रधानं यस्य स तथा चेति भागवतवाक्यं व्याख्यातं । अस्मिन्नेव श्लोके आत्मलिंगमित्यस्य आत्मनो हरेर्लिंगं । लिंगं शरीरमुद्दिष्टमित्यभिधानात् । शरीरमित्यर्थभ्रांतिनिरासाय प्रमाणमुदाहृत्य विवक्षितमर्थमाह ॥ आकाशवदिति । इति प्रमाणात्किंचित्परमात्मसदृशमित्यन्वयः । अनेनात्मनो लिंगं सर्वगतत्वादिरूपं चिन्हं यस्मिन्भूताकाशे तत्तथेति भागवतवाक्यं व्याख्यातं । भूताकाशे हरिवत्सर्वगतत्वात्तद्भावमभिप्रेत्य किंचित्सदृशमित्युक्तं ॥ ३१ ॥ ततो विशेषं प्रतिपद्य निर्भय इत्यारभ्य स वै पुनर्नेह विषज्जतेऽंगेत्यंत श्लोकेषु योगिनः केवलं जडपृथिव्यादितदभिमानिभिरेव सह जडावादितदभिमानिष्वेव प्रवेश उच्यत इति भ्रांतिनिरासाय देहलीप्रदीपन्यायेन मध्ये संभृतसूक्ष्मेंद्रियसंनिकर्षादिति श्लोकः प्रवृत्तः । तस्य प्रमाणेनैव तात्पर्यार्थं दर्शयंस्तेनैव प्रमाणेन सर्वश्लोकतात्पर्यमाह ॥ ज्ञानिन इत्यादिना । पार्थिवं पृथिवीतदभिमानिस्थित । परमात्मानमिति पद वारिस्थमित्याद्युत्तरपदैरपि संबंधनीयं । तेन अग्निस्थेन हरिणा सह । तेन हरिणैव । वायुगं हरिं । नीताः प्रापिताः । एवं पूर्वोत्तरं च व्याख्येयं । अनेन या भगवते प्रतिपाद्येत्यादिना ज्ञानिन पृथिव्यादिप्रवेशे स्वातन्त्र्यभ्रांतिर्निरस्ता । शांतिर्मोक्षोऽथ निर्वाणमिति गीताभाष्यद्वितीयाध्यायोदाहृताभिधानात् । अशांता अमुक्ताः शांता मुक्ताः संपद्यमानास्तथाभूताः शांतीभूताः । भागवतस्थ प्रायेणेत्यस्य कृत्यमाह ॥ येषामिति । येषां महात्मनां च वाग्वादीनां पदांतरापेक्षाऽस्ति ते पुनरावृत्तिं यांति । तदनंतरं ज्ञानि

नोऽधिकज्ञानिनो भूत्वाऽनावृत्तिमपि यांतीत्यर्थः । निरामयाः सर्वरोगरहिताः । असंमूढाः सर्वात्मना मोहरहिताः । ज्ञानिनः प्रलये सर्वं इत्यादिब्रह्मतर्के सर्वज्ञानिन इति सर्वशब्दग्रहणाज्ज्ञानिमात्रस्य साक्षादेव पृथिव्यादिस्थितभगवत्प्राप्तिरुच्यत इति प्रतीति प्रमाणेनैव परिहरंस्तेनैव प्रमाणेन पृथिव्यादिस्थितहरिविशेषनाम दर्शयंस्ततो विज्ञाननामानमित्यादिब्रह्मतर्कोक्तमतं दृढयति॥ भूम्याविल्यादिना । अग्न्यादीत्यादिपदेन वाय्वाकाशे ग्राह्ये । तेषु संस्थितं हरिं माण प्राणनामानं मानस मनःस्थितं मन आदिष्टं मन इत्यादिष्टं । एतादृशं हरिं क्रमशो देवता यांति । अत्र देवतास्वपि मध्ये । केचिद्ब्रह्माद्या एव साक्षादेनं हरिं यांति । तदन्ये ब्रह्मादिभ्योऽन्ये । क्रमशो परान् स्वस्वोत्तमानन्यान् । प्राप्य तद्द्वारा । एन हरिं । यातीत्यर्थः । क्रमशोऽवरानेति क्वचित्पाठः ॥ ३१ ॥ घ्राणेनेति श्लोकस्य ज्ञानिनः प्रलये सर्वं इत्यादिब्रह्मतर्कवाक्येनाव्याख्यातत्वादप्रतीतिविप्रतीनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ पंचेंद्रियैरित्यादिना । पंचेंद्रियैरेष्टव्या ये विषयास्तानखिलान् मानसांश्च मनसा एष्टव्यांश्च । प्राप्येत्यन्वयः ॥ ३२ ॥ स भूतसूक्ष्मेंद्रियेति श्लोकस्थब्रह्मतर्कवाक्येन व्याख्यातस्याप्यन्वयपूर्वकमव्याख्यातत्वात्स्वयमन्वय पूर्वकमाचष्टे ॥ भूतसूक्ष्मेति । समुच्चये तथाऽऽधिक्ये न्यूनत्वे चः प्रयुज्यत इति गीतातात्पर्योदाहृतशब्दनिर्णयाख्याभिधानादत्र चशब्द आधिक्ये । भगवानित्यनेन सबध्यते । निरवधिकैश्वर्यादिषड्गुणवानित्यर्थः । भूतसूक्ष्मेंद्रियैः सहत्यनेन भूतसूक्ष्मेंद्रियसन्निकर्षादित्यस्यार्थ उक्तो भवति । अत्रैव श्लोके सनातन इत्यस्य नित्य इत्यर्थभ्रांतिनिरासाय विवक्षितमर्थ मुक्त्वा तत्र प्रमाणं पठति ॥ नादवत्त्वादिति । महताऽपौरुषेयत्वादिना श्रेष्ठेन । नादेन शब्दरूपेण वेदादिना सहिता यतोऽत इति शेषः । नादेन सहित इति क्वचित्पाठः । अनेन नाद एव नातनं तेन सहितः सनातन इति तत्पदाविग्रहः सूचितः । तथा तृतीयोऽतिशय इति सूत्रादतिशयार्थे दकारस्य तकार इति सूचितं भवति । अस्मिन्नेव श्लोके विकार्यमित्यस्य विशेषेण

कार्यमित्यर्थभ्रांतिस्तथा देवमयमित्यस्य देवात्मकमित्यर्थभ्रांतेश्च निरासाय विवक्षितमर्थमाह ॥ विविधेत्यादिना । स्वोक्तार्थ प्रमाणेन विवृणोति ॥ मनःस्थित इति । देवप्रधानकानिति तात्पर्यार्थेन विविधकार्ययुक्तामिति स्वोक्तार्थ उक्तो भवति । अत्रैव श्लोके भूतसूक्ष्मेत्यस्य भूतानां सूक्ष्माणि शब्दादितन्मात्राणि इत्यर्थभ्रांतिनिरासायानुवादपूर्वकं विवक्षितमर्थमाह ॥ भूतसूक्ष्माणीति। अत्र तात्पर्ये वक्ष्यमाणप्रमाणानुसारेण पंचभूतानीत्यतःपरं शब्दाद्या इति शेषः पूरणीयः । अनेन बालाग्रशतभागस्य शतधा भेदितस्य च । स जीव इति विज्ञेय इति प्रमाणात्सूक्ष्मपदेन जीवा ग्राह्याः । तथा भूतसूक्ष्मरूपश॰दादिमात्राश्च ग्राह्या इति सूचित तथा भूतानां सूक्ष्माणि भूतानि च सूक्ष्माणि चेति विग्रहश्च सूचितो भवति । स्वोक्तार्थे प्रमाणमाह ॥ पंचभूतैश्चेति । असा। भगवाननादिरिति भागवतस्थविशेषणपदानामध्याहृताकाशगविशेष्यपदेनान्वयं प्रदर्श्येदानीं भागवत एव विद्यमानेन मनोमयविशेष्य पदेनान्वयं दर्शयति ॥ योऽसाविति । ननु ततो विशेषं प्रतिपद्येत्यादिना हरेर्गतिकर्मत्वमुक्त्वा भगवाननादिर्मनोमयं यातीति तद्विपरीतं गतिकर्तृत्वं किमर्थमुच्यत इत्यत आह ॥ विपर्ययश्चेति । विपर्ययश्च विपर्ययेण कर्तृत्वोक्तिस्तु तस्यैव गम्यस्यैव हरेः स्वातंत्र्येण गंतृत्वमस्तीति ज्ञापयितुमित्यर्थः । अस्मिन्नेव श्लोके मत्या सह तेनेत्यत्र तच्छब्दः पूर्वप्रकृतपरामर्शकः । पूर्वं त्वनेकं प्रकृ तमस्ति । तस्य कस्य परामर्शक इति न ज्ञायते । तस्य तत्परामर्शनीयार्थं दर्शयन्मत्या यातीत्येतद्व्याचष्टे ॥ मतिस्थेनेति । मतिस्थेन मनस्थेन च हरिणेत्यर्थः ॥३३॥ विज्ञानतत्त्वमिति श्लोके गुणसंनिरोधमित्यस्य गुणानां ज्ञानानंदादीनां सम्यक् निरोधः प्रति॰ बंधो यस्मिन्नित्यर्थभ्रांतिनिरासाय तदनूद्य व्याकुर्वन्विशेषान्वयं च दर्शयति ॥ गुणेति । निर्गुणं प्राकृतसत्त्वादिगुणकार्यरहितम् । अनेन गुणानां प्राकृतसत्त्वादिगुणानां सम्यक् नितरां रोधोऽभावो यस्मिन्निति तत्पदविग्रहः सूचितः ॥ ३४ ॥ एतां गतिमिति श्लोके यो भागवतः स एतां गतिं गत इत्यन्वयभ्रांतिनिरासाय विवक्षितमन्वयमाह ॥ एतामिति । एतां गतिं । एनं वासुदेवाख्यं

गम्यं । गतो नेह विषज्जते पुनः संसारं नाप्नोतीति वासुदेवस्य मुक्तप्राप्यत्वमुक्तं । तत्र प्रमाणमाह ॥ वासुदेवेति । भेददृष्ट्या जीवेश्वरादिभेदज्ञानेनाभिमानेन च हरौ बहुमानेन माहात्म्यज्ञानपूर्वकस्नेहभक्त्या च मुक्तबंधनाः संता वासुदेवाश्रिता इत्यन्वयः । तत्स्वरूपगतस्य हरेः स्वरूपत्वेन मतं विद्यमानमित्यर्थः । तेषां ब्रह्मादिमुक्तानां पृथक् हरेर्भिन्नमेव स्वरूप । आविष्टग्रहवद्भवेत् यथा वृद्धरक्त्यादिग्रहाः परशरीरभिन्ना एव सन् तच्छरीरे प्रविश्य स्वयोग्यभोगान्भुञ्जते । तथा ब्रह्मादिमुक्तः परब्रह्मदेहे प्रविश्य स्वयोग्यसुखमनुभवतीत्यर्थः ॥३५॥ नह्यतोऽन्य इति श्लोके अत इत्येतच्छब्दः पूर्वप्रकृतपरामर्शकः । तत्र पूर्वमनेकार्थाः प्रकृतास्तेषु कस्य परामर्शक इति न ज्ञायते । अव्यवहिततत्वनैते स्मृती ते नृपेति पूर्वप्रकृतस्मृतीपरामर्शक एतच्छब्द इति च प्रतीयतेऽतस्तन्निरासाय विवक्षितपरामर्शनीयार्थं दर्शयन्नन्वयं चाह ॥ यदिति । यद्भागवतं पुराण । अत एतस्मादित्यर्थः । ग्रंथात् । अन्य इति शेषः ॥३६॥ भगवान्ब्रह्मेति श्लोके तच्छब्दस्य भगवान्ब्रह्मेति प्रकृतब्रह्मार्थत्वभ्रांतिनिरासाय विवक्षितमर्थं दर्शयति ॥ तदिति । अत्रैव श्लोक भगवान् ब्रह्म वेदं त्रिरन्वीक्ष्येति हरेस्त्रिवारं वेदालोचनोक्त्या तस्य क्रमाधिकत्वज्ञानं प्रतीयते । तां प्रमाणेनैव परिहरति ॥ नित्येति । हरिः सिद्धं प्रमाणसिद्धमेव वस्तु नित्यज्ञानेन च नित्यज्ञानेनैव लीलया दुष्टानां मोहनाय च पुनः पुनरवेक्षते पश्यति । न तु पूर्वज्ञानापेक्षयाऽधिकज्ञानवान्भवतीत्यर्थः । अत्रासिद्धमित्यनेन हरिरप्रामाणिकं न पश्यतीति सूचितं भवति ॥ ३७ ॥ भगवानिति श्लोके भगवान् सर्वभूतेषु लक्षित इत्यन्वयार्थभ्रांतिनिरासायापेक्षिताध्याहारेण सम्यगन्वयार्थौ दर्शयति ॥ लक्षितश्चेति । न केवलं भगवान् भागवतपुराणमपश्यदित्येव । किंतु बुद्ध्यादीनां जीवबुद्ध्यादीनां पारवश्यदर्शनाज्जीवादेर्नियंताऽन्यो नास्तीति सर्वनियामकत्वेन हरिरस्मिन् भागवते पुराणे लक्षितश्च प्रतिपादितश्चेत्यर्थः । स्वोक्तार्थे प्रमाणमाह ॥ समाधाविति । समाधावित्यादि सप्तमी विषयेऽर्थे । निःस्वतंत्रस्येति भावप्रधानो निर्देशः । निष्क्रांतः स्वतंत्रत्वात् । स्वातंत्र्यरहित इत्यर्थः । अनेन

भगवान् हरिः दृश्यैः पराधीनत्वेनानुविषयैः अनुभवसिद्धस्वपारतंत्र्येणैवान्यो हरिर्नियंताऽस्तीत्यनुमापकैश्च बुद्ध्यादिभिर्लक्षणैः सर्वभूतेषु आत्मना आत्मत्वेन नियंतृत्वेनास्तीति लक्षितश्चेति भागवतवाक्यं व्याख्यातं भवति ॥ ३८ ॥ तस्मादिति श्लोके तस्मादित्यस्य सर्वभूतनियंतृत्वादित्यर्थभ्रांतिनिरासाय विवक्षितपूर्वप्रकृतमर्थमाह ॥ यस्मादिति । भागवते एष एव हरिरेवोक्तः। अनेन तस्मादित्यस्य भागवते हरेरवोक्तत्वादित्यर्थ उक्तो भवति ॥३९॥ इति श्रीभागवतटिप्पण्या द्वितीयोऽध्यायः ॥ २-२ ॥ छ ॥

॥ हरिः ॐ ॥ धर्मार्थमिति श्लोकार्धे धर्मार्थमुत्तमं श्लोकं रुद्रादिकीर्त्यं चतुर्मुखं यजेत् । अकामः पुरुषः पुरुष जीवं यजेदित्यर्थभ्रांतिनिरासायाकामः सर्वकामो वेति भागवतश्लोकः प्रवृत्तः । तत्र कामपदं धर्मकामस्योपलक्षकमित्यभिप्रेत्य प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अकाम इति ॥ ८ ॥ आयुर्हरतीति श्लोके योऽसौ सूर्य उद्यन्नस्तं च यन्गच्छंश्च पुंसामायुर्हरतीति तस्य सूर्यस्योत्तमश्लोकवार्तया ऋते क्षणो नीतः सूर्यस्य क्षणमात्रं हरिवार्ता नास्तीत्यन्यथाप्रतीतिनिरासायापेक्षिताध्याहारेणात्तरार्धं सम्यग्व्याचष्टे ॥ तस्येति । उत्तमश्लोकवार्तया ऋते विना यः क्षण इत्यन्वयः ॥ १७ ॥ इति श्रीभागवततात्पर्यटिप्पण्या तृतीयोऽध्यायः ॥ २-३ ॥

॥ हरिः ॐ ॥ आत्मजायेति श्लोके आत्मजायादौ नित्यनिरूढां ममतां जहाविति परीक्षितो राज्ञ आत्मजायादौ ममताया नित्यनिरूढत्वं त्यागश्चोच्यते । तदुभयमयुक्तं । इति व्यवस्थाप्य स पांडवेयः प्रायोपवेशं प्रति विष्णुद्यामिति प्रथमस्कंध श्लोके इतःपरं प्रायोपवेशकाल एव मुनिव्रतो मुक्तसमस्तसंग इत्यनेन ममतात्यागस्योक्तत्वेनेदानी नित्यनिरूढत्वस्य त्यागस्य चासंभवादित्यतः श्लेषपूरणेन तत्तात्पर्यार्थमाह ॥ अन्येषामिति । अन्येषामिति षष्ठी तृतीयार्थे । अन्यैर्नित्यनिरूढां नितरां ऊढां । वह प्रापण इति धातोः । प्राप्तां । त्यक्तुमशक्यामपीति यावत् । ममतां विशेषतो जहावित्यर्थः । अत्र विशेषत इत्यनेन

पूर्वं त्यागो न विशेषतोऽतो नासंभव इत्युक्तं भवति । अनेन नित्यं निरूढमिति भागवतपदस्यान्यैस्त्यक्तुमशक्यमपीति तात्पर्यार्थ उक्तो भवति ॥ २ ॥ वासुदेव इति श्लोकार्धे वासुदेवे आत्मभावं आत्मनो जीवस्य भाव धर्म जीवत्व गतो ज्ञातवानित्यर्थ भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ आप्तेरिति । आप्तेर्हरिणा सर्वदा प्राप्तत्वात् । योऽधिकारी ॥ ४ ॥ गृहीतश क्तीति श्लोकार्धे सदुद्भवस्थाननिरोधलीलया गृहीतमुपात्तं शक्तीना श्रीभूदुर्गाख्याना त्रितय येन स तथेति शक्तिपदेन ग्रहणादिकं प्रतीयते । उत्पत्त्यादिकाले शक्तिग्रहणोक्त्या शक्तिग्रहणस्य कादाचित्कत्व च शक्तित्रयस्य हरिभिन्नत्व च प्रतीयते । अतस्तन्नि रासाय तत्प्रतीक गृहीत्वा प्रमाणेनैव तद्व्याकुर्वन् अर्थात्प्रमाणोक्त गृहीतत्वस्य नित्यत्वं स्वयमाह ॥ गृहीतेति । स्वरूपभूता अपि शक्तयस्तु भेदप्रतिनिधिविशेषेण भिन्नवद्व्यवहारिका गृहीतेत्यादौ भेदयुक्तवद्व्यवह्रियत इत्यर्थः ॥ १२ ॥ भूयो नम इति श्लोकार्धेऽखिलसत्त्वमूर्तय इत्यस्याखिलजीवस्वरूपायेत्यर्थभ्रांतिनिरासाय तदनूद्य यथावद्व्याचष्ट ॥ अखिलेति । पूर्णाः साधवा निर्दोषा ज्ञानानंदादयो गुणास्तेषा भावा ज्ञानत्वादिधर्मः स एव स्वरूप यस्य स तथा तस्मा इत्यर्थः । अनेनाखिलाः पूर्णा[illegible] त साधवश्चाखिलसतो भावा ज्ञानानदादयो मूर्तिः स्वरूप यस्य सोऽखिलसत्त्वमूर्तिः । धर्मधर्मिणारभेदात्पूर्णज्ञानादिस्वरूपस्तस्मा इति भागवतपदं व्याख्यातं भवति । एवमखिलसत्त्वमूर्तय इत्यस्यैकमर्थमुक्त्वेदानीमर्थांतरमभिप्रेत्य प्रमाणेनैव सत्त्वपदस्यार्थांतरमाह ॥ निःशेषेति । अनेनाखिलदेशकालपूर्णा सत्त्वा निःशेषगुणपूर्णा मूर्तिः स्वरूपं यस्य हरेरिति तत्पदं प्रकारांतरेण व्याख्यातं भवति ॥ १३ ॥ स एष इति । श्लोकार्धे त्रयीमय इत्यत्र मयगो विकाराद्यर्थत्वस्य प्रमाणबाधितत्वान्मयट्पदस्य प्राधान्यार्थत्वमेव ग्राह्यः । तथा च त्रयीमय इत्यस्य त्रय्या मयः प्रधान इत्यर्थस्य प्रसिद्धत्वेन शिष्यैः स्वयमेव ज्ञातु शक्यत्वात्तं विहायान्यमपूर्वमर्थ प्रमाणेनैव दर्शयति ॥ वेदानुसारीति । तुरवधारणे । यतो हरिः स्वेच्छयैव वेदानुसारिणां भक्तानां वशगतोऽतः प्राज्ञाः स्वतं

त्रमपि हरिं वेदमयोति प्राहुरित्यर्थः । अनेन त्रयीमय्यनुसारी मयः प्रधानो यस्येति तत्पदविग्रहः सूचितो भवति ॥ १९ ॥ इति श्रीभागवततात्पर्य टिप्पण्यां चतुर्थोऽध्यायः ॥ २-४ ॥

॥ हरिः ॐ ॥ देवदेवेति श्लोके यज्ज्ञानं तद्विजानीहि । ननु भागवतकारेणैवं व्यत्ययेन प्रयोगः किमर्थं कृत इत्यतो महा व्याकरणवचनमुदाहृत्य प्रयोजनं सूचयति ॥ व्यत्यय इति । अनेन नारदाच्चतुर्मुखस्य भेदस्तदुपदेश ईश्वरदत्तं स्वातंत्र्य कारणत्वं चास्तीति ज्ञापनाय व्यत्ययेन प्रयोगः कृत इत्युक्तं भवति ॥ १ ॥ यद्रूपमिति श्लोके इदं जगद्यद्रूपं यस्य हरेः स्वरूपमिति हरेर्जगदैक्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ तद्वशत्वादिति । येन रूप्यते निरूप्यते आज्ञाप्यते तत् यद्रूपमिति तत्पदविग्रहः सूचितः । अस्मिन्नेव श्लोके यदधिष्ठानमित्यनेन यदधिष्ठानं यस्य जगत इति हरेर्जगदधिकरणत्वमुक्तं । तदेव यत्संस्थं यस्मिन्हरौ संस्थितमित्यनेनाप्युच्यते । अतः पुनरुक्तिरित्यतः प्रमाणेनैवार्थभेदं दर्शयति ॥ अधिष्ठानमित्या दिना । यत् मूलाधारं मूलाधारभूतं तदधिष्ठानमिति प्राक्तनमित्यर्थः । उभयं मूलाधारभूतः पृथक् पृथक् तद्वस्त्वाधारभूतश्चेत्यर्थः । अत्रैव श्लोके इदं जगद्यत्परं यस्माद्धरेः परमुत्तममित्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ हरिः पर इति । अनेन यो हरिः पर उत्तमो यस्मादव्यक्तादिजगतस्तद्यत्परमिति तत्पदविग्रहः सूचितः । अस्मिन्नेव श्लोके इदं जगत् च यदेव ब्रह्मैवेति जगतो ब्रह्मस्वरूपत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ यदधीनेति । अनेनेदं जगत् यच्च यस्य हरेरधीनमेवेत्यर्थ उक्तो भवति ॥ २ ॥ नारदेन तत्त्वं वद तत्त्वत इति तत्त्वोपदेशार्थं प्रार्थनां कृत्वा तत्त्वोपदेशे चतुर्मुखस्य साम र्थ्यमस्तीति ज्ञापनाय सर्वं ह्येतद्भवान्वेदेत्याद्युत्तरग्रंथेनासंकुचितसर्वज्ञत्वसर्वप्रभुत्वसर्वस्रष्टृत्वादिचतुर्मुखमाहात्म्यमुच्यते । तच्च नारदेन स्वसिद्धांतत्वेनोच्यते इति स्यात् तन्निरासाय तं ग्रंथमवतार्य देहलीदीपन्यायेन तन्मध्यस्थश्लोकप्रतीकं गृण्हाति ॥

तदाधिकामिति । तस्माच्चतुर्मुखादाधिकं । वस्त्विति शेषः । एकः सृजसीत्यादिना एकः सृजसीत्यस्य आदिः आदिभूत सर्वं ह्येतत् भवान्वेदेत्यादिवाक्य तेनेत्यर्थः। एकः सृजसीति वाक्यमादौ यस्य भूतानि भूतैरेवात्ममायेत्यादिवाक्यजातस्य तत्तथा तेनेति चार्थः । एतच्चतुर्मुखमाहात्म्यपरश्लोकमध्यस्थे यद्विनो यदधार इति श्लोके यदात्मको यज्जगत् आत्मा स्वरूप यस्य चतुर्मुखस्य जग दैक्यमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ त्वदधीनेति । केशाद्वोऽन्यतरस्यामिति पाणिनीयसूत्रात्कशा जटाः सन्त्यस्मिन्विरिंचे स केशवः । तस्य संबोधन हे केशव । अपिपदेन प्रवृत्तिप्रतीतिः सङ्गृह्यते । अतस्त्वज्जगद्भवानित्युच्यत इति शेषः । ननु सर्वं ह्येतदित्यादिनारदोक्तस्य पूर्वपक्षत्वोक्त । तदयुक्तं । तथात्वे चतुर्मुखस्तन्निराकुर्यात् । न चव । प्रत्युत नानृतं बत तवापीत्यादिना विरिंचस्य नारदोक्तांगीकार एव प्रतीयते । अतोऽयुक्तमेतदित्यतस्तच्छ्लोकतात्पर्यमाह ॥ नानृतमि तीति । इतीत्यत्र श्लोके आक्षेपः । निरासः पूर्वपक्षस्य । विरिंचेन कृत इति शेषः । अनेन भो नारद त्व मा प्रति सर्वं ह्येतादि त्यादि यत्प्रब्रवीषि तद्यथा यथार्थं न किंत्वनृतं च अयथार्थमेव । बत खेदे । कुतोऽनृतमिति चेत् । यतो मत्तः परमुत्कृष्टं वस्त्व विज्ञाय प्रब्रवीष्यतोऽनृतं । त्वत्तोऽन्यः परो नास्ति त्वमेव पर इति चेन्न । हि यस्मात् मे मम एतावत्त्वमपि एतावत्त्वमव परिमितत्वम वातो नाहं परः किंतु मत्तोऽन्य उत्कृष्टोऽस्ति । यत एवमतो मदुत्कृष्टमविज्ञाय यत्सर्वं ह्येतादित्यादि त्वदुक्त तदनृतमेवति भागवत वाक्यं व्याख्यात भवति ॥ ४–८–१० ॥ यन्मायायेति सार्धश्लोके उच्यमाना का । अविद्यारूपा मायोच्यत इति भ्रांतिनिरासाय प्रमाणेनैव मायाशब्दार्थमाह ॥ मुख्येति । प्रकृतिः श्रीः । दीना दुःखिता । जीवपरमाच्छादिका प्रकृतिश्चामुख्यतयव माया प्रकीर्तितेत्यर्थः ॥ १२–१३ ॥ द्रव्यं कर्मेति श्लोके वासुदेवादन्यः परः शत्रुरूपोऽथो नास्तीति परशब्दस्य शत्र्वर्थत्वभ्रांतिनि रासाय तदनूद्य व्याचष्टे ॥ पर इति । अस्मिन्नेव श्लोके तत्त्वमेव तात्त्वं । तस्मात्तात्त्वतः । तत्त्वतः परोऽधिको नास्तीति तात्त्वत

इत्यर्थभ्रांतिनिरासाय प्रमाणेनैवार्थमाह ॥ तद्धदेवेति । अनेन वासुदेवादन्यस्तात्वतः परस्तद्धरिवत्स्थितस्तात्वतः । अतिशयेन ताद्वत एव तात्त्वतः । तृतीयोऽतिशय इति सूत्रादतिशयार्थे दकारस्य तृतीयस्तकारः । अतिशयेन निरवधिकत्वेन हरिवद्विद्यमान' परोऽधिका नास्ति, किंतु सावधिकत्वेनैवाधिकाऽस्तीति भागवतवाक्य व्याख्यातं भवति ॥ १४ ॥ नारायणपरा इति श्लोकद्वये नारायणात्परा उत्तमा वेदा इत्याद्यर्थभ्रांतिनिरासाय तत्तात्पर्यार्थमाह वेदेति । इत्यादीत्यादिपदेन नारायणपरा लोका इत्यादेरर्थः संगृह्यते । स्वेन संकोचेन व्याख्यातं श्लोकद्वयं विस्तरेण प्रमाणे नैव व्याचष्टे ॥ गम्येज्येति । वाच्येषु मध्ये योज्येषु योग्यविषयेषु मध्ये । पूज्यमानानां मध्ये परः । हरिरित्यनुवर्तते । एव कारो हरिरित्यनेन संबध्यते । अनेन नारायण एव पर उत्तमवाच्यो येषां वेदानां तथा । नारायण एव पर उत्कृष्टो येभ्यो लोकेभ्यस्ते तथा नारायण एव परमेज्यो येषु मखेषु ते तथा । नारायण एव पर उत्तमगम्यो यस्यां गतौ गम्यसमुदाये सा तथेति भागवतश्लोकद्वय व्याख्यातं भवति ॥ १५–१६ ॥ नन्वेवं चतुर्मुखेन नारदकृतपूर्वपक्षो निराकृतः तदनतरं तत्तत्त्वं वद तत्त्वत इति नारदपृष्टं तत्त्वं वक्तव्यं । तद्विहाय यद्धरेः स्थित्यादौ सत्त्वादिगुणत्रयग्रहणमुच्यते । तदयुक्तं । प्रकृतासंगतत्वाद पृष्टपरिभाषणत्वाच्चेति चेन्न । यद्रूपं यदधिष्ठानमित्यादि पृष्टवता नारदेन हरेः स्थित्यादौ सत्त्वादिगुणत्रयग्रहणस्यापि पृष्टत्वात् । नन्वेतन्नारदेन पृष्टमिति कुतो ज्ञायत इति चेन्न । यथा गुणास्तु प्रकृते युगपत्क्रमशोऽपि वेति चतुर्थाध्याय परीक्षित्प्रश्नस्यैवतदध्यायांते एतदेवात्मभू राजन् नारदायेति पृच्छ्यत इति श्लोकेन नारदकृतत्वस्योक्तत्वादस्य नारदपृष्टत्वं ज्ञायते । अतो न प्रकृतासंगतत्वादि कामित्याशयवान् तद्वाक्यसंगतिमाह ॥ युगपदिति । एवं सगतिमुक्त्वेदानीं तस्मिन् श्लोके सत्त्वं रजस्तम इति त्रयो गुणाः स्थितिसर्गनिरोधेषु स्थित्याद्यर्थं विभोर्हरेर्मायया गृहीत इति सत्त्वादिगुणानां हरिमायया गृहीतत्वमेवोच्यते । न तु हरिगृहीतत्व-

मित्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ नित्यमिति । भगवान् स्वयं च स्वयमेव नित्यं स्थित्यादिषु दैन दिनस्थित्यादिषु । तादर्थ्ये सप्तमी । युगपद्गृहीताः । प्रथमा द्वितीयार्थे । गृहीतान् । सत्त्वाद्याः सत्त्वाद्यान्गुणान् । विशेषतः स्थित्यादिषु आदिकालीनस्थित्याद्यर्थं क्रमश एव गृण्हातीत्यर्थः । अनेन मायाभिधेश्वरेच्छाया ईश्वरात्यंताभेदान्मायागृहीतत्व-मेवेश्वरगृहीतत्वमित्युक्तं भवति । तथा युगपत्क्रमशो वेति नारदप्रश्नस्य दैनंदिनसृष्ट्यादा युगपत्प्रकृतिगुणान् बिभर्ति आदिसृष्ट्यादा क्रमशो बिभर्तीति परिहारोऽनेनोक्त इति चोक्तं भवति ॥ १८ ॥ कार्यकारणेति श्लोके नित्यदा मुक्तं नित्यमुक्तं मायिन मायाश्रयं पुरुषमीश्वरं गुणाः सत्त्वाद्याः कार्यकारणकर्तृत्वे बध्नतीति हरेः सत्त्वादिगुणैः ससृतिरुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ज्ञानेन्द्रियैरिति । ज्ञानेंद्रियैः बाह्यज्ञानेंद्रियैर्मनसा चेति शब्दान्वयः । ज्ञानेंद्रियैरित्यादिनोक्त मेवार्थं विवृणोति ॥ आंतरमिति । आंतरं सुख ज्ञानादिसंबंधि । तुशब्दत्रयमवधारणे । सत्त्वेन रजसा तमसेत्यनेन संब-ध्यते । कर्मकारणैः क्रियाहेतुभिः । करणैः इन्द्रियैः । युक्तं स्वमिति शेषः । ननु कर्तृत्वमभिमन्यत इत्यादिना जीवस्य कर्तृत्वा द्यभिमानमात्र न तु कर्तृत्वादिकमिति सर्वथा कर्तृत्वाभावः प्रतीयते । स तु कर्ता शास्त्रार्थवत्त्वादिति प्रमाणबाधित इत्यतः स्वोक्ताभिप्रायं स्वयमेवाह ॥ अकर्तेति । अकर्ता प्राकृतकर्तृत्वस्वरूपो न । करणैः प्राकृतेंद्रियैः हीनस्तत्स्वरूपवान् । शरीरेण प्राकृतशरीरेण । विवर्जितः तत्स्वरूपो न । किंतु नित्यज्ञानस्वरूपः नित्यज्ञानात्मककर्तृत्वेंद्रियशरीरस्वरूपः । असौ त्रिविधजीवः । गुणैरेव प्राकृतसत्त्वादिगुणैरेव तत्संबंधेनैवाभिमन्यते । अस्वरूपमपि प्राकृतकर्तृत्वादिकं स्वस्याभिमन्यत इत्यर्थः । अत्र नित्य ज्ञानेति सामान्योक्त्या तथा त्रिविधजीवग्रहणे बाधकाभावाच्च त्रिविधजीवो विवक्षित इति ज्ञायते । अनेनात्र श्लोके प्राकृतकर्तृ-त्वादिस्वरूपमेव निषिध्यते न तु सर्वथा कर्तृत्वादिकं निषिध्यत इत्युक्तं भवति । नन्वयं श्लोको जीवपरत्वेन कुतो व्याख्यायते ।

ईश्वरस्य एव किंन स्यादित्यत ईश्वरपरत्वे बाधकं दर्शयन्नुपसंहरति ॥ एवमिति । अनेनेश्वरस्य संसारप्रतिपादकश्लोकप्रतिपाद्यत्वे तस्यैव संसार उक्तो भवति । तस्य संसारित्वे स्वातंत्र्याद्यभावः स्यादिति बाधकमुक्तं भवति । अत्र मायिनमित्यस्येन्द्रजालादिमायाश्रयमित्यर्थभ्रांतिनिरासाय तदनूद्य नित्यज्ञानस्वरूपोऽसाविति प्रमाणानुसारेण व्याचष्टे ॥ मायिनमिति । स्वतः स्वरूपतः । ज्ञानिनं नित्यज्ञानस्वरूपमित्यर्थः । अनेन नित्यदा मायिनमिति भागवतपदान्वयः सूचितः १९ ॥ स एष भगवानिति श्लोके एतैरिति पदं पूर्वप्रकृतार्थपरामर्शकं । पूर्वप्रकृतार्थास्त्वनेके । तत्र कस्य परामर्शक इति जिज्ञासाया तदर्थं दर्शयन् त्रिभिर्लिंगैरित्यस्य केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेक्यनुमानैरित्यर्थभ्रांतिं निराकरोति ॥ लिंगैरिति । अस्मिन्नेव श्लोके स्वलक्षितगतिरित्यस्य स्वस्य लक्षिता गतिर्येनेत्यर्थभ्रांतिनिरासाय पूर्वपदान्वयं दर्शयन्विवक्षितमर्थमाह ॥ एतैरिति । एतैः सत्त्वादिगुणकार्यैः । लिंगैः ज्ञानसाधनैरिंद्रियादिभिः । स्वातंत्र्यात् स्वशब्दवाच्यहरेः प्रसादात् । लक्षिता जीवेन ज्ञाता । गतिः गम्यत इति गतिः स्वरूपं यस्य हरेः स तथत्यर्थः । स्वोक्तार्थे प्रमाणं वदन् तेनेव प्रमाणेन स्वलक्षितपदस्यार्थं चाह ॥ स्वप्रसादादिति । येन कारणेन । स्वप्रसादात् हरिप्रसादात् । जीव इमं शरीर पश्येत्तेन कारणेन हरिःस्वलक्षित इत्युच्यत इत्यर्थः । अनेन स्वात् स्वतंत्रात् प्रसन्नाद्धरेर्लक्षिता जीवन ज्ञाता गतिः गम्यत इति गतिः स्वरूपं यस्य हरेरिति तत्पदार्थ उक्तो भवति ॥ २० ॥ कालं कर्मेति श्लोके स्वया माययेत्यस्य दुर्गमार्थत्वात्प्रमाणेनैव विवक्षितमर्थमाह ॥ यत्रेति । (स्वाविद्ययेत्यर्थभ्रांतिनिरासाय तात्पर्यार्थमाह ॥ स्वेति । अत्रैव श्लोके यदृच्छयेत्यस्य) ईश्वरेच्छेत्यादिपदन तज्ज्ञानादिकं ग्राह्यं । यत्र कार्ये । ईश्वरेच्छादिना विनाऽन्यहेत्वभावः स्यात् । ईश्वरेच्छादिकमेव हेतुः स्यात् । तत्रेश्वरेच्छादिमात्रजन्ये यदृच्छया शब्दप्रयोगः स्यात् । कुत एतदित्यत आह ॥ तदिच्छेति । हि यस्मात् । तदिच्छा तादृशमीश्वरेच्छादिकं । यदृच्छा स्यात् यदृच्छाशब्दवाच्यं भवति । अत ईश्वरेच्छादिमात्रजन्यं कार्य

यदृच्छाप्राप्तमित्युच्यत इत्यर्थः । एवं यदृच्छयेति पदार्थमुक्त्वेदानीं यदृच्छया प्राप्तकालादिकं उपादद इत्यनेन कालादेः कादाचित्कत्व भ्रांतिर्भवति । तन्निरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ।। कालेति । आदिपदेन द्रव्य ग्राह्य । सृष्ट्यादौ सृष्ट्याद्यर्थ । विशेषेण उन्मुखत्वेन गृण्हातीत्यर्थः । अत्रैव श्लोके विबुभूषुरित्यस्य विगतः बुभूषुर्यस्मादित्यर्थ भ्रांतिनिरासाय तात्पर्यार्थमाह ।। विबुभूषुरिति । अनेन विविध भवितुमिच्छतीति बुभूषुरित्यर्थ उक्तो भवति । स्वात्कार्थ प्रमाणेन विवृणोति ।। ईश इति ।। २१ ।। कालाद्गुणेति श्लोके परिणामस्वभावत इत्यस्य कालकर्मणोर्विशेषणत्वभ्रांतिमपेक्षिताऽन्वयप्रदर्शनेन परिहरति ।। प्रकृतेरिति । अनेन परिणामः स्वभावः यस्याः सा । परिणामस्वभावं परिणामस्वभावाया इति परिणामस्वभावत इति प्रकृति विशेषणमेतादित्युक्तं भवति । इदानीं सर्वश्लोकं प्रमाणेन व्याचष्टे ।। गुणेति । अत्र गुणपदेन गुणव्यतिकरो ग्राह्यः । स्वभाव पदेन परिणामस्वभावप्रकृतिर्ग्राह्या । अधिष्ठितत्वतः गुणादिष्वधिष्ठितत्वहेतुः । जगदादि जगत आदिकारणभूतं ।। २२ ।। तमः प्रधान इति श्लोके तमःप्राधान्यस्याहंकारस्य द्रव्यज्ञानक्रियात्मकत्वमुच्यते तत्र द्रव्यज्ञानक्रियाशब्दानां वैशेषिकाद्यभिमत पृथिव्यादिनवद्रव्यार्थत्वमनोवृत्तिरूपज्ञानार्थत्वयज्ञादिक्रियार्थत्वभ्रांतिनिरासाय प्रमाणेनैव तत्पदत्रयार्थमाह ।। भूतानीति । तन्मूलत्वात् भूतज्ञानेंद्रियकर्मेंद्रियकारणत्वात् । अह अहंकारः ।। २३ ।। द्रव्यज्ञानक्रियात्मकस्यैवाहंकारस्य वैकारिक इति श्लोकार्धे वैकारिकादिभेदेन त्रैविध्यमुच्यते । तत्र वैकारिकादिपदानां विकारिणः परिणामिन संबंधी वैकारिकस्तेजोविकारस्तैजसस्तमोविकारस्तामस इत्यर्थभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ।। विशिष्टेति । अनेन विशिष्ट कार्य करोतीति विकारी । विकार्येव वैकारिकः । अतिशयेन तेजः प्रकाशमानस्तैजसः । यतो भूतेषु तावत्ताद्दशमुभय विशिष्टकार्यकारित्वमिति जाज्वल्यमानत्वं चेत्युभयं नास्त्यतस्तामसः तामसनामानि भूतानीति पदत्रयार्थ उक्तो भवति ।। २४ ।। द्रव्यशक्तिरिति

श्लोकार्धे द्रव्यादीनां शक्तिरुच्यते । सा तु द्रव्यादिशब्दवाच्यजडभूतादीनामेवाच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ज्ञानेंद्रियाणामिति । ज्ञानेंद्रियाणां । अभिमानिनामिति शेषः । देवानामित्येतत् कर्मेंद्रियाणां भूतानामित्यत्राप्यनुवर्तते । क्रिया क्रियाशक्तिः । भूतानि द्रव्यनामानीति आकाशादिपंचभूतानां द्रव्यनामोक्त । तत्तु रूढमात्रं न भवति । किंतु यौगिकमपीत्यभिप्रेत्य तस्य द्रव्येति नाम्नो यौगिकत्वं प्रमाणेनैव दर्शयति ॥ द्रव्य त्विति । यतः कारणाद्विवदमानयोः पुरुषयोर्मध्ये एकस्य पुरुषस्य । वेगाभिसंबंधात् वेगवत्त्वेन । पूर्वं तु द्वितीयपुरुषापेक्षया प्रथमत एव । द्रवणप्राप्यं गमनेन प्राप्यं । अतः कारणाद्द्रव्यमित्युच्यते । ननु पृथिव्यादिचतुष्टयस्य मूर्तत्वेन द्रवणप्राप्यत्वेऽपि व्याप्यत्वेन रुदा प्राप्तस्याकाशस्य कथं द्रवणप्राप्यत्वमित्यत आह ॥ आकाश इति । आकाशाभिन्नतत्प्रदेशस्य द्रवणप्राप्यत्वादाकाशो द्रवणप्राप्यो भवतीति भावः । अनेन द्रवणाद्द्रवणेन गमनेन याप्यत प्राप्यत इति द्रव्यमिति पदविग्रहः सूचितः ॥२५॥ तस्य मात्रेति श्लोकार्धे शब्दगुणे मात्र शब्दः प्रयुज्यते । तस्य डित्थादिशब्दवत्सांकेतिकत्वभ्रांतिनिरासाय प्रमाणेनवार्थमाह ॥ पंचेति । पंचेति स्पर्शाद्यपेक्षया । अनेन मीयते ज्ञायत इति मात्रा इति पदविग्रहः सूचितः । अस्मिन्नेवार्थे लिंगं यद्द्रष्टृदृश्ययोरित्यस्य द्रष्टृदृश्ययोर्लिंगमनुमानमित्यर्थभ्रांतिनिवारणाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ शब्देनैवेति । शब्देनैव आकाशगुणध्वन्यात्मकशब्दव्यंग्यवेदादिशब्देन ज्ञायते नान्येन । जगच्च ज्ञायत एवेत्यन्वयः । अनेन हरेः शब्दकगम्यत्वं जगतः शब्दादिप्रमाणत्रयगम्यत्वमित्युक्तं भवति । तथा तस्याकाशस्य गुणो गुणरूपध्वन्यात्मशब्दव्यंग्यः शब्दो वेदादिर्द्रष्टृदृश्ययोर्लिंगं ज्ञापकमिति भागवतवाक्यं च व्याख्यात भवति ॥ २६ ॥ नभसोऽथेति श्लोकेऽनिलस्य प्राण ओजः सहोबलमित्यनेन प्राणत्वादिकमुच्यते । तच्च भूतप्रकारणाज्जडवायोरेवोच्यत इति भ्रांतिर्भवति । तां प्रमाणेनेव प्राणादिशब्दप्रवृत्तिनिमित्तप्रदर्शनेन परिहरति ॥ सर्वचेष्टयितृत्वादिति । वायुः वायुशब्द

वाच्यः । साभिमानभूतवायुनियामका विष्णुर्भूतवायुमुख्योऽभिमानी मुख्यप्राणश्च । अनेन विष्णुमुख्यप्राणसंबंधादवामुख्य प्राणत्वादिकं भूतवायुतदमुख्याभिमानिनारम्भि न तु मुख्यामिति सूचित भवति ॥ २७ ॥ वैकारिकादिति श्लोके उपेंद्राख्यहरेर्वैकारिकाहंकारादुत्पत्तिस्तथा दिग्वातादिंद्रियाभिमानिसहपाठादिंद्रियाभिमानित्वं प्रतीयते । तन्निरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अनादीति । अवतीर्ण आविर्भूतः ॥ ३० ॥ तदा संहत्येति श्लोके एते भूतेंद्रियादयो यदा आयतननिर्माणे न शकुस्तदा सदसत्त्वं विद्यमानाविद्यमानत्वं उपादाय अदः उभयं चेतनाचेतनात्मकं जगत् ससृजुरित्यन्वयभ्रांतिनिरासाय पदच्छेदं दर्शयन् पदद्वयमनूद्य व्याचष्टे ॥ सदसत्त्वमिति ॥ अद इति च । नाभयमित्यत्र न इति पदच्छेदे कृते सत्युत्तरत्र भयमिति वाऽभयमिति वा पदच्छेदः कर्तव्य इति जिज्ञासायां भयमिति पदच्छेदः कर्तव्य इत्यभिप्रेत्य ब्रह्मांडस्य भयप्रदत्वमुपपादयति ॥ ब्रह्मांडमिति । हि यस्मात् । तत्र ब्रह्मांड । संसृतिर्भवति । तत् तस्मात् । ब्रह्मांडजीवानां भयकारणं वर्ततीत्यर्थः । अनेनैते भूतेंद्रियादयः सदसत्त्वं व्यक्तत्वमव्यक्तत्वं चापादाय प्राप्य नाऽस्माकं भय भयप्रदमदः ब्रह्मांडं ससृजुरुत्पादयामासुरिति भागवतवाक्यं व्याख्यातं भवति । सदसत्त्वमुपादायेत्यनेन सामान्यतः सर्वेषां भूतेंद्रियादीनां व्यक्तत्वाव्यक्तत्वप्राप्तिरुच्यत इति भ्रांतिर्भवति । तां प्रमाणेनैव निराकरोति ॥ आकाशेति । अंडेऽन्तर्विद्यमानौ आकाशवायू तु विशेषण । अव्यक्तौ । अंडेऽन्तर्विद्यमाना इतरेऽन्यादित्रयः । नन्वेवं व्यवस्थया व्यक्तत्वाव्यक्तत्वे कुतः सर्वेषामपि किं न स्यातामित्यत आह ॥ तथात्वादिति । अंडाद्बाह्यभूतानामाकाशादीनां । तथात्वात् व्यवस्थया व्यक्तत्वाव्यक्तत्ववत्त्वात् । अंडस्थानां च सा गतिः व्यवस्थयैव व्यक्तत्वाव्यक्तत्वप्राप्तिरित्यर्थः । तेषामत्राऽस्थत्वादित्यर्थः ॥ ३३ ॥ वर्षपूगानि श्लोके एते भूतादयः समजनुरन्तर्जीवं जडं अंडं वर्षपूगसहस्राणि कालकर्मस्वभावस्था जीवा ब्रह्माऽजीजनन् जनयामासेत्युत्पन्नस्यैव ब्रह्मांडस्य पुनश्चतुर्मुखादुत्पत्तिरु

च्यत इति भ्रांतिनिरासाय स्वयं तात्पर्यार्थमाह ॥ कालेति । अजीवमित्यनूद्य स्वात्मानमिति व्याख्यात । अजीजनत् प्रादुर्भूतं चकार । अजीव इति पदच्छेदं कृत्वा तस्य परमेश्वरोऽर्थ उक्तः । तत्र प्रमाणमाह ॥ यः प्राणेति । यः पुरुषः प्राणप्रमाणानिशं प्राणधारणं चेष्टाधारणं कुरुत स जीव इति सदिष्टः स तु प्राणः । यस्य प्रसादात्सर्वस्य चेष्टाधारणं कुरुत स तदन्या जीवनाम कादन्याऽजीव इत्युच्यत इत्यर्थः । इदानीं कर्मस्वभावस्थ इत्यादि स्वोक्तार्थे प्रमाणमाह ॥ कालकर्मेति । उद्बुद्ध कायान्मुख । तस्यैव विवरणमात्मप्रसवकारणमिति । अनेन कालकर्मस्वभावस्थाऽजीवः परमेश्वरस्तदंडमजीवमजीजनत् । ब्रह्मांड यथा स्वात्मानं प्रसूयतेऽभिव्यंजयाति तथा चकारेति भागवतवाक्यं व्याख्यातं भवति । एवमजीव इति पदच्छेदनार्थमुक्त्वदानी जीव इति पद च्छेदेन वा स एवार्थे ज्ञेय इत्याशयवान् तथा पदं छित्वा तस्य हरौ प्रवृत्ति प्रमाणनेव दर्शयति ॥ जीव इति वेति । अन चेष्टायामिति धातोः । प्रकृष्टमनं प्राणं प्रकृष्टचेष्टां । अजीवाऽपि जिवभिन्नोऽपि जगच्छरीरादिकं । अजीवयत् जीवयुक्तमकरादि त्यर्थः । अनेन जीवयनीति जीवपदार्थ उक्ता भवति । ननु पदच्छेदद्वयेनापि हरिरव कुतो गृह्यत जीवः किं न स्यादिति चन्न । जीवग्रहण कालकर्मस्वभावस्थ इति विशेषणानुपपत्तेर्हरिरव गृह्यते ॥ ३४ ॥ स एष इति श्लोकार्थ स एषाऽजीवः पुरुषा हरिरंडं निभिद्यांडान्निर्गत इति पूर्वमकृतपरामर्शकतदेतच्छब्दबलाद्धरेरेवांडजातत्वमुच्यत इति भ्रांतिपरिहाराय प्रमाणनेव तत्तात्पर्यार्थमाह ॥ अंडे जाताविति । अनेन कालकर्मस्वभावस्थ इति पूर्वार्धे जीवमिति पदच्छेदेन तदंडं जीवमजीजनत् । चतुर्मुखं यथा प्रसू यते तथा चकारेति चतुर्मुखपरत्वेनापि व्याख्यातं भवति । तत्रात्र स एष इति पदेन चतुर्मुखग्रहणेऽप्रकृतपरामर्शत्वरूपदोषः परिहृतो भवति । ननु यद्यत्र पुरुषपदेन विरिंचोऽपि गृह्येत तर्हि सहस्रोर्वंघ्रिबाह्वक्षिरित्याद्युक्तं सहस्रोर्वंघ्रित्वादिकमपि विरिंचस्य स्यात् । ततश्चैतत्समानार्थकसहस्रशीर्षापुरुष इत्यादि पुरुषसूक्तप्रतिपाद्यत्वं च तस्य स्यात् । अत इदं व्याख्यानमयुक्तमिति चन्न । यथाहि

पौरुष सूक्तं विष्णोरेवाभिधायकमित्यादिनिरवकाशबाधकप्रमाणसद्भावेन विरिंचस्य पुरुषसूक्ताप्रतिपाद्यत्वेऽपि ब्रह्मांडविग्रहस्या- स्यामुख्यसहस्रोर्वंघ्रित्वाद्यंगीकारे बाधकाभावात् । अतोऽत्र पुरुषपदेन विरिंचग्रहणं युक्तमिति ॥ ३५ ॥ यस्येहेति श्लोकार्थ इह मनीषिणो लोकान् यस्यावयवैः कल्पयंति अवयवारोपितान् जानंतीति लोकमिथ्यात्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणे नैव तत्तात्पर्यार्थमाह ॥ हरेरिति । इति विकल्पनं सविकल्पकज्ञानं । साक्षात्सत्यं मुख्यसत्यार्थविषयं । अतः हरः । अन्यस्मात् विरिंचात् । लोकाः सृष्टा इति विकल्पन तु व्यावहारिकं सत्यममुख्यसत्यार्थविषयमुच्यत इत्यर्थः । अनेन विरिंचस्य पूर्वोक्तम मुख्यसहस्रोर्वंघ्रित्वादिकं समापितं भवति ॥ ३६ ॥ पुरुषस्य मुखमिति श्लोके ब्राह्मणादेर्हरिमुखाद्यैक्यमुच्यत इति भ्रांति प्रमाणेनैव परिहरति ॥ ब्राह्मण इति । यथा श्रुतौ मुखाज्जातत्वहेतुत एव ब्राह्मणस्य मुखमित्यवदत्तद्वज्जीवस्य ब्रह्मजातत्वादेव जीवो ब्रह्मेति वाग्भवेदित्यर्थः ॥ ३७ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां पंचमोऽध्यायः ॥ २–५ ॥ ॥

॥ हरिः ॐ ॥ कर्णाविति श्लोकार्थे कर्णौ तीर्थानां परमायने इति गंगादितीर्थानां कर्णाश्रयत्वमुच्यत इति भ्रांतिनिरा साय तदनूद्य यथावद्व्याचष्टे ॥ तीर्थानामिति ॥ ३ ॥ रोमाणीति श्लोकार्थे यैस्तु यज्ञः संभृतस्तेषामुद्भिज्जजातीनां रोमाणि वाऽन्यानि वाऽऽयतनानीत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ याज्ञिका इति । अत्र लिंगगास्तु जरायुजा इत्यनेन भागवतस्थवाशब्दो रोमाणि वाऽन्यानि वेत्यव्यवस्थितविकल्पार्थको न भवति । किंतु विशब्दो नयने चार्थे वाऽव्ययं स्यात्समुच्चये । उपमायां विकल्पे च निश्चये च निगद्यत इति रत्नमालाभिधानादुक्तजरायुजाश्रयलिंगसमुच्चयार्थ इत्युक्तं भवति । अनेनोद्भिज्जजातीनां मध्य यैरुद्भिज्जजातीनां मध्ये यैरुद्भिज्जजातिभिर्यज्ञः संभृतस्तेषां याज्ञिकानां हरेः रोमाणि रोममूलानि आयतनानि । तदन्येषामुद्भिज्जानां रोमाणि रोमाग्राणि आयतनानि । वाशब्दाज्जरायुजा लिंगगा इति भागवतवाक्यं व्याख्यातं

भवति। अत्रैव श्लोके शिलादीनां पृथक् पृथक् केशादित्रयाश्रयत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ हरेरिति। अत्र प्रमाणवाक्ये भागवतस्यकेशाश्रयोरनुक्तत्वमस्य केशाश्रयत्वं ज्ञेयं ॥५॥ बाहव इति श्लोकार्धे हरबाहवा लोकपालाना मायश्च आश्रया न सदेति सदाऽऽश्रयत्वनिषेधार्थं मायश्च इति पदमिति भ्रांतिनिरासाय तत्कृत्यमाह ॥ ब्राह्मणेति। आदिपदेन शूद्रादयो ग्राह्याः। क्षेमकर्मपदबलात्माक्षान्ब्राह्मणादीन्वर्जयितुं ब्राह्मणादीनां हरिमुखबाह्वाश्रयत्वादिति भावः। अत्रैव श्लोके शरणस्येति पदस्य शरण गृहरक्षित्रोरित्यभिधानाद्गृहार्थत्वभ्रांतिनिरासाय प्रमाणेनैव तत्पदार्थमाह ॥ मोक्ष इति। अनेन शरणपदं मोक्षार्थकमित्युक्तं भवति। यन्मोक्षस्य हरिपदाश्रयत्वमुक्तं तत्र प्रमाणमाह ॥ भज इति। शरणस्य चेति सामान्योक्त्या द्रवादिसर्वमोक्षस्य हरिपादाश्रयत्वमुच्यत इति भ्रांतिर्भवति। तन्निरासाय प्रमाणेनैव मोक्षस्य हरिपादाश्रयत्वं विवेचयति ॥ स्वोत्पत्तीति। यथा वचः चंद्रमा मनसो जात इत्यादिवचनमनतिक्रम्य निर्दिष्टेष्वक्तेषु विष्णोः स्वोत्पत्त्यंगेषु देवाना मुक्तिर्विहिता। अन्येषां तु विष्णोः पादमूलतः। सप्तम्यर्थे तासिः। पादमूले मुक्तिर्विहितेत्यर्थः ॥ ६ ॥ धर्मस्येति श्लोके धर्मादीनां परस्य हरेरात्मा देहः परायणमिति धर्मादीनां हरिसर्वदेहाश्रयत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैवात्मपदार्थं दर्शयन्न केवलमात्माश्रयत्वं किंत्वात्मजन्यत्वं चेति तेनैव प्रमाणेन दर्शयति ॥ कुमारेति। अनेनात्रात्मपदं मध्यदेहार्थकमित्युक्तं। तत्राभिधानं पठति ॥ आत्मेतीति। तद्वात्रं त्वमस्य। केशश्मश्रुनखान्यस्येत्यादौ अस्येति भेदव्याप्तसंबंधार्थकपष्ठ्या हरेर्हरिदेहादिभ्यो भेदः प्रतीयते। स त्वेकमेवाद्वितीय मित्यादिश्रुत्या बाधित इत्यतः प्रमाणेनैव भेदप्रतीतिमन्यथापपादयति ॥ देहेति। कवलैश्वर्यादित्यत्र केवलपदेनैश्वर्यस्य निरवधिकत्वाचिंत्यत्वलक्षणसर्वोत्तमत्वमेव ग्राह्यं। न त्वन्ययोगव्यवच्छेदः। तथात्वे भेदप्रतिनिधिविशेषांगीकारो व्यर्थः स्यात्। अस्मिन्नर्थे पुरुषसूक्तमेव प्रमाणमिति दर्शनाय पुरुषसूक्तार्थानुवादकेष्वह भवान्भवश्चैवेत्यारभ्य सर्वं पुरुष एवेदमित्यंतेषु श्लोकेषु

विरिंचादिसर्वजगतो हर्यैक्यमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ सर्वमिति । हिशब्दस्तस्मादित्यर्थः । तुरवधारणे । भेदवदित्यनेन संबध्यते । यतोऽस्य ब्रह्मादिजगतः सत्तादि सदा तदधीनं हर्यधीनं भवत् । तस्माद्धेतोर्भेदवत्त्वेव जगत्सर्वं पुरुष एवेति हर्यभेदेन भण्यते श्रुतिपुराणादावित्यर्थः ॥ ११–१२ ॥ नेनेदमिति श्लोकार्धे वितस्ति हस्तैकदेशमाधिति छता तेनेदं विश्वमावृतमिति हस्तैकदेशाश्रयस्य हरेर्जगद्व्याप्तत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तदर्थमाह ॥ वितस्तीति । अनेन वितस्तिपदेन तत्परिमितहृदयं ग्राह्यमिति सूचितं ॥ १५ ॥ स्वधिष्ण्यमिति श्लोके हरेर्वैकुंठाद्दर्दुःस्वहेतुतापकत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ पश्यन्निति । अत्र तात्पर्यवाक्ये भागवतवाक्ये चैवमिति दार्ष्टांतिकार्थक शब्दबलाद्यथेति योज्यं । स्वधिष्ण्यमित्यनूद्य देहमिति व्याख्यातं । अंडांतरं अडस्य ब्रह्मांडस्य । आंतरं अंतर्विद्यमान वस्तु । अनेन प्रतपन् तपतीति पदं तप आलोचन इति धातोर्ज्ञानार्थकं । धिष्ण्यपदं देहार्थकं । बहिःपदं बहिष्ठविषयार्थकमित्युक्तं भवति ॥ १६ ॥ सोऽमृतस्येति श्लोके मनुष्या मानुषा मर्त्या मनुजा मानवा नरा इत्यभिधानान्मर्त्यं मनुष्यं अन्न ओदनभक्ष्यादिकं चात्यगादित्यर्थभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अव्यक्तमिति । अव्यक्तं अव्यक्तत्वाभिमानिनी श्रीः । तस्य मेऽन्नं मित्रं दक्षिणमिति श्रुत्यनुसारेणात्मनोऽन्नमित्युक्तं । आत्मनः परमात्मनः अन्नं परमात्मप्रतिपादकबृहतीसहस्राख्यान्नाभिमानिनी । मर्त्यशब्दार्थो महदादीति । यत् यस्मादतीतोऽतो विमोक्ष इत्यन्वयः । अनेन यद्यस्मात्कारणात्स हरिर्मर्त्यं विनाशी महदादिकं चान्नं हरिप्रतिपादकबृहतीसहस्राख्यान्नाभिमानिनी श्रियं चात्यगात । अतःकारणादभयस्यामृतस्य मोक्षस्येशानो विमोक्षद इति भागवतवाक्य व्याख्यातं भवति ॥ १७ ॥ पादोऽस्येति श्लोके पादशब्दस्य गमने हेतुचरणार्थत्वभ्रांतिस्तथाऽमृतादिशब्द त्रयस्य प्रसिद्धमोक्षार्थत्वभ्रांतिस्तथा भूतानाममृतादीनां चैकप्रकारेण हरिपादत्वमिति भ्रांतिश्च भवति । तन्निरासाय प्रमाणेनैव

तत्तात्पर्यार्थमाह ॥ स्वरूपांश इत्यादिना । इष्यत हरिरिति शेषः । अनंतासनेति तात्पर्यश्लोकार्थेनामृतादिपादत्रयस्यार्थ
उक्तो भवति । जीवानां हरिभिन्नांशत्वे हेतुः धर्माधर्मादि संयुता इति । वेदव्यासेन पादोऽस्य सर्वभूतानीति स्वोक्त भूतानां हरि
पादत्वे स्थितिविदो विदुरिति प्रमाणमुक्तं । तत्र स्थितिविद इत्यस्य पुंसः हरेरेव स्थानविद इत्यर्थभ्रांतिनिरासाय स्वयमपेक्षित
मध्याहृत्य तात्पर्यार्थमाह ॥ सर्वस्येति । सर्वस्य हरिभिन्नाभिन्नांशस्य यथावत्स्थितिविदः यथावत्स्थितां स्थिति विदंतीत्यर्थः ।
अनेनास्य पुंसः हरेः सर्वभूतानि पादः भिन्नांशः । तथाऽमृतं मोक्षमभयं च पादः स्वरूपांशस्थितिविदः सर्वभिन्नाभिन्नांशस्य यथा
वत्स्थितस्थितिज्ञानिनः । विदुर्जानंतीति भागवतवाक्यं व्याख्यातं भवति ॥ १८ ॥ एवममृतं क्षेममभयमित्यतं भागवतवाक्य
व्याख्यायेदानीं त्रिमूर्ध्नोऽधायि मूर्धस्वित्यस्य प्रकृतसंगत्यप्रतीतेः प्रमाणेनैव तां दर्शयंस्तद्व्याचष्टे ॥ त्रिमूर्धेति । द्युत्रयमित्य
स्यैव विवरणं ॥ अनंतासनेत्यादि । हरिस्त्रिमूर्धा सन् त्रिभिर्मूर्धाभिः । द्युत्रयं लोकत्रयविवक्षायां परतो लक्ष्ययोजनात् । सर्व
द्यौरिति विज्ञेय । ततस्ते दिवि संस्थिता इति छांदोग्यभाष्योदाहृतप्रमाणेन द्युनामकानंतासनवैकुंठपद्मनाभपुराणि धत्त । न केवलं
धत्ते किंतु बहुलक्षोच्छ्रितेष्वनंतासनादिष्वमृता हरिः । संविशति तु संविशति चेत्यर्थः । अननामृतं मोक्षमभयं तन्नामकहरिपुरत्रयं
त्रिमूर्धो हरिमूर्धसु अधायि स्थापितास्तास्मिन्हरिःसंविष्टश्चेति भागवतवाक्ययोजना सूचिता भवति। तस्मिन्नेव श्लोकार्धेऽप्रजानामपत्य
रहितानां ये आश्रयास्ते त्रयः पादा बहिरासन्नित्यत्यंतासंगतमुच्यत इत्यतः प्रमाणेनैव तत्संगतत्वेन व्याचष्टे ॥ अनंतासनेति ।
अनंतासनं च वैकुंठश्च नारायणपुरं श्वेतद्वीपश्चेत्येतानि विष्णोस्त्रीणि धामानि त्रिलोकाद्बहिरेव संति । तानि हि यस्मात् देवा एवा
भुवंति च तस्मात्तु इतरधामापेक्षया विशेषवंतीत्यर्थः। अप्रजानामित्यस्यार्थः। अदायदास्तु पुत्राणामिति । दायं द्रव्यभागं ददातीति
दायदा न दायदा इत्यर्थः ॥१९॥ अंतस्त्रिलोक्या इति श्लोकार्धे गृहमेधैर्बृहद्व्रतोऽपरः पादस्त्रिलोक्या अंतरस्तीति त्रिलोक्या अंतर्गृह-

॥ १५ ॥

स्थप्राप्यस्यैव पादस्यावस्थानमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ स एवेति। पद्यत इति पदं प्राप्यमित्यर्थः। ज्ञानिनामिति पदं यतीनां वनिनामित्यनेनापि सबध्यते। पदमिति तु सर्वत्र। अस्मिन्नेव श्लोकेऽव्यवहितपूर्वोक्तत्रैलोक्यांतःस्थ पादः। साशनानशने उभे सृती विष्वक् सर्वतो विचक्रमे व्याप्तोऽभूदिति त्रैलोक्यांतःस्थपादस्यैव साशनादिव्याप्तत्वमुच्यते इति भ्रांतिर्भवति। तथा यत् याऽविद्या च विद्या च तदुभयाश्रयः पुरुष इति हरेरज्ञानित्वमुच्यत इति भ्रांतिश्च भवति। तन्निरासाय साशनानशने इत्यस्यार्थप्रतीतिनिरासाय च प्रमाणेनैव तं श्लोकं व्याचष्टे ॥ त्रिपादित्यादिना। अत्र विष्वग्विचक्रम इत्यस्यार्थः ॥ सर्वप्राणिषु संस्थितेत्यादि। सृती साशनानशने उभे। यदविद्या च विद्या च पुरुषस्तूभयाश्रय इत्यस्यार्थः ॥ निरन्नेष्वित्यादि। अत्रैकश्चशब्दोऽन्योन्यसमुच्चये। द्वितीयश्चशब्दोऽनुक्तस्याविद्वत्स्वित्यस्य समुच्चयार्थः। अत्र विद्वत्सु त्रिदशेष्विति पदाभ्यां विद्याऽनशने पदे व्याख्याते। इतरेषु चेति पदाभ्यां साशनाविद्यापदे व्याख्याते। तेनाशनसहितं नाशनं मनुष्यकुलं। न विद्यतेऽशनं यस्य तत् अनशनं देवकुलं। साशनं चानशनं च साशनानशने। सरतो गच्छतः। संसारमोक्षाविति सती इति तत्पदविग्रहः सूचितः। तथाऽविद्याविद्याशब्दौ तद्वदुपलक्षकाविति सूचितं भवति। अनेन त्रिपाद्धरिर्विष्वक् सर्वत्र सर्वप्राणिषु विचक्रमे व्याप्तोऽभूत्। संस्थित इति यावत्। यत् येऽविद्या च विद्या चाविद्याविद्यावती। उभे सृती सरतो गच्छतः संसारमोक्षाविति सृती। साशनानशने साशनानशनत्वेन नरदेवौ यथोदिताविति प्रमाणान्मनुष्यदेवकुले। उभयाश्रयः तदुभयोराश्रयः। उभयोऽन्यत्रेति वार्तिकत्वाद्विवचनत्वाभावे समासादावुभयशब्दस्यैव साधुत्वात्। पुरुषा हरिः। तु विशेषण नियामकत्वेन तत्र सस्थित इति भागवतवाक्यं व्याख्यातं भवति। तस्माद्दंडादिति श्लोके तस्माद्दंडादिति यथास्थितान्वयभ्रांतिनिरासाय च विराट्पदस्य हर्यर्थभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ तस्मादिति। अनेन भागवते तस्मादित्यतः

परमंडमभूदिति शेषः पूरणीय इति सूचितं । सः चतुर्मुखः । तस्मात् विराण्णामकचतुर्मुखात् । अनेन हरिस्तद्द्रव्यं विराडाख्य- विरिंचं अत्यगात् अतिक्रम्य वर्तते तदधिको भवतीति भागवतवाक्यं व्याख्यातं भवति ॥ २०–२१ ॥ तस्मादंडादिति पूर्व श्लोके नारदं प्रति चतुर्मुखेन विराजोऽडाज्जनिमुक्त्वा । यदाऽस्य नाभ्यादिति श्लोकार्धेऽहमासमिति स्वस्य हरिनाभिपद्मादुत्पत्ति रुच्यते । तेनांडजातस्य पद्मजातत्वं नास्ति पद्मजातस्यांडजातत्वं नास्तीति विरुद्धधर्माधिकरणत्वेन तयोर्घटपटवदत्यंतभेदभ्रांति र्भवति ॥ तां प्रमाणेनैव परिहरति ॥ अंडाज्जातस्येति । एवमंडाज्जातपद्मजातयोरत्यंतभेदभ्रांति निराकृत्यदानीं पूर्वोत्तरार्धो- क्तमर्थं हेतुत्वेनानूद्य विश्वमत्यगादित्यस्य तात्पर्यार्थमाह ॥ यदोभयेति । सर्वपूर्वापरात् सर्वः पूर्वो यस्य स तथा । सर्वपूर्वश्चा सावपरश्च सर्वपूर्वापरस्तस्माज्जनात् अतिरिक्तः परमपुरुषावयवाश्रितयज्ञसंभारविषयज्ञानानंदादिगुणैरुद्रिक्तोऽधिकोऽभूदित्यर्थः ॥ २२ ॥ त्रिलोकस्थानगमिति तात्पर्यश्लोके न पुरुषावयवानृत तदाश्रयत्वं विना यज्ञसंभारान् यज्ञाश्च पशव इत्यादि यज्ञसंभारा- श्चाविंदन् न लब्धवान् । किंतु ते पुरुषावयवेष्वेवाश्रिता यज्ञादिसमर्पणांता यज्ञसंभाराः संतीति ज्ञातवान् । तेनैव ज्ञानादि- गुणेन सर्वादेरधिकश्चाभवं । एवंविधेन मया एतैः पुरुषावयवैर्जाताः संभाराः संभृता इति संभृतसंभारोऽहं तमेव त्रिलोकस्थान गमेव पुरुषं पूर्णषड्गुणं यज्ञं यज्ञनामकमीश्वरं हरिं तेनैव त्रिलोक्येनैव तान्हरिप्रतिमारूपान् त्रीन लोकान्पशून्कृत्वाऽयजमिति नाविदं यज्ञसंभारानित्यादि तमेव यज्ञपुरुषमित्यंतभागवतश्लोकसमुदायस्य तात्पर्यार्थ उक्तो भवति ॥ २३ ॥ देवतानुक्रम इति श्लोकार्ध सूत्रमित्यस्यानेकार्थत्वाद्विवक्षितमर्थमाह ॥ सूत्रमिति ॥ २६ ॥ ततस्ते भ्रातर इत्याद्युत्तरग्रंथे चतुर्मुखेन स्वकृतयज्ञस्य सर्वत्र प्रवृत्तिरुच्यते । तत्र ततस्तदनंतरं ते तव मे भ्रातरस्तं पुरुषमयजन् । ततस्तदनंतरकाले मनव ईजिर । अपरे ऋषयः पितरा विबुधादयः सर्वे विश्वं क्रतुभिरीजिर इत्यन्वयेनैव सर्वत्र यज्ञप्रवृत्तिसिद्धौ सत्यां नारायण भगवतीत्यादिप्रकृतानन्वितं किमित्युच्यत

इत्यतोऽस्यापेक्षिताध्याहारेण प्रकृतान्वयं दर्शयति ॥ यस्मादिति । अनेन तेषु यज्ञाश्च पशवः सवनस्पतयः कुशा इत्यादिना गन्धाद्यादिजगतो भगवदाश्रितत्वमुक्तं तत्र ततस्ते भ्रातर इमे इत्यादिनोक्तस्य सर्वेज्यत्वस्य हेतुत्वं नारायणे भगवतीत्यनेनोच्यत इत्युक्तं भवति ॥ २८ ॥ २९ ॥ गृहीतमायेति श्लोकार्धे स्वतोऽगुणे सर्गादौ गृहीतमायया कल्पिता उरुगुणा ज्ञानानंदादयो येनेति हरेः स्वतो निर्गुणत्वं सृष्ट्यादौ मिथ्याभूतज्ञानादिगुणवत्त्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ नित्यमिति । हरिणा सत्त्वाद्या गुणा मिथ्यामानाज्जीववन्न तु गृहीता जडवत्स्वरूपवन्न तु गृहीताः । किंतु स्वातंत्र्याद्धरिरेव नित्यं गृहीताः स्ववशीकृता इत्यर्थः । अनेन गृहीताः स्ववशीकृता मायाया उरुगुणाः सत्त्वादयो येन स तथा । तस्मिन्निति तत्पदं व्याख्यातं भवति ॥ ३० ॥ नान्यद्भगवत इति श्लोकार्धे सदसदात्मकं किंचिदपि भगवतोऽन्यद्भिन्नं न भाव्यं भवनीयमिति हरेः सदसदात्मकैक्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ सदिति व्यक्तमिति । अन्यदेव हि प्रमाणसिद्धमित्यर्थः । अत्र गम्यागम्यस्वरूपत्वादिसदसच्छब्दप्रवृत्तिनिमित्तकथनेन षद्लृ विशरणगत्यवसादनेष्वित्युक्तस्य गत्यर्थसदिधातोः कर्मण्यौणादिके क्विप्प्रत्यये सच्छब्दो निष्पन्न इति सूचितं ॥ ३२ ॥ यः स्वात्ममायेति श्लोके यो हरिः स्वयमेव स्वात्ममायया विभवं स्वरूपसामर्थ्यैश्वर्यं गतः प्राप्तस्तं हरिमहं न गतो नभस्वांश्च न गतोऽपरे तु कुत इति कैमुत्येन ब्रह्मवाय्वोरपरेभ्यः कश्चिद्विशेषो द्योतितः । तमहं नभस्वांश्च न गत इत्यनेन ब्रह्मवायुभ्यां हरेर्विशेषश्च द्योतितः । स क इति न ज्ञायते । अतस्तं विशेषं गत शब्दस्य प्राप्त्यर्थत्वभ्रांतिनिरासाय प्रमाणेनैव विवक्षितार्थप्रदर्शनेन स्पष्टयति ॥ सर्वज्ञावेति । अनेन गतो ज्ञातवानिति गतशब्दो ज्ञातृत्वार्थस्तथा ज्ञानाधिक्यरूपो विशेष इत्युक्तं भवति ॥ ३५ ॥ स एव आद्य इति श्लोके स एष आद्य आत्मा पुरुषो हरिरात्मनि मनस्यात्मना जीवेन सहात्मानं स्वं सृजति संयच्छति पाति चेति हरेः सृष्टिस्थितिविलया उच्यंत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव

तत्तात्पर्यमाह ॥ स्वयमेवेति । आत्मेत्यस्यार्थः ॥ स्वयमेवेति । आत्मानमित्यस्यार्थः ॥ स्वरूपाणीत्यादि । आत्मनीत्यस्यार्थः ॥ स्वात्मनीति । आत्मनेत्यस्यार्थः ॥ इच्छयेति । तैर्देवादीनित्यादिपदद्वयेन भागवते आत्मानमित्यस्य सृजतीत्यनेनैवान्वयो न तु संयच्छति पातीत्यनेनापि किं त्वसुरान्संयच्छति देवान्पातीति पृथक्पदाध्याहारेणान्वयः कर्तव्य इति सूचितं भवति । नन्वात्मानं सृजतीत्यस्य मत्स्यादिकान्सृष्टेत्यर्थ उक्तः । स नुपपन्नः । तथात्वे जीवादिवद्विनाशः स्यात् । न जायते म्रियत इत्यादिप्रमाणविरोधश्च स्यादित्यत आह ॥ तिरोहितमिति । चावधारणे प्रकाशयतीत्यनेन संबध्यते । अनेन मत्स्यादीनां सृष्टिर्नाम जीवापेक्षया तिरोहितानां प्रकाशनमेव न तु जीवादिवद्देहाद्युत्पत्तिः । अतो न कोऽपि दोष इत्युक्तं भवति ॥ ३८ ॥ विशुद्धं केवलमित्यादि श्लोकद्वये सत्यर्तशब्दयोः पौनरुक्त्यभ्रांतेर्विशुद्धसम्यगवास्थितशब्दयोरेकार्थत्वभ्रांतेः केवलशब्दस्यावधारणार्थत्वभ्रांतेश्च प्रत्यक्पदस्य दुर्गमार्थत्वाच्च प्रमाणेनैव तदर्थमाह ॥ ऋतमित्यादिना । ब्रह्मेशानस्य । तदात्मना । भावप्रधानो निर्देशः । ब्रह्मस्वरूपत्वेन । ऋतमित्युच्यत इति शेषः । साधुत्वतः साधुस्वरूपत्वात् । अदृश्यत्वात् परसंबंधेनापि ग्रहीतुमशक्यत्वादित्यर्थः । दोषोज्झितत्वतः । स्वरसभावेनेति शेषः । तादृशाभावादित्यनेन सर्वोत्तमत्वं केवलपदार्थ उक्तः । अतरवस्थितेरित्यनेन बिंबत्वं प्रत्यक्शब्दार्थ उक्तो भवति । वदंति मुनयः प्रशांतात्मन्द्रियाश्रया इत्यस्यार्थ एतं तादृशं तत्त्वं यो वेद स मुच्यत इति ॥ ३९–४० ॥ आद्योऽवतार इति श्लोकार्धे पुरुषः परः स्याद्याऽवतार इति पुरुषस्य पराद्यवतारत्वमुच्यते । तत्र परः कः पुरुषस्याद्यावतारत्वं कथमित्यतः प्रमाणेनैव परस्वरूपं पुरुषस्याद्यवतारत्वे निमित्तं च दर्शयंस्तेनैव प्रमाणेन पुरुषपदस्यामुख्यवृत्त्या विरिंचार्थत्वं च दर्शयति ॥ यः शेते प्रलय इत्यादिना । य उन्मुखकर्तृत्वेन शान्तनामा विष्णुस्तस्य सिसृक्षोर्द्वितीयरूपं भवति । तच्च द्वितीयरूपं पुरुष इत्याहुरित्यन्वयः । अनेन महाप्रलये शयाना यः स एव

परः । पुरुषस्य तदाद्यावतारत्वं तु मत्स्यादि । तदन्यावताराविर्भावापक्षया प्रथमाविर्भूतत्वेनैव निमित्तेनेत्युक्तं भवति । न केवल हरेराद्यावतारः पुरुष इति भण्यते किंतु सोऽपि हिरण्यगर्भोऽपि पुरुष इति भण्यत इत्यपिशब्दार्थः । एव साऽपीत्यत्रापि-शब्दार्थो ज्ञेयः । ततो हिरण्यगर्भः श्रद्धासंयोगात्स्वस्यैव पुत्रतां यात. महत्त्वमित्यन्वयः । ततः पुनर्जातमहत्त्वात् । एवं प्रमाणेन परस्वरूपं पुरुषस्य तदाद्यावतारत्वं पुरुषपदस्य हिरण्यगर्भार्थत्वं च प्रदर्श्येदानीं तदनुवादपूर्वकं कालः स्वभावः सदसन्मनश्चेत्यारभ्य तत्तत्परं रूपवदस्वरूपमित्यंतभागवतश्लोकेषु यत्कालस्वभावादिकं यच्च किंच लोके ऐश्वर्यादिमत्तत्सर्वं परं परब्रह्मैव । तद्ब्रह्म अस्वरूपं निराकारं रूपवत् मायाकल्पिताकारयुक्तमिति कालादीनां ब्रह्मैक्यं ब्रह्मणो निराकारत्वं चोच्यत इति भ्रांतिनिरासाय स्वयमेव तात्प यर्थमाह ॥ पुरुष इति । अरूपमपि हरेः अस्वरूपभूता अपि कालाद्याः प्रियत्वात् रूपवत् मत्स्यादिरूपेण तुल्यं ब्रवत इत्यर्थः । अनेन पुरुषः साक्षात्परस्य रूपं कालाद्यस्तु । हरिप्रियत्वधर्मेण हरिरूपतुल्या । न तु पुरुषवत्साक्षाद्धरिरूपभूता इत्युक्तं भवति । स्वोक्तार्थे प्रमाणमाह ॥ पुरुषाद्या इति । तत्प्रियत्वं प्रति तत्सन्निधियुतत्वस्य हेतुत्वार्थेऽपिशब्दः । आद्योऽवतार इति श्लोके कालः स्वभावः स्वस्य भावो धर्मः सत् विद्यमानं असत् अविद्यमान द्रव्य पृथिव्यादिनवकं विकारा घटादिः गुणः रूपरसादिरित्यर्थं भ्रांति निरासाय प्रमाणेनैव तत्पदार्थं दर्शयन् कालादीना हरिस्वरूपत्वव्यवहारे हेत्वंतरं च दर्शयाति ॥ काल इति । वस्तुस्वभावो वस्तुस्वरूप । असच्छब्दार्थः ॥ प्रकृतिरिरिति । द्रव्यशब्दार्थः ॥ पंचभूतानीति । गुणशब्दार्थः ॥ त्रिगुणा इति । अपिपद समुच्चये । एतत् कालादिकं यद्यपि हरेर्न स्वरूपं तथाऽप्येषु कालादिषु हरिः स्थित इति हेतोः कालादिकं हरेः स्वरूपवदिति भण्यत इत्यर्थः । प्रमाणेन व्याख्यातमपि सत्पदमनूद्य स्वयं व्याख्याय तत्र श्रुतिमपि प्रमाणमाह ॥ सत्प्राण इति । अस्मिन्नेव श्लोके विकारविशटस्वरा-पदानां सर्वथाऽव्याख्यातत्वात्प्रमाणेनैवानुवादपूर्वकमर्थ दर्शयन दार्ढ्यार्थं द्रव्यपदार्थं च तेनैव प्रमाणन दर्शयाति ॥ द्रव्य चेति ।

कालादयो रूपवदस्वरूपमपि प्रियत्वादित्यनेन कालादीनां विभूत्यात्मवदंतानां पदार्थानां हरिप्रियत्वेन हरिरूपसाम्यमुक्त्वा तत्र पुरुषाद्या हरेरूपमित्यादिप्रमाणमुक्त । तत्र कालादीना विभूत्यात्मवदंतानां हरिप्रियत्वं हरिरूपमाहत्यं चैकप्रकारमेवेति भ्रांतिर्भवति । तां प्रमाणेनैव परिहरति ॥ सर्वं त्विति ॥ ननु स्थाण्णुचरिष्णुपदाभ्यामेव भगवदादीना संग्रह सिद्ध सति यत्किंच लोके भगवदित्यादिना पुनः पृथक् भगवदादीनां संग्रहः किमर्थमित्यता वाऽऽह ॥ सर्वं त्विति । सर्वं कालादिक विष्णोः प्रियत्वाद्रूपवदेव भण्यते । नत्वेतत्स्वरूपमपि हरिस्वरूपमपि भण्यते । सर्वमध्येऽपि यद्विभूतिमत्तद्विष्णोरतिप्रियत्वादिगुणेन रूपवद्भण्यत इत्यर्थः । यत्किंचेति श्लोके महत्त्वादित्यस्य कांतिमदर्थत्वभ्रांतिनिरासाय तथा विभूतिर्भूतिरैश्वर्यमभिधाना श्रीमान्म तिमच्छब्दयोरेकार्थत्वेन यत्पौनरुक्त्यं तत्परिहाराय च प्रमाणेनैव तत्पदत्रयार्थमाह ॥ स्वत इति । अत्र विशेषप्राप्तिराक्तस्त्येनेन विशेषाणां भूतिः । भूः प्राप्ताविति धातास्ताच्छील्यादौ प्रत्ययः । प्राप्तौ सामर्थ्य विभूतिरिति विभूतिशब्दार्थ उक्तः । तथा लक्ष्मणा आह इत्यनेन चिन्हं लक्ष्म च लक्षणमित्यभिधानाल्लक्ष्मणा लक्षणानां ईः उन्नाह उत्कर्षः लक्ष्मीरिति श्रीशब्दपर्यायलक्ष्मीशब्दार्थ कथनेन श्रीशब्दार्थ उक्तो भवति । प्राधान्यत इति श्लोके ऋषयः प्राधान्यतो यान् लीलावतारान् आमनंतिताननुक्रमिष्य इति हरेरवतारेषु केषांचिदवताराणां प्राधान्योक्त्या केषांचिदप्राधान्यभ्रांतिर्भवति । तन्निरासाय प्रमाणेनैव तत्तात्पर्यमाह ॥ प्रधानत्वेनेति । यतो मत्स्यकूर्मादयो हरेरवताराः सर्वस्मात्प्रपंचात्प्रधानत्वेनैव श्रुतौ ख्यातास्ततः कारणादेते मत्स्यादयः स एव हरिरेवेति स्मृताः । ब्रह्माद्यास्तु यतो मायाविभूतयः स्मृता अतो हरेः स्वरूपं नैवेत्यर्थः । ब्रह्मादीनां मायाविभूतित्वं नाम किमित्यत आह ॥ स्वेच्छयेति । यस्माद्धि हरिरेषा ब्रह्मादीनां विशिष्टत्वं स्वेच्छयैव कुरुते तत्तस्मात्ते तथा मायाविभूतयः स्मृता इत्यर्थः । अनेन मायया हरीच्छया विभूतिः विशिष्टभवनं विशिष्टत्वं येषां त तथेति पदविग्रहः सूचिता भवति । अहं भव इति

श्लोके यज्ञपदेन यज्ञो विष्णुर्देवतेति श्रुतेर्विष्णुरुच्यत इति भ्रान्तिनिरासाय प्रमाणेनैव तदर्थमाह ॥ यज्ञशब्देनेति । रुद्रच्छिन्ना रुद्रेण च्छिन्नः दक्षयज्ञ छेदितो देवोऽपरो यज्ञनामा । स तु यज्ञाभिमानी अत्र यज्ञपदेन गृह्यत इत्यर्थः ॥ ४१—४५ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां षष्ठोऽध्यायः ॥ २–६ ॥ छ ॥

॥ हरिः ॐ ॥ जातो रुचेरिति श्लोकार्धे रुचः सकाशात्सुयज्ञः सुयज्ञनामा कश्चिन्नवो जात इति सुयज्ञपदं कस्यचिन्नवस्य वाचकमिति भ्रान्तिनिरासाय प्रमाणेनैव तदर्थमाह ॥ क्रियेति । यज्ञशत्वाद्यज्ञो यज्ञनामरुचिसुतः स्वयं साक्षाद्विष्णुरेव स्मृत इत्यर्थः । अत्रैव श्लोके स्वायंभुवमनुना हरिरिति नामानुसृत्य उक्त इत्यर्थभ्रान्तिनिरासाय शेषपूरणेन तद्वाक्यं स्वयं व्याचष्टे ॥ हरिरितीति । अनु अनुवचनेन वदनोक्तः स्तुत इत्यर्थः । अनेन स्वायंभुवेन मनुना हरिरिति ज्ञात्वाऽनूक्तः । ननु अनुवचनेनेशावास्यमित्यादिवेदेनोक्तः स्तुत इति भागवतवाक्यं व्याख्यातं भवति । अत्र तात्पर्यं ईशावास्यमित्यादिनेत्युक्त्या भागवतेऽनूक्त इत्यत्रानुशब्दोऽनुवचनार्थकोऽनुवचनशब्दो वेदार्थक इति सूचितं । तत्रानुवचनपदस्य वेदार्थकत्वेऽभिधानं पठति ॥ त्रयीति ॥ २ ॥ यत्पादपंकजेति श्लोकार्धेऽमर्यामित्यस्य न मर्या प्रधानामित्यप्राधान्यार्थत्वभ्रान्तिनिरासायानुवादपूर्वकं विवक्षितमर्थमाह ॥ अमर्यामिति । अनेन अ इति ब्रह्मेति श्रुत्याऽकारो विष्णुवाचक इत्युक्तं भवति ॥ ४ ॥ तप्तं तप इति श्लोके आदौ विविधलोकसिसृक्षया स मया तपस्तप्तं । तपतो म सकाशात्सनः सननामकोऽभूत्सनादन्योऽभूदित्यन्यथाप्रतीतिनिरासाय शेषपूरणेन किंचिद्योजयति ॥ स इति । सनात् सननामकात् । एवं स्वयं कानिचित्पदानि योजयित्वेदानीं भागवतस्थलस्थं च वाच्यभगवदवतारं प्रमाणेनैव दर्शयन्समग्रश्लोकं च स्पष्टं व्याचष्टे ॥ ब्रह्मण इत्यादिना । अत्र तत्त्वं । विष्णुरिति । तारणी

चतुर्मुखरुद्रौ । अनेन सुतपसः शोभनं तपो यस्य तस्य म मम तपस्तपनः सतः । सः त्रिण्णनाऽर्थं सना सननामकान्मम पुत्रान् । आदौ पूर्वमभूत् । यो विष्णुरात्मतत्त्वं जगाद । यस्मात्सनकादिभ्यो मुनिभ्य आत्मन आत्मनि सनाम आत्मतत्त्वं भगवानब्रवीदिति व्या-ख्यानं येन विष्णुना लोकहिताय रूपं स्वरूप प्रकाशितमिति भागवतवाक्यं व्याख्यातं भवति ॥ ५ ॥ धर्मस्य दक्षदुहितरि नारा-नारायणो मूलरूपी धर्मस्य दक्षदुहितरि स्वमूर्त्यां नर इत्यजनीति नरस्य साक्षान्नारायणावतारत्वभ्रांतिर्भवति । तथा नारायण पदस्य मूलरूपवाचकत्वभ्रांतिश्च भवति । तन्निरासाय प्रमाणेनैव तत्तात्पर्यार्थं दर्शयन् ग्रंथांतरस्थश्लोकस्यापि तेन प्रमाणेन तत्तात्पर्यार्थमाह ॥ नर इति । हरिः कृष्ण इति ग्रंथांतरस्थश्लोकतात्पर्यकथनं । अत्र चतुर्षु धर्मतनयेषु नरव्यतिरिक्तास्त्रयः हरिरेव साक्षाद्धरिरूपा एव । नरनामा त्वनंतः शेषात्मकः । तस्मिन्नर यस्मान्नरनामवान्विष्णुः स्वयं शेषेण निवसति । तस्माद्विष्णुधर्मस्य सकाशाच्चतुर्धा जात इतीरित इत्यर्थः ॥ ६ ॥ विद्धः सपत्न्युदितेति श्लोके गृणत स्तुवत तस्मै बलाय प्रसन्नो हरिर्ध्रुवगतिमदा दिति मूलरूपी हरिरुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अवतार इति । अन्येनाधिष्ठितं न भवतीत्यन्या नधिष्ठितं । अनेन गृणते वासुदेवद्वादशाक्षरमंत्रेण स्तुवते तस्मै ध्रुवाय प्रसन्नो वासुदेवद्वादशाक्षरप्रतिपाद्यवासुदेवो ध्रुवाय गतिं ध्रुव योग्यस्थानं प्रादादिति भागवतवाक्यं व्याख्यात भवति ॥ ८ ॥ यद्वेनमिति श्लोके यत् यदा वेनमुत्पथगतं ज्ञात्वा हरिर्द्विजप्रा-र्थितस्तदा हरिः पुत्रपदं वेनपुत्रोति नाम लेभ इति वेनपुत्रस्य पृथोः साक्षान्नारायणावतारत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ पृथुर्नामेति । पृथुनामा । ऋषिभिः । ऋषिभिर्याचिता भेजे नवमं पार्थिवं वपुरिति प्रथमस्कंधोक्तः । आर्थितो विष्णुः पृथुनामासन् । तत्र पृथौ प्रविष्ट इत्यन्वयः ॥ ९ ॥ नाभेरसावृषभ इति श्लोके कृपया यत्पारमहंस्यपदं स्थान मामनंति तस्मिन्स्थानेऽसौ हरिर्ऋषभनामा नाभेः सकाशादास उत्पन्नोऽभूदित्यन्यथाप्रतीतिनिरासाय कानिचित्पदानि सम्यग्याज

याति ॥ यद्रूपमिति । अनेन यद्रूपमिति शेषः । पारमहंस्य परमहंसमाप्यं पद्म स्थानमामनंति । असौ हरिर्नाभेः सकाशादृषभ नाम्ना आसीदिति वाक्ययोजना सूचिता भवति ॥ १० ॥ सत्रे ममास भगवान्हयशीर्ष एष इति हयग्रीवावतारस्य छंदोमयो मखमय इत्यादिना छंदोमयमखाद्यैक्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ छंदांसि चेति । हिशब्दो हरेः सर्वाश्रयत्वे प्रमाणप्रसिद्धिद्योतकः । अनेन छंद आदीनां मय आश्रयत्वेन प्रधान इति तत्पदार्थ उक्तो भवति ॥ ११ ॥ मत्स्यो युगांतेति श्लोकार्धे हरेर्मत्स्यावतारस्य क्षोणीमय इत्यनेन पृथिव्यैक्यमुच्यत इति भ्रांतिनिरासाय तत्तात्पर्यार्थमाह ॥ क्षोणीमयेति । क्षोणीमयो नावाश्रयत्वात्पृथिव्यात्मिका या नौस्तस्या हरिराश्रयः अतः क्षोणीमय इत्युच्यत इत्यर्थः । अनेन क्षोण्यामय आश्रयत्वेन प्रधान इति भागवतवाक्यं व्याख्यातं भवति ॥ १२ ॥ स्मृत्वा हरिरिति श्लोके हरिस्त गजेंद्र तस्मा नक्रमुखात्कृपयोज्जहारेति मूलरूपी हरिरुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्प्रतिपाद्यावतारमाह ॥ हरिर्हरिनि । ससज चेति चशब्दः । तापसनामेत्यनेन संबध्यते । तेन हरिनामकं तापसनामकं चेति रूपद्वयमुक्तं भवति । तथा भागवतस्थहरिपद तापसावतारा पलक्षकमिति सूचितं च । असौ विष्णुर्हरिनामा जातस्तापसनामा च जातः । तत्र हरिनामावतारे गजेंद्रं मोचयामास । तापसनामावतारे जगत् सृष्टः इत्यादि जगत्ससर्जेत्यन्वयार्थो हरिशब्दप्रवृत्तिनिमित्तं । तत्रापि जज्ञे भगवान्हरिण्या हरिमेधसः । हरिरित्याहृतो येन गजेंद्रो मोचितो ग्रहादित्यष्टमस्कंधश्लोकादेवावगंतव्यमिति भावेनात्र तपसीति तापसशब्दप्रवृत्तिनिमित्तमेवोक्तं । तपसि प्रियव्रतेन क्रिय माण जातत्वात्तापसनामेत्यर्थः । अत्र हरिनामावतारो गजेंद्रं मोचयामासेत्यनेन भगवान्विष्णुर्गजेंद्रस्तुतिं श्रुत्वा हरिरूपः सन् शरणार्थिनं रक्षकार्थिनं गजेंद्रं हस्ते प्रगृह्य तस्माद्विदारितनक्रवदनात्कृपयोज्जहारेत्यनेन भागवतवाक्यं व्याख्यातं भवति । तथा न केवलं विष्णुभिन्नस्वायंभुवादिमन्वंतर एव भगवान् जज्ञे । किंतु तत्रापि विश्वात्मकतापसमन्वन्तरेऽपि भगवान् विष्णुर्हरिण्यां हरिम

धसो हरिरित्याहूता हरिनामा जज्ञ इत्यष्टमस्कधश्लोकतात्पर्यार्थश्च घातिता भवति ॥ १६ ॥ नार्थो बलेरिति श्लोक शिवमुरुक्रमपादशौचमंभो धृतवतो बले राज्ञा यद्विबुधाधिपत्यं । अयमर्थो नति वामनपादप्रक्षालनोदकधारणस्य स्वर्गाधिपत्यरूपफलं निषिध्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ऐंद्रमिति । यस्माद्धरितापणाद्दानंदाद्रेकता भवत्तद्धरितापणं जगद्दातुर्बलेस्तु विशेषण फलं मुख्यं फलं भवति । ऐंद्रपदं तु नांतरीयं हरितापणन व्याप्त फल अमुख्यफलमित्यर्थः । प्रायण व्याप्यव्यापकयोर्व्यापकस्य बहुवृत्तित्वेन मुख्यत्वादिति भावः । अनेन बलिचक्रवर्तिना हरय जगद्दानस्य मुक्तावानंदोद्रेकहेतु हरितोषणमेव मुख्यं फलं । न त्विंद्रपदप्राप्तिर्मुख्यं फलमिति तच्छ्लोकतात्पर्यार्थ उक्ता भवति । अस्मिन्नेव श्लोके शीर्षमाणमित्यस्य शीर्ष्णो मानमित्यर्थभ्रांतिनिरासाय स्वयं सम्यगर्थमाह ॥ शीर्षेति । अनन मानं प्रमाणं मानं लिंगान्तता ग्रह इति विश्वप्रकाशाभिधानान्मानं ग्रहं सोमपात्रं हरये मनसाऽभिमेन इति भागवतवाक्यं व्याख्यातं भवति ॥ १८ ॥ तुभ्यं च नारदेति श्लोके हे नारद भगवान् तुभ्यं भागवतं ज्ञानं योगं चोवाचेति भगवान्मूलरूप्युच्यत इति भ्रांतिनिरासाय प्रमाणनवात्र प्रतिपाद्यावतारं दर्शयति ॥ ऐतरेय इति । स्वकां तनुं स्वरूपं यद्रूपं ॥ १९ ॥ चक्रं चेति श्लोकेऽप्यवतारो न प्रतीयत । मूलरूप्येव प्रतीयते । अतोऽप्रतीतिविप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थ दर्शयन्नवतारं च दर्शयति ॥ मन्वंतरेष्विति । यो भगवान् मन्वंतरेषु विद्यमानेषु चक्रवर्तिषु संस्थितः सन् दुष्टराजन्यनाशकः सन्नेतज्जगज्जुगोप तं राजराजेश्वरेत्याहुरिति यच्छब्दाभ्याहारेणान्वयः । अनेन राजराजेश्वरनामावतारोऽत्र प्रतिपाद्यत इत्युक्तं भवति ॥ २० ॥ कृत्स्नप्रसादेति श्लोकार्थे कलेश इत्यस्य कलाऽसावीशश्चेत्यर्थभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ प्राणादीनि । आदिपदेन षट्प्रश्नोक्तश्रद्धादिकं ग्राह्य । प्राणादिषोडशकलादेवानामीश इत्यर्थः ॥ २३ ॥ तस्मा अदादिति श्लोकार्थे सुहृन्मथितसुशोषमृष्ट्या सु-

शोभगहृद्यस्य रामस्य स तथा तस्य मथितरोषेण जातकोपेन सुशोषा अत्यंतशोषयुक्ता या दृष्टिस्तया तातप्य- मानानां मकरोरगनक्राणां चक्रं समूहो यस्मिन्नुदधौ स तथा । एवंविध उदधिस्तस्मै रामाय दूरे मार्गमदादि- त्यन्वयार्थभ्रांतिनिरासाय पदद्वयं सम्यग्व्याचष्टे ॥ दूरस्थेति । अनेन दूरे कैलासे रूपांतरेण स्थिता सुहृत्सीताख्या सुहृद्यस्येति तत्पदविग्रहः सूचितः । सप्तम्या अलुक् च सूचितो भवति । सुशोषशब्दस्याग्न्यर्थत्वमुक्तं । तत्राभिधानं पठति ॥ अग्निरिति । अनेन दूरे सुहृद्यस्य रामस्य स तथा तस्य मथित उत्पन्नश्चासौ रोषश्च स एव सुशोषोऽग्निस्तद्युक्तया दृष्टयेति भागवतवाक्यं व्याख्यातं भवति ॥ २४ ॥ सद्योऽसुभिरिति श्लोकार्धे विनेष्यतीत्यस्य विशेषेण नेष्यतीत्यर्थभ्रांतिनिरासायानुवादपूर्वकं विवक्षितमर्थमाह ॥ विनेष्यतीति । विप्रियमित्यादौ विशब्दस्याभावार्थत्वदर्शनात्तद्वदत्रापि विशब्दस्याभावार्थत्वं गृहीत्वा वि अभाव विनाशं नेष्यति एष्यतीति भागवतपदं व्याख्यातं । अत्रैवार्धे दारहर्तुरित्यस्य रावणार्थत्वभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ दारेति । अनेन दारान् सीताख्यान् हर्ता आहर्ता रावणं हत्वा स्वीकर्तेति तत्पदतात्पर्यार्थं उक्तो भवति । नन्वत्र धनुर्विस्फूर्जितेन रावणनाश उक्तः । सोऽनुपपन्नः । रामायणादौ रामशरेण रावणनाशस्योक्तत्वेन तद्विरुद्धत्वादित्यतः प्रमाणेनैव तत्तात्पर्यार्थं दर्शयन् स्वोक्तार्थं च द्रढयति ॥ धनुरिति । पूर्वमेव विनष्टोऽपि पुनस्तु विशेषेण विनेष्यतीत्यनेन रामायणाद्विरोधः परिहृतः ॥ २५ भूमेः सुरेत रेति श्लोके सितकृष्णकेशा जात इत्येकवचनेन सितकृष्णकेशात्मक एक एवावतार उच्यत इति भ्रांतिर्भवति । तन्निरासाय प्रमा- णेनैव तत्तात्पर्यार्थमाह ॥ राम इति । तत्र सितकृष्णकेशयोर्मध्ये एकः शुक्लकेशात्मको हरिः रामाभिधः । द्वितीयः कृष्णकेशात्मकः कृष्णाभिध इति शेषः । रामाभिधो हरिर्हि अनंतांशः शेषात्मको यो रामस्तस्मिन्स्थितः सन् जगद्रमयामास वै इत्यर्थः । अनेन शेषावतारमाविष्टरामरूपमनाविष्टकृष्णरूपं चेति रूपद्वयं हरेरत्रोच्यत इति तात्पर्यार्थं उक्तो भवति । अत्रैव श्लोके आत्ममहिमोपनिबन्धनानि

कर्माणि करिष्यतीति हरिकर्मणामेव हरिनिबंधनत्वमत्रोच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ विष्णोरिति । विष्णोः कर्माणीत्यन्वयः । परेषां । कर्मेति शेषः । तन्निबंधनं हरिनिमित्तकं ॥ २६ ॥ यद्रिंगतांतरेति श्लोकार्थे दिवस्पृशोर र्जुनयोरित्यर्जुनवृक्षयोर्गुशब्दवाच्यार्थकाव्यचिह्नतस्वर्गस्पृष्टत्वमच्युत त्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव गुशब्दार्थमाह ॥ सह स्रेति । सहस्रधनुषूर्ध्वं यावदन्ति तत्सर्वमपीत्यपिशब्दार्थः । तुरवधारणे । भण्यत इत्यनेन संबंधः । अस्मिन्नवार्थे इतरथेत्यस्य प्रकृतापयुक्तार्थाप्रतीतेस्तथा न भाव्यमित्यस्यान्मूलनमित्यनेनान्वयभ्रांतेश्च तद्वाक्यं स्वयं सम्यग्व्याचष्टे ॥ इतरथेति । न भाव्यं । कर्मणामिति शेषः ॥ २७ ॥ तत्कर्म दिव्येति श्लोकार्थे दिव्यमिवेत्यस्य स्वर्गे विद्यमानमिवेत्यर्थभ्रांतिनिरासाय सम्यगर्थमाह ॥दिव्यमिति । अनेन स्तुत्यर्थस्य दिव् धातोरिदं शब्दरूपमित्युक्तं भवति । नन्विदं व्याख्यानमयुक्तं । तथात्वे हरिकर्मणो वस्तुतोऽस्तुत्यत्वं स्यात् । तच्च को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः । प्रधान्वयस्य महतो महान्सत्यकर्मेत्यादिहरिकर्मस्तावकप्रमाण विरुद्धमित्यतः स्वोक्तार्थं स्वयमेव विवृणोति ॥ तदपेक्षयेति । हर्यपेक्षया । केवलं दावाग्नेर्व्रजरक्षणमेव हरेः स्तुत्यमिवेति न किंतु अन्यत् कंसहननादि कर्मापीति भावेनाह ॥ यत्तवेति । अनेन हरिकर्म हरेः स्तुत्यं न भवति अहो हर्यपेक्षयैवेवशब्दो न त्वन्यापेक्षयाऽतो न प्रमाणविरुद्धमित्युक्तं भवति ॥ २९ ॥ जल्प्या वृतमिति श्लोकार्थे जल्पितुं योग्या जल्प्या यःकश्चन शब्दस्तेना वृतं युक्तं गोकुलमिति गोकुलस्य घटादिशब्दावृतत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव जल्पिशब्दार्थमाह ॥ अन्यथेति । अनेन जल्प्या अन्यथाज्ञानजनकवाचा आवृतं तज्जन्याऽन्यथाज्ञानरूपावरणयुक्तमिति तत्पदं व्याख्यातं भवति । तस्मिन्नेवार्थे निशीत्यस्य रात्रावित्यर्थभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ यस्त्विति । सर्वात्मनाऽज्ञानं ॥ ३१ ॥ क्रीडन्वने निशीति श्लोकार्थे कलपदैरायतेन मूर्छितेन कलपदश्रवणेन विस्तृतमूर्छया युक्त इति हरेर्मूर्छायुक्तत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय कलपदा

यतेत्यस्य स्वयं विग्रह प्रदर्श्य मूर्छितेनैवेत्यस्य प्रमाणेनैवार्थमाह ॥ कलपदं चेति । मूर्छेनेति क्वचित्पाठः । अनेन कलानि मंजुलानि पदानि यस्मिन्गायने तत्तथा । तच्च तत् । आयत च कलपदायतं । कलपदायतं च तन्मूर्छितं च । सप्तस्वरसमाहारोपेतं च कलपदायतमूर्छितं । तेन गायनेनोद्दीपिता स्मराख्या रुक् रोगो यासां तास्तथा । तासामिति भागवतवाक्य व्याख्यात भवति।।३३।। ननु ये च प्रलंबखरदर्दुरकेश्यरिष्टेत्यारभ्य निलयं तदीयमित्यंत श्लोकयोः प्रलंबखरादयः सृंजयकैकयाद्याश्च सर्वेऽपि बलपार्थभीमव्याजाव्हयेन हरिणाऽदर्शनं नाशं इता गताः सतस्तदीयं हरिसबंधिनिलयं स्थान यांतीति प्रलंबखरादीनां कांभोजादीना च विष्णुलोकप्राप्तिरुच्यतं । तत्र कांभोजादीना तद्योग्यानां तल्लोकप्राप्तिर्युक्ता । न तु तदयोग्यानां प्रलबाद्यसुराणां । अतः कथमेतदित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ विद्वेषिण इति । अपिपदद्वयं परस्परसमुच्चये । यतस्म आरभ्याप्तुक्तेः कृष्णस्य सदनं भवत्यतो विद्वेष्यादित्रिविधजीवा हरेः सदनं यांति यास्यंतीति भागवतादौ व्यवहारो युक्तः । ननु यद्येव तर्हि भक्तानामेव विष्णुलोको नान्येषां । तेषामन्य लोक इति पुराणादावुक्तिः कथमित्यत आह ॥ व्यक्तमिति । तु विशेषेण । व्यक्तं व्यक्तहरिरूपाधिष्ठितं सदनं हि यस्मात् भक्तैर्गम्यते तस्मात्तेषां विष्णुलोकताऽन्येषां अव्यक्तहरिलोकाव्यक्तो हरिर्येषु लोकेषु ते व्यक्तहरयः । व्यक्तहरयश्च ते लोकाश्च व्यक्तहरिलोकाः ।,न विद्यते व्यक्तहरिलोका येषां ते तथा तेषां भावस्तत्वं तस्मात् । व्यक्तहरिरूपाधिष्ठितवैकुंठलोकराहित्यादन्यलोकतेत्यर्थः । अनेन विष्णुसदनप्राप्तानामपि द्वेष्यादीनां वैकुंठाद्यप्राप्तेस्तदन्यलोकस्यैव प्राप्तेर्न विष्णुलोकस्तदन्यलोक एवेति पुराणादौ व्यवहारो युक्त इत्युक्तं भवति ॥ ३४ ॥ यास्यंत्यदर्शनमिति श्लोकार्धे बलपार्थभीमा एव व्याजनिमित्तं यस्याव्हयस्य तत्तथा तादृशमाव्हयं यस्य हरेरिति हरिनाम्नो बलादिकारणत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ रामेति । अर्जुनादीनामित्यादिपदेनाश्वत्थामादिनामानि ग्राह्याणि । रमणं चाभयं च वर्णो धवलवर्णश्च । आदि-

पदेनाश्वस्वरूपेण स्थितत्वादिकं ग्राह्यं । व्याजादित्यस्यैवार्थः ॥ व्यवहारप्रवृत्त्यर्थं दुष्टानां मोहनाय चेति । अनेन बलपार्थ भीमेषु व्याजेन व्यवहारप्रवृत्त्यादिरूपव्याजेन विद्यमानान्येवाव्हयानि भीमादिनामानि यस्य हरेः स तथा । तेनेति तत्पदार्थ उक्तो भवति ॥ ३५ ॥ आविर्हित इति श्लोकार्थे स विष्णुरतुयुगं,सत्यवत्यामाविर्हित इति कृतादिचतुर्युगेषु व्यासावतार उच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ तृतीय इति । कृष्णो ज्ञानानंदात्मको विष्णुः । युग इति पदं प्रत्येकं तृतीय इत्यादिना संबध्यते । चशब्दः समुच्चये । एवशब्दोऽन्यमहायुगव्यावृत्त्यर्थः । अत्र सप्तम इत्यादिग्रहणेन भागवतस्थानुयुगशब्दः कृतादियुगवाचको न भवति । किंतु चतुर्युगात्मकमहायुगवाचक इत्युक्तं भवति । पूर्वेषु तृतीयादिचतुर्महायुगेषु व्यासाचार्यस्तु व्यासानां द्रौण्यादीनामाचार्य एव भविष्यति । न तु व्यासः । चरमे तु अष्टाविंशे महायुगे तु व्यासश्चाचार्यश्च भविष्यति । न त्वन्यव्यासनामाचार्य इत्यर्थः । कुत इत्यत आह ॥ विव्यासेति । यतश्चरमे तु चरममहायुग एव वेदान्विव्यास विभागेन विस्तृतांश्चकार । वेदसं मतं भारतं चक्रे । अतः स्वयमेव व्यासश्चाचार्यश्चेत्यर्थः । अनेनाष्टाविंशे महायुगे वेदादेर्व्यासकर्तृत्वाद्व्यासस्तृतीयादिषु तदभावान्न व्यासः किंतु व्यासाचार्य एवेति पूर्वोक्तमुपपादितं भवति । तथा व्यासशब्दप्रवृत्तिनिमित्तं च कथितं भवति ॥ ३६ ॥ सर्गे तु य इति श्लोके योऽहं ये च ऋषयो नवप्रजेशा ये च धर्मादयोऽधर्मादयो ये चासुराद्या इमाः सर्वाः पुरुशक्तिभाजो हरेर्मायाविभूतयोऽविद्याकल्पिता विभूतिरूपा इति ब्रह्मादीनां मिथ्याभूतभगवद्विभूतित्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ हरिच्छयेति । यद्यस्मात्कारणात्तेषां ब्रह्मादीनां मत्स्यादयस्तु स्वयं साक्षाद्धरेरेवेत्यर्थः । अनेन मायया हरीच्छया विभूतिरैश्वर्यं विविधभूतो हरिर्वा येषु ब्रह्मादिषु ते तथेति भागवतवाक्यं व्याख्यातं भवति ॥ ३९ ॥ नांतं विदामीति श्लोकार्धे अमी मुनय इत्यादेरन्वयादर्शनादसंगतत्वभ्रांतिर्भवति । ता श्लेषपूरणेन परिहरन् सतोंऽतस्याज्ञानमिति

भ्रांतिं च कारणप्रदर्शनेन परिहरति ॥ विदुरिति ॥ ४१ ॥ ते वै विदंतीति श्लोकार्धे देवमायातरणमुच्यत इति भ्रांतिनिरासाय शेषपूरणेनान्वयं दर्शयति ॥ देवमायामिति । अनेनैव ते वै विदंत्यतितरंति च देवमायां विदंत्यथातितरंति चेति देवमायाज्ञानेन देवमायां स्त्रीशूद्रहूणशबरा अपि पापजीवा इत्युत्तरश्लोकार्धं च योजितं भवति ॥ ४२ ॥ यद्यद्भुतेति श्लोकार्धेऽद्भुतक्रमपरायणं शीलं येषा ते तथा तेषां शिक्षा येषां ते तथेत्यर्थभ्रांतिनिरासाय तत्पदं सम्यग्व्याचष्टे ॥ तदिति । अनेनाद्भुतः क्रमः पराक्रमो यस्य हरेः स तथा । स एव परमयनं आश्रयो येषां ते तथा हरौ शीलं शिक्षा च येषां ते शीलशिक्षाः । अद्भुतक्रमपरायणाश्चेति शीलशिक्षाश्चेति तत्पदं व्याख्यातं भवति ॥ ४६ ॥ शश्वत्प्रशांतमिति श्लोकस्य परा मायाऽऽत्मतत्त्वं जीवाख्यं तत्त्वमेतीति जीवपरत्वभ्रांतिनिरासाय प्रमाणेनैव तत्पदानि हरौ निर्वक्ति ॥ अव्यक्तादीति । अव्यक्तादौ भ्रमरूपाहमानराहित्यादित्यर्थः । अनेन अत सातत्यगमन इति धातोः कर्तरि क्विपि सति सततं गच्छतीति अत् अव्यक्तादिकं न विद्यतेऽतिमानं अहंमानो यस्य सः आत्मा आत्मैव तत्त्वं आत्मतत्त्वमिति तत्पदव्युत्पत्तिः सूचिता । तथा निषेधार्थकाकारपूर्वात्मसप्तम्यंताच्छन्दोपपदात् माङ् मान इति धातोर्भावे औणादिक डन् प्रत्यये लुङभावे च आत्मेति शब्दरूपमिति सूचितं भवति । अशब्दश्चाप्रसिद्धत्वादित्यनेन यत्र हरिविषयशब्दा नास्ति साकल्येन हरिप्रतिपादको न भवतीति भागवतवाक्यं व्याख्यातं भवति ॥ ४७ ॥ स श्रेयसामपीति श्लोके भावस्वभावविहितस्य भावानां पृथिव्यादिपदार्थानां स्वभावेन विहितस्य कृतस्य सता विद्यमानस्य वस्तुनः प्रसिद्ध इत्यर्थभ्रांतिनिरासाय तत्पदजातं सम्यग्व्याचष्टे ॥ भावस्वभाव इति । तथा तेन भावस्वभावेन प्रसिद्धप्रकृष्टसिद्धेर्ज्ञानस्य विषयः । भावपदस्य भक्तिरर्थ उक्तस्तत्राभिधानं पठति ॥ भाव इति ॥ ४९ ॥ समासेनेति श्लोकार्धे यत् सत् असत् हरेरन्याद्भिन्नं नेति सदसदात्मकजगतो हर्यभिन्नत्वमुच्यते । तदयुक्तं । तथात्वेऽन्यस्मादिति हरेर्जगद्भिन्नत्वविशेषणोक्तिर्विरुध्येत । नाहि

यद्यस्माद्भिन्नं तत्तदभिन्नमिति युज्यत इत्यतः प्रमाणेनैवान्यत्वानन्यत्वोक्त्योस्तात्पर्यार्थमाह ॥ सत्तादिरिति । यद्यस्मात्कारणाद्विष्णोः सत्तादिर्हि स्वत एव नान्याधीनस्तस्मात्कारणात्स विष्णुः सर्वतोऽन्य इत्युच्यते । यद्यस्मात्कारणादन्यस्य सदादेर्जगतः सत्तादिरतो हरेरेव भवत्यतः कारणाद्भेदिनोऽपि परमेश्वराद्भेदयुक्तस्यापि सदादेर्जगतो नान्यत्व इत्यनन्यत्वमुच्यते । यदधीना यस्य सत्ता तत्तदित्येव भण्यत इति न्यायादित्यर्थः ॥ ५० ॥ नृजन्मनीति श्लोकद्वये किंशब्दस्य प्रत्युत्तराभावात्प्रश्नार्थकत्वाभावनाक्षेपार्थत्वमेव प्रतीयते । तदप्ययुक्तं । तथात्वे वर्णाश्रमाचारादीनां सर्वथा वैफल्यं स्यात् । तच्च प्रमाणबाधितमित्यतः प्रमाणेनैव किंशब्दस्य तात्पर्यार्थमाह ॥ आक्षिप्यत इति । चशब्दाववधारणे । यत्र वस्तुन्यल्पफलता भवेत् । एतद्वस्तु किमिति किमिति शब्देनाक्षिप्यते निराक्रियते । यस्य वस्तुन एव पुंस एवाल्पत्वं तद्वस्तु स पुमांश्चेति च नेति शब्देनैवोच्यते । आक्षिप्यत इत्यर्थः । अनेनात्राल्पफलत्वाभिप्रायेणैव किंशब्देनाक्षेपः क्रियते न तु सर्वथा फलाभावाभिप्रायेणेत्युक्तं भवति ॥ ५३ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां सप्तमोऽध्यायः ॥ २–७ ॥ छ ॥

॥ हरिः ॐ ॥ पुरुषावयवैरिति श्लोके पुरुषावयवानां लोकानां चान्योन्यकल्पितत्वमुच्यते । तदयुक्तं । अन्योन्याश्रयदुष्टत्वात् । हर्यवयवानां नित्यत्वेन लोककल्पितत्वस्य प्रमाणबाधितत्वाच्चेत्यतः सम्यक् तद्वाक्यं योजयति ॥ निजेति । सृष्टाः । लोका इति शेषः । अनेन पुरुषस्य निजावयवैः पूर्वकल्पिताः प्रथमं सृष्टाः सृष्टैस्तैर्लोकैरमुष्य हरेरवयवा बाह्यावयवाः कल्पिताः । ते सृष्टाः पातालादिलोका हरेर्बाह्यावयवत्वेन कल्पिता इति यावदिति भागवतवाक्यं योजितं भवति । तेन नान्योन्याश्रयता नापि प्रमाणबाध इत्युक्तं भवति ॥११॥ ननु यावान्कल्प इत्यादिना परीक्षिताऽनेके प्रश्नाः कृताः । तत्र यस्मिन्कर्मसमवाय इति श्लोकार्धे कृतौ यौ कर्मसमवायाधारतदुपग्राहकविषयप्रश्नौ तावनुपपन्नौ । भागवते तयोरुत्तराप्रतीतेरित्यतो भाग

वतस्तूचितमुत्तर स्वयमाह ॥ जीव इत्यादि । अनेन कस्मिन्नित्यस्योत्तरं ॥ जीव इति । केनेत्यस्योत्तरं ॥ परमेश्वरेणेति ॥ यद्वा ॥ यस्मिन्कर्मेति श्लोकार्धे यस्मिन्कस्मिन्कर्मसमवायो येन केनोपगृह्यत इति सामान्येनैव कर्मसमवायाधारस्तदुपग्राहकश्च पृच्छ्यत इति भ्रांतिनिरासाय शेषपूरणेन तद्वाक्यं योजयति ॥ जीव इत्यादिना । अनेन कस्मिन् जीवे कर्मसमवायः केनेश्वरेणोपगृह्यत इति विशेषप्रश्नार्थत्वेन भागवतवाक्यं व्याख्यातं भवति । एतत्प्रश्नपरिहारस्तु संसारिणि जीवेऽन्तर्यामिणेश्वरेणेति भागवत एव भविष्यति । गुणानामिति श्लोकार्धे गुणिनामाकाशादीनां परिमाणमित्यर्थभ्रांतिनिरासाय तद्वाक्य सम्यग्व्याकुर्वन् प्रत्युत्तरवाक्यं चोदाहरति ॥ गुणिनामिति । देवासुरेभ्यो मघवान्प्रधानो दक्षादयो ब्रह्मसुताश्च तेषामित्यादि पंचमस्कंधस्थं वाक्यं सामर्थ्यस्य परिमाणं तारतम्यं प्रतिपादयतीत्यर्थः ॥ १४ ॥ श्रेणीनामिति श्लोकार्धे श्रेणीपदस्य दुर्गमार्थत्वाद्विवक्षितार्थं दर्शयन्नध्याहृतक्रियान्वयं च दर्शयति ॥ श्रेणीनामिति । युद्धेष्वगरक्षकाणामित्यनेन श्रेणीपदं व्याख्यातं भवति। अनेन श्रेणीनां युद्धेष्वंगरक्षकाणां यादृशः कीदृशो धर्म उच्यत इति भागवतवाक्यं व्याख्यातं भवति ॥ १८ ॥ तत्त्वानामिति श्लोकार्धे हेतु लक्षणमित्यस्य हेतूनां धूमत्वादीनां लक्षणमित्यर्थभ्रांतिनिरासायानुग्रहार्थमाह ॥ हेत्विति ॥ १९ ॥ योगैश्वर्यैरिति श्लोकार्धे कुतो लिंगभंगप्रश्नोऽयुक्तः । प्रत्युत्तराप्रतीतिरित्यतः प्रत्युत्तरं स्थलद्वय दर्शयति ॥ योगत इति । लिंगभंगः स्थिर सुखं चासनमास्थित इत्यादिना योगतः पूर्वमुक्तः । पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया य इत्यादिना पश्चाच्चोच्यत इत्यर्थः । अत्रा चार्यैर्यत्तत्प्रश्नपरिहारस्थलप्रदर्शनं कृतं तन्मंदानुग्रहार्थमेवेति ज्ञातव्यं ॥ २० ॥ यथाऽऽत्मतंत्र इति श्लोके भगवान् आत्ममायया कथं क्रीडति कथं च तामात्ममायां विसृज्योदास्त इति क्रीडानिमित्तमायाया एव त्यागः प्रतीयत । तां प्रतीतिं प्रमाणेनैव निरा करोति ॥ द्वेधा वाचेति । आत्ममायया परमात्ममायया । तद्वशा हरिवशा । प्रसारयति विमोचयति । जीवमिति शेषः ।

विमुक्तस्थो हरिः । एनं मुक्तं । आत्मा आतता माता चत्यर्थः ॥ २३ ॥ अत्र प्रमाणमिति श्लोके हिशब्दद्वयं प्रसिद्ध्यर्थकमिति भ्रांतिनिरासाय हेत्वर्थं दर्शयंस्तत्साध्यं च दर्शयति ॥ यस्मादिति । अनेन हि यस्मात्पूर्वजैः कृतमपरेऽनुतिष्ठंति हि । तस्मात्पूर्वजः परमेष्ठी प्रमाणं तथा भवानपि प्रमाणमिति भागवतवाक्यं व्याख्यातं भवति ॥ २५ ॥ स उपामंत्रित इति श्लोके ब्रह्मरातो राज्ञा परीक्षिता उपामंत्रित आहेति परीक्षित्प्रश्नपरिहारकर्ता ब्रह्मरात उच्यते । तस्य शुकादन्यत्वे यदाह वैय्यासकिरात्मविद्याविशारदो नृपतिं साधुपृष्ट इत्याद्युपक्रमविरोधः स्यादतः स शुक एवेति वक्तव्यं । तस्य च तन्नाम कुत इत्यतः प्रमाणेनैव तन्नाम शुकेन निर्वक्ति ॥ बालोऽपीति । ब्रह्मणा चतुर्मुखेन मुनिभ्यो दत्त इत्यन्वयः । अनेन ब्रह्मणा रातो मुनिभ्यो गुरुत्वेन दत्तो ब्रह्मरातः । रा दान धातोरिति तत्पदार्थ उक्तो भवति ॥ २७ ॥ ब्रह्मणे इति श्लोकार्धे ब्रह्मकल्प इत्यस्य ब्रह्मणा कल्प्यते उत्पाद्यते जगद्यस्मिन्ब्रह्मदिवसे तथेति चतुर्मुखदिवसार्थत्वभ्रांतिनिरासाय प्रमाणेनैव तात्पर्यार्थमाह ॥ यत्रेति । अन्यो ब्रह्मा ब्रह्मांतस्तस्योत्पत्तिः । अनेन ब्रह्मा विरिंचः कल्प्यते उत्पद्यते यस्मिन्नादिसृष्टिकाले स तथेति तत्पदव्युत्पत्तिः सूचिता ॥ २८ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामष्टमोऽध्यायः ॥ २-८ ॥ छ ॥ ॥

॥ हरिः ॐ ॥ आत्ममायामित्यादि श्लोकेषु काचन कथैवाच्यत । न तु पूर्वं परीक्षित्कृतप्रश्नेषु मध्ये कस्यचित्प्रश्नस्योत्तरमुच्यते । अतः प्रकृतासंगताः श्लोका इत्याशंकानिरासायैषां श्लोकानां प्रश्नप्रत्युत्तरपरत्वं दर्शयन् परस्येति पदस्योत्तमार्थत्वप्रतीतिनिरासायानुवादपूर्वकं विवक्षितमर्थमाह ॥ परस्येति । उत्तरं हि प्रसिद्धमित्यर्थः । एवं श्लोकसंगतिमुक्त्वेदानीं आत्ममायामृत इत्यारभ्य त्यक्त्वोदास्ते तदोभयमित्यंतश्लोकानां जगन्मिथ्यात्वजीवेश्वराभेदप्रतिपादकत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अशरीरस्येति । अत्राशरीरस्य जीवस्येत्यादितात्पर्यश्लोकेनात्ममायामृते राजन्नित्यारभ्य न घटे

तार्थसंबंध इत्यंतभागवतवाक्य व्याख्यातं भवति ॥ १ ॥ **द्वितीया प्रकृतिरिति** तात्पर्यश्लोकार्धेन मायया बहुरूपयेति भागवत-वाक्यं व्याख्यात भवति । तथा सपातजा भाव इति तात्पर्यश्लोकार्धेन **रममाणो गुणेष्वस्या** इति भागवतश्लोकार्धं व्याख्यातं भवति । ममाहमिति बुद्धभागवतानुक्तं कार्यं स्वयं प्रमाणकार आह ॥ **देहात्परस्येति** । रजस्तमाभावेस्तत्कार्यपदार्थविना निद्रा-कामाद्यभावेन राजसतामसपदार्थाना निद्रावसानकारणत्वान्निद्रावासनादः स्वप्नकारणत्वाद्यथा स्वप्ना न जायते । निद्रा प्रसिद्धा । कामा वासना । आदि पदेनादृष्टं ग्राह्यं । तेषामभावेन तद्वत्तान्प्रकृतिगुणान्विना देहः क न कापि जायत इत्यर्थः । अनेन स्वप्न द्रष्टुरिवाजसेति भागवतवाक्यं व्याख्यातं भवति । द्वितीया प्रकृतिः प्राक्तत्यादिना व्याख्यातमपि मायया बहुरूपयेति भागवतवाक्यं प्रकारांतरेण व्याकुर्वन्नस्य वाक्यस्य बहुरूप इवाभातीत्यनेनान्वय च दर्शयन् बहुरूप इवत्यादिवाक्यमपि व्याकरोति ॥ **तस्मादिति** । मानुषादिरिव मानुषादिशरीररूपवत् ॥ २ ॥ **यदा स्वरूपमित्यादि** तात्पर्यश्लोकेन यर्हि चायं महित्वे स्वेत्यादि भागवतश्लोका व्याख्याता भवति । तत्र त्यक्त्वाभयमित्यस्यार्थः ॥ **कालप्रकृतिवर्जितमिति** । उदास्त इत्यस्यार्थः ॥ **मुक्त इति** ॥ ३ ॥ **आत्मतत्त्वेति** श्लोकस्य प्रकृत सगत्यप्रतीतस्ता दर्शयितुमपेक्षिता याहारण तात्पर्यार्थमाह ॥ **यत इति** । अनेन भगवानात्मतत्त्वविशुद्धयथ यदाह तयस्मात्कारणादृतं । ऋ गताविति धाताज्ञानसाधन । प्रमाणमिति यावत् । अतस्तदुक्त नारायणेनोक्त तत्पुराण त्वत्प्रश्नानामुत्तरत्वेन॰ वक्ष्यत इति शेषपूरणेन प्रकृतसगतत्वेन भागवतवाक्यं व्याख्यातं भवति ॥ ४ ॥ **अतप्यमेति** श्लोकार्धे अतप्यत तपोऽकरोदित्यनेनैव क्रियाप्रकृतकर्म भूततपसा लब्धत्वात्पुनः तपःशब्दो व्यर्थ इत्यतस्तदनूद्य व्याचष्ट ॥ **तप इति** । स्वोक्तार्थ प्रमाणमाह ॥ **तपस इति** । अभिद्धात् । इधि दीप्ताविति धाताः । अभितः समंतात् दीप्यमानात् । तपसः तपोनामकाद्ब्रह्मणः सत्य यथार्थ जड च ऋत

प्र० ७

ज्ञानात्मकं चेतनं चाजायत इत्यर्थः । अत्र श्लोके अखिलतापनमिति तपःशब्दप्रवृत्तिनिमित्तभूतं तपसा विशेषणमुक्तं । तस्या खिलस्याकर्मतापकत्वार्थभ्रांतिनिरासायापरमर्थमाह ॥ अखिलानि । तत् परब्रह्म । अनेन तप आलोचने इति धातोः अखिल लोकस्यालोचनं प्रकाशनमेव हरेः तपःशब्दप्रवृत्तिनिमित्तमित्युक्तं भवति । अनपेतत्वस्य सतश्चाऽभून्त्यिर्थभ्रांतिनिरासाय विव क्षितमर्थमाह ॥ तदिति । तद्ब्रह्म । तपसा समाहितः तपीयाश्वत्यन्वयभ्रांतिनिरासाय विवक्षितमन्वयं दर्शयन् तत्तात्पर्यार्थमाह तपनामिति । अत्रात्युत्तमन्यतिपदग्रहणेन तपीयानित्यत्रातिशयार्थकं असुन् प्रत्ययेनैव तपसामुत्तमत्वे सिद्धे पुनस्तपसामिति व्यर्थमिति कुचोद्यं निरस्तं भवति । स्वोक्तार्थे प्रमाणमाह ॥ महानिति । आदि इत्यादि वाक्यं । यत्र यत्र तु । वाक्ये किंचि दधिकं पदं वदन् उच्यते तत्र वाक्यऽर्थोऽधिकश्चाधिक एव ज्ञेयः । अनेन यत्र वाक्ये प्रमाणे सत्यधिकं पदं तत्रार्थाधिक्यमिति व्याप्तिरुक्ता भवति । विरिंचस्तपोऽतप्यतेत्यस्य यः स्वोक्तार्थस्तत्र प्रमाणमाह ॥ तपोरूपमिति ॥ ८ ॥ तस्मै लोकमिति श्लोकार्धे परं न यत्पदमित्यत्र यत्पदं यस्य पदं परं नेत्यन्यथाप्रतीति पदच्छेदेन परिहरति ॥ यदिति । अनेन यत् यतः । स्वलो कात्परं उत्तममन्यत्पदं नास्ति न स्वलोकं दर्शयामासेति भागवतवाक्यं योजितं भवति । कुतः स्वलोकात्परं नास्तीत्याशंकापरि हारकत्वेन तात्पर्यार्थमाह ॥ मायेति । मायेति पदं न वर्तते यत्रेति श्लोकोक्तरजआदीनामुपलक्षकं ॥ ९–१० ॥ प्रत्वस्थिता इति श्लोकार्धे प्रत्वस्थितायाः इत्यस्य पष्ठ्यंतकपदत्वभ्रांतिनिरासाय पदच्छेदपूर्वकं विग्रहं दर्शयन्नन्वयं दर्शयति ॥ प्रत्वेति । दोला प्रेंखा स्त्रियामित्यमरसिंहाभिधानात्प्रेंखशब्दो दोलावाची । दोला नामापभ्रष्टसंज्ञया तगानाटलु । अनेन या विभूतयः प्रेंखे दोलामास्थिता आश्रितास्ताभिर्विभूतिभिर्विविधरूपैः श्रीर्यत्रोरुक्रमपादयोः बहुधा मानं बहुमानं भक्तिं करोतीति भागवतवाक्यं व्याख्यातं भवति ॥ ददर्श तत्रेति श्लोकार्धे अखिलसात्वतामित्यस्याखिलयादवानामित्यर्थभ्रांतिनिरासाय प्रमाणेनैव तत्तात्प

र्यार्थमाह ॥ सत्त्वमिति। अनेन सत्त्वमेव सात्वं सात्वेन ततः सात्वतास्तेषां पतिमिति तत्पदं व्याख्यातं भवति॥१४॥ सुनंद नंदेति श्लोकार्धे लयादेकपद्मस्थितस्य विरिंचस्य सुनंदनंदादिपार्षदयुक्तहरिदर्शनमुच्यते। तदयुक्तं। तदानीं सुनंदादीनामनुत्पन्न त्वेनासत्त्वादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह॥ मुक्तैश्चेति। पूर्वैः पूर्वकल्पे विद्यमानैर्मुक्तैश्च मुक्तैरेव पार्षदैः सुनंदादिभिस्तथा ब्रह्माद्यैश्च संयुतं हरिमेव ब्रह्मा ददर्शेत्यर्थः ॥१५॥ अध्यर्हणीयेति श्लोकार्धे चतुःषोडशपंचशक्तिभिर्वृतमिति हरेश्चतुःसंख्याकाः षोडशसंख्याकाः पंचसंख्याकाश्च शक्तय उच्यंते। ताः का इति न ज्ञायते। अतस्ताः प्रमाणेनैव दर्शयति॥ इच्छाद्या इत्यादिना। अत्रेच्छाद्या इत्याद्यपदेन स्वाभाविकी ज्ञानबलक्रिया चेति श्रुत्युक्तज्ञानाद्यास्तिस्रो ग्राह्याः। मोचिकाद्या इत्याद्यपदेन मोचिका चैव सूक्ष्मा च तथा सूक्ष्मामृताऽपरा। ज्ञानामृताप्यायिनी च व्यापिनी व्योमरूपिणी। अनंताश्चैव सप्तोक्ता मोचिकाद्याश्च शक्तय इति वायुपुराणोक्ताः सूक्ष्माद्याः सप्त ग्राह्याः। अणिमाद्या इत्याद्यपदेन अणिमा महिमा मूर्ते लघिमा प्राप्तिरिंद्रियैः। प्राकाम्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता। गुणेष्वसंगो वशिता यत्कामस्तदवस्यतीत्युक्तादशरकंधोक्ता महिमाद्याः सप्त ग्राह्याः। वासुदेवाद्या इत्याद्यपदेन संकर्षणप्रद्युम्नानिरुद्धा ग्राह्याः। दामोदरः परोऽतिमो यषां ते तथा। अनेन केशवमारभ्य दामोदरांता द्वादश शक्तय उक्ताः। अंगानि कृद्धोल्कमहोल्कादीनि पंच प्रसिद्धानि। विमलाद्या इत्याद्यपदेनैव विमलादिनवव्यूहस्थप्रव्ह्यादिसंग्रहे सिद्धे सति यत्प्रव्ह्याद्या इति प्रव्ह्यादीनां पृथग्ग्रहणं कृतं तेन विमलादिपंचव्यूहः पृथक् प्रव्ह्यादिचतुर्व्यूहः पृथगिति द्योतितं भवति। अनेन चतुःषोडशपंचशक्तिभिः चतस्रश्च षोडश च पंच च चतुःषोडशपंच। ताश्च ताः शक्तयश्च ताभिर्युतमिच्छादिक्रियांताभिस्तथा प्रव्ह्या द्यनुग्रहांताभिरात्मादिज्ञानांताभिश्चतुःशक्तिभिर्वृतं। मोचिकादिप्राकाम्यांताभिस्तथा ताभिःषोडशशक्तिभिर्वृतं युक्तमिति भागवत वाक्यं व्याख्यातं भवति। वृतमिति भागवते वृत इति तात्पर्यं च हरेः शक्तियुक्तत्वोक्त्या हरेश्चतुरादिशक्तीनां च भेदभ्राति-

भवति। तन्निरासाय तात्पर्येऽपानि विमलाद्यास्त्विति भदमतिनिषिद्धविशेषार्थकस्तुशब्दः प्रयुक्तः। तेनात्यंताभिन्नशक्तिष्टतत्वं विशेषबलात्संभवतीत्युक्तं भवति ॥ १६ ॥ मनीषितानुभाव इति श्लोकार्धे अयं त्वं मनीषितानुभावः मनीषितो ज्ञातुमिष्टोऽनुभावः सामर्थ्यं यस्य तव तादृशोऽयं त्वं यत्परमं तपश्चकर्थ तेन तपसा मम लोकावलोकनं तव जातमित्यर्थभ्रांति मनीषितत्यतःपरं शेषपूरणेन परिहरति ॥ मनीषितमिति। मनीषितं अभिलषितं। ममेति शेषः। अनेन वाक्यमुपसृत्य यत्परमं तपस्त्वं चकर्थ तस्मात्तपसा मम लोकावलोकनं तव जातं यतोऽतोऽयं मम लोकावलोकनहेतुत्वरूपा मनीषितस्य तपसाऽनुभावः सामर्थ्यमिति भागवतवाक्यं व्याख्यातं भवति ॥२२॥ प्रत्यादिष्टमिति श्लोकार्धे कर्मविमोहिते कर्मणि यज्ञादिकर्मणि विमोहिते भ्रांत त्वयि इति चतुर्मुखस्य यज्ञादिविषयभ्रमत्वमन्यत इति भ्रांतिनिरासाय तत्पदमनूद्य सम्यग्व्याचष्ट ॥ कर्मेति। इदं कार्यं मया कर्तव्यमित्यजानाति ज्ञानरहितेत्यर्थः। तपो मे इति श्लोकार्धे तपो मे हृदयमिति तपसो हरिहृदयाख्यागैवयमुच्यत इति भ्रांतिनिरासाय हृदयपदमनूद्य व्याचष्ट ॥ हृदयमिति। हृदयपदस्य प्रियार्थत्वेऽभिधानं पठति ॥ प्रियमिति। एवं हृदयपदं व्याख्यायेदानीं सर्वश्लोकमप्रतीतिविप्रतीतिनिरासाय प्रमाणेनैव व्याचष्ट ॥ तपःप्रियमित्यादिना। तपसैवाप्यत हरिरित्यनेन अहं तपसः तपसा आप्यः प्राप्य इति आत्माहं तपस इति भागवतवाक्यं व्याख्यातं भवति। तथा आप्लृव्याप्ताविति धातोर्धातूनामनेकार्थत्वात्प्राप्त्यर्थात्कर्मणि मन्प्रत्यय निर्वचनात् पकारस्य तकार सत्यात्मेति रूपमिति सूचितं भवति। अत्र तपःशब्दस्य संतापार्थत्वभ्रांतिं निवारयन्नात्माहं तपस इत्यस्यार्थांतरं सूचयति ॥ ज्ञानमेवेति। ज्ञानमेव ज्ञानरूपं ब्रह्मैव। अनेनाहं तपस आत्मा स्वरूपमित्यर्थांतरमुक्तं भवति। तस्यार्थांतरस्य वीर्यं मे दुस्तरं तप इत्युक्तार्थं प्रति हेतुत्वं च दर्शयति ॥ ज्ञानरूप इति। अत इति शेषः। ज्ञानबल इत्यादिना भागवतपदस्थवीर्यपदं बलाद्युपलक्षकमिति द्योतितं भवति ॥ २३–२४ ॥ ज्ञानं परमगुह्यमिति

श्लोके मे विज्ञानसमन्वितं ज्ञानं गृहाणेति हरिविषये ज्ञानविज्ञाने उच्येते । तत्रेश्वरोऽयमिति ज्ञान ज्ञान । जगत्कर्तेश्वर इति ज्ञानं विज्ञानमिति ज्ञानविज्ञानपदार्थभ्रांतिनिरासाय प्रमाणेनैव तत्पदार्थमाह ॥ येन येनेति । येन येनाधिकारिणा यथा निहित स्वस्य स्वस्य निहितं हरिरूपं ज्ञात्वा मुक्तिरवाप्यते । तन्मुक्तिमाधन स्वस्वयोग्यज्ञानं विज्ञानमिति प्रोक्त । साधारणं सर्वाधिकारिसाधारणं ज्ञानं ज्ञानमिति स्मृतमित्यर्थः ॥ ३९ ॥ अहमेवासमिति श्लोकार्धे यत्परं विलक्षणं स्दसच्च हरेरन्यद्भिन्न नेति सर्वजगतो हर्यभिन्नत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव श्लोकार्धतात्पर्यमाह ॥ विष्णोरधीनमित्यादिना । यतः कारणात्सृष्टेः प्राक् तथा लयादनु अनतरं अस्य जगतः सत्त्वप्रवृत्त्यादिविशेषेण विष्णोरधीनमेव तस्मात्कारणात्स्थितिकाले कथंचिद्बुद्धिमाहितः प्रतीयमानमपि स्वातंत्र्यं नैव वस्तुतो नास्त्येवेति गम्यतां । एवं स्थिते स्वातन्त्र्याभावभ्रांतिविषयत्वं युक्त्योपपाद्येदानीं युक्त्यतरेणाप्युपपादयति ॥ जनिष्य इति । हि यस्मात्कारणादहं जनिष्येऽह लयिष्य इत्यभिसधिता जीवस्याभिप्रायेणेच्छया जननमरण न भवतः किंतु भगवदिच्छयैव भवतः। अतः कारणादेतज्जीवनमपि स्थितिरपि न जीवाभिसंधितं भवेत्कित्वीशाभिसधितमव ईशेच्छानियमितमव भवेत् । इदमुक्तं भवति । यथा जीवस्य जननमरण जीवेच्छया न भवतः किंतु जीवेच्छाभावेऽपीश्वरेच्छयैव भवतोऽतो न जीवस्य स्वातंत्र्य । तथा जीवनाऽपरपर्यायस्थितिरपि न जीवेच्छया भवति किंतु हरीच्छयवेति न तत्रापि स्वातन्त्र्यमिति । एवं जीवे स्वातंत्र्याभावमुपपाद्येदानीं तस्य प्रकृतोपयोगं दर्शयन्विरोधपरिहारायात्मैवेदमिति श्रुतितात्पर्यार्थ च दर्शयति ॥ अत इति । अतः स्वातन्त्र्याभावदीशतंत्रत्वमीशतत्रत्वादेवात्मैवेदमिति श्रुतिः प्रलयेऽस्य सर्वस्य जगतोऽभाव वदति । न तु स्वरूपेणाविद्यमानत्वादित्यर्थः । अत्र दृष्टांतमाह ॥ यथेति । नन्वेवं कुतः स्वरूपेणाविद्यमानत्वादेवाभावं वदतीति कि न स्यादित्यत आह ॥ विथंत इति । तदा

प्रलयकाले। आद्यहिशब्द उक्तार्थे प्रमाणद्योतकः। द्वितीयहिशब्दो बाधकतर्कस्यागममूलत्वद्योतकः। आदिपदेनो पादानं ग्राह्यं। पुनः सृष्टिः क्व न कापीत्यर्थः। अनेन यदि प्रलये जीवो न स्यात्तर्हि तदाश्रितं कर्म न स्यात्। यदि काल कर्मादिकं न स्यात्तर्हि तन्निमित्ता पुनः सृष्टिर्न स्यात्। अकारणकार्योत्पत्तिः स्यादिति बाधकतर्क उक्तो भवति। अत्रानिष्टत्वं तु प्रामाणिकपरित्यागादिरूपं द्रष्टव्यं। पश्चादहमिति श्लोकार्थे हे विरिंच पश्चादज्ञाननिवृत्त्यनंतरं त्वमेतज्जगच्चाहमेव मदतिरिक्तं नास्तीति जगन्मिथ्यात्वं हरर्विरिंचादभेदश्चोच्यत इति भ्रांतिनिरासाय तदनूद्य सम्यग्व्याचष्टे ॥ त्वमेतच्चेति। अनेन पूर्वार्धे स्थस्य परं नेत्यस्यावृत्तिरत्र सूचिता भवति। अनेनाग्रे सृष्टेः पूर्वं प्रलये योऽवशिष्यते सोऽहमस्मि। यतोऽतोऽग्रेऽहमेव परं स्वतंत्र आसं। पश्चाच्च प्रलयानंतरमपि। सृष्टिस्थितिकालयोरिति यावत्। अहमेव स्वतंत्र आसं। मत्तोऽन्यत् यत् सदसत् एतत्सदस दुपलक्षितमचेतनं जगत्। त्वं च त्वदुपलक्षितचेतनजगच्च परं स्वतंत्रं नासीदिति भागवतश्लोकार्थ उक्तो भवति ॥ ३३ ॥ ऋतेऽर्थं यदिति श्लोके यत् अर्थं यथावस्थितविषयं ऋते प्रतीयेत यच्चात्मनि परब्रह्मणि न प्रतीयेत। तत् तादृशमज्ञानमेवात्मनो मायां विद्यादिति हरेरज्ञानत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तं सम्यक् प्रमाणेन व्याकरिष्यन्नादौ पूर्वार्धे आत्मनि जीवे स्थितं यदर्थं मृते प्रतीयेत न प्रतीयेतेचेत्यर्थभ्रांतिनिरासाय शेषपूरणेन स्वयं तत्सम्यग्व्याचष्टे ॥ अर्थवादिवेति। अर्थमृत इत्यस्य तात्पर्यार्थः अर्थवादिवेति। किंचित्त्वे चोभयत्वे च संशये सदृशे तथा। इवशब्दः प्रयुज्यते न्यक्कारेऽपि च पंडितैरिति कर्मनिर्णयोदाहृताभिधाना दत्रेवशब्दः किंचित्त्वार्थकः। किंचित्त्वशब्दो धर्मधर्मिणोरभेदात्किंचिदित्यर्थः। अर्थवदिव किंचिदर्थवदित्यर्थः। न प्रतीयेत चात्मनीत्यस्यार्थः ॥ न च परमात्मनीति। अनेन प्रतीयेत चात्मनीत्यत्र चशब्दस्य तत्रान्वयः। आत्मपदं परमार्थकं। ततः परमार्थवदिति शेषः पूरणीय इति सूचितं भवति। एवमृतेर्थमित्यस्यार्थवादिवेति तात्पर्यार्थमुक्त्वेदानीं ऋते ज्ञानात्मके आत्मनी-

त्यन्वयभ्रांतिनिरासायार्थपदस्याभिधेयाद्यर्थत्वभ्रांतिनिरासाय चार्थपदमनूद्यार्थान्वयौ दर्शयाति ॥ अर्थमिति । अनेन ऋत इति पदं विनार्थकमिति सूचितं । ननु न प्रतीयेत चात्मनीति भागवतवाक्यं न च परमात्मन्यर्थवत्प्रतीयेत इति व्याख्यातं । तद् सत् । प्रयोजनयुक्तज्ञानकर्मादिवस्तुनः परमात्माधारत्वेन प्रतीयमानत्वादित्यस्तद्विद्यादात्मनो मायामित्यत्र मायाशब्दार्थं दर्शयन् स्ववाक्याभिप्रायं स्वयमेव दर्शयाति ॥ न हीति । जीवप्रकृतिभ्यामित्यनेन मायाशब्दो जीवप्रकृत्यर्थत्वेन व्याख्यातः । तत्राभिधान पठति ॥ मुख्यत इति । अस्मिन्नेव श्लोकार्धे यथाभास इत्यस्य दुर्गमार्थत्वात्प्रकृतोपयुक्तमर्थमाह ॥ यथा आभास इति । अनेनार्थं सुखादि बहुप्रयोजन ऋते विना प्रयोजनयुक्तं किंचिद्यत्प्रतीयत आत्मनि परमात्मनि न च प्रतीयेत परमात्मनः प्रयोजन हेतुर्न प्रतीयेत तत् आत्मनो माया आत्माधीनां माया विद्यात् । केयं मायेति चेत् । यथा आभासो यथा तमो यथार्थं आभासः प्रतिबिंबो जीवो यथार्थ तमःशब्दवाच्या प्रकृतिश्च माया । जीवप्रकृतिभ्यां हरेः सुखादिप्रयोजनं नास्त्यत आत्मनि प्रतीयमानमपि जीवादिकमात्मनि न प्रतीयेतेति भागवतवाक्यं व्याख्यातं भवति । इममेवार्थं प्रमाणेन प्रपचयति ॥ सर्वं पर इति । यतः कारणाद्धरेः सर्वेण फलं नास्ति ततः कारणात् परे हरौ स्थितमपि सर्वं नैव । तत्र हरौ स्थितमिति भण्यते । यतः कारणाद्धरे र्जीवेन जीवन नास्ति प्रकृतिर्बंधकृन्न भवति हि तस्मात्कारणाज्जीवो हरौ न स्थितः प्रकृतिरपि न स्थितेति भण्यते । कर्मणो हरिं प्रत्यफलदातृत्वात्कर्म च हरौ नेति भण्यते । अपरिणमनात् हरौ कालकृतपरिणामाभावात्कालश्च हरौ नेति भण्यत इत्यर्थः । इममेवार्थं दृष्टांतेनोपपादयति ॥ यथेति । तुशब्दो दार्ष्टांतिकवाक्ये जीवाद्यनुकर्षणार्थः । यथा सर्वशः छत्रधराद्या रथस्था अपि रथ प्रति स्वामित्वाभावान्नैव रथिन इति भण्यंते । एवं जीवाद्या हरिगता अपि हरिं प्रति जीवनादिप्रदत्वेन स्वामित्वाभावान्न हरिस्था इति भण्यंते इत्यर्थः ॥ ३४ ॥ ननु यथा महांतीति श्लोके महाभूतदृष्टांतेन हरेर्भूतस्थितत्वास्थितत्वे विरुद्धे कथमुच्येन

इत्यत उदाहृतप्रमाणशेषणैव तत्तात्पर्यार्थमाह ॥ यथा महांतीति । यथा महांति भूतानि आकाशादीनि व्याप्तिहेतुतः व्याप्तेः कारणात् शरीरेष्वंतस्तथा बहिश्च वर्तंते । एवं हरिश्च हरिरपि व्याप्तिहेतुतो भूतेष्वंतर्बहिश्च वर्तते । तस्माद्धरेर्भूतानामंतर्बहिश्च विद्यमानत्वात् । अंतरेव बहिरेव वाऽविद्यमानत्वाद्धरिस्तत्स्थो न तत्स्थश्चेत्युच्यते। अनेन यथा महांति भूतान्युच्चावचेषु भूतेषु शरीरेष्वंतर्बहिश्च प्रविष्टानि अंतरेव बहिरेव वा अप्रविष्टानि न तु प्रविष्टानि तथाऽहं तेषु भूतष्वतर्बहिश्च व्याप्य स्थितोऽस्मि । तेष्वंतरेव बहिरेव वा न स्थितोऽस्मीति भागवतवाक्यं व्याख्यातं भवति । एवं प्रकारभेदेन हरौ सर्वभूतस्थत्वतदभावयोरविरोध उक्तः । इदानीं न केवलं प्रकारभेदादेवाविरोधः किंत्वैश्वर्याच्चेत्याह ॥ ईश्वर इति । ईश्वरोऽचित्यैश्वर्यशक्तिमानित्यर्थः ॥ ३५ ॥ एतावदेवेति श्लोके सर्वत्र सर्वदेशे सर्वदा सर्वकाले यदन्वयव्यतिरेकाभ्यां युक्तं स्याद्विद्यमानमविद्यमानं स्यात् । एतावदेव एतादृशमेव जिज्ञास्यमिति जिज्ञास्यस्य विद्यमानत्वाविद्यमानत्वप्रकारेण जिज्ञासोच्यत इत्यन्यथाप्रतीतिनिरासायान्वयव्यतिरेकपदं सम्यग्व्याचष्टे ॥ अन्यभावेति । समासयुक्तमपि शक्तिमानिति पदं बुद्ध्या विविच्य काले देश इत्यनेनापि संबंधनीयं। तेन चशब्द उपपन्नो भवति । कालयुक्तो देशः कालदेशः। अन्यस्य जगतो भावाभावौ ताभ्यां युक्तः कालदेशः अन्यभावाभावकालदेशः तस्मिन् तद्विषय शक्तिमान् । तद्विद्यमानशक्तिमाश्च तयोर्देशकालयोर्विद्यमानाविद्यमानपदार्थसत्तोत्पत्त्यादिशक्तिर्माश्रित्यनेन प्रकारेणान्वयव्यतिरेकौ अन्यथाभावयुक्तकालदेशविषयशक्तिमत्त्वं । तथा तत्र कालादौ विद्यमानपदार्थसत्तादिविषयशक्तिमत्त्वं च व्यतिरेक इत्यन्वयव्यतिरेकपदार्थौ ज्ञाताविरयर्थः । अनेन यत् सर्वत्र सर्वदाऽन्वयव्यतिरेकाभ्या सर्वदेशकालविषयशक्तिमत्त्वसर्वदेशकालविद्यमानाविद्यमानपदार्थसत्तोत्पत्त्यादिविषयशक्तिमत्त्वरूपान्वयव्यतिरेकाभ्या युक्त स्यात् । तदेतावदेव विष्ण्वाख्यमेव वस्तु न त्वन्यदिति आत्मनः परमात्मनस्तत्त्वजिज्ञासुना पुरुषेण जिज्ञास्यमिति भागवतवाक्यं

व्याख्यातं भवति ॥ २६ ॥ अंतर्हितेंद्रियेति श्लोके सर्वभूतमय इत्यनेन चतुर्मुखस्य सर्वभूतस्वरूपत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ सर्वस्येति । सः चतुर्मुखः । अनेनात्र मयट् प्रधानार्थक इत्युक्तं भवति ॥ ३९ ॥ मायां विविदिषुरिति श्लोके विष्णोर्मायां विष्ण्वधीनां प्रकृतिं विविदिषुरित्यर्थभ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ मायामिति । विविदिषुः वेदितुमिच्छावान् । अत्रैव श्लोके मायेशस्येति पदस्य श्रीपतित्वरूपोऽर्थः सुप्रसिद्धत्वेन शिष्यैः स्वयमेव ज्ञातुं शक्य इति मत्वाऽपेक्षिताध्याहारेणार्थांतरमाह ॥ अन्येषामिति । मायापदस्य माहात्म्यमर्थ उक्तः । तत्र प्रमाणं दर्शयन् तेनैव प्रमाणेन मायाशब्दप्रवृत्तिनिमित्तं च दर्शयति ॥ मुख्यत इति । प्रधानत्वात् प्रधानत्वेन । अस्य मातृत्वादित्यनेन मेयत्व चेत्यनेनान्वयः । अत्र मुख्यत इत्यनेनान्येषां माहात्म्यममुख्यतो मायाशब्दोदितमिति द्योतितं भवति । चशब्दो प्रवृत्तिनिमित्तसमुच्चये । हि यस्मात्तस्यैव विष्णुमाहात्म्यस्यैव मेयत्वं च तस्मान्मेयत्वाच्च माहात्म्यं मायाशब्दोदितं भवेत् । अत्र मातृत्वान्मेयत्वं चेत्यनेन माङ् मान इति धातोः कर्तरि कर्मणि च औणादिके यत्प्रत्यये स्त्रीत्वविवक्षायां टापि च कृते मायेति रूपसिद्धिरिति सूचितं । तथा माति जानाति मीयत इति मायेति तत्पदव्युत्पत्तिश्च सूचिता भवति ॥ ४२ ॥ नारदः प्राहेति श्लोके नारदो व्यासायेदं भागवतं पुराणं प्राहेति वेदव्यासस्य नारदाद्भागवतश्रवणमुच्यते । तेन नारदज्ञानस्य वेदव्यासज्ञानादाधिक्यभ्रांतिर्भवति । तन्निरासायास्मिन्नेव श्लोकेऽमिततेजस इति व्यासस्य विशेषणमुक्तं । तत्तात्पर्यार्थं प्रमाणेनैवाह ॥ हरिरिति । अमिततैजस इत्यस्यार्थः ॥ सर्वज्ञ इति । हरिरपि यद्यपि सर्वज्ञस्तथाऽपि दैत्यानां मोहनायैषां नारदादीनां प्रसिद्धये कीर्त्यर्थमेव च नारदादिभ्यः शृणोतीत्यर्थः ॥ ४५ ॥ यद्धुताहमिति श्लोके वैराजपुरुषाच्चतुर्मुखादिति वैराजपदस्य चतुर्मुखत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ विराडिति । तद्गतः विराण्णामकचतुर्मुखगतः । एन परमात्मानं । चतुर्मुखे विराट् शब्दप्रवृत्तिनिमित्तमाह ॥ ईशत्वत इति ।

अनेन विशिष्टो राजा विराडिति पदविग्रहः सूचितः ॥ यद्वा ॥ हरौ विराट्पदं च निर्वक्ति ॥ ईशत्वत इति । अनेन विशेषेण स्वातंत्र्याख्यविशेषेण राजा विराट् विराडव वैराज इत्यर्थ उक्तो भवति ॥ ४६ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां नवमोऽध्यायः ॥ २—९ ॥ छ ॥

॥ हरिः ॐ ॥ अत्र सर्गो विसर्गश्चेति श्लोकोक्तौ सर्गविसर्गौ भूतमात्रेंद्रियेति श्लोके विव्रीयत । तत्र भूत मात्रेंद्रियधीजन्मनः सर्गत्वमुच्यते । तदसत् । अव्याकृतगुणक्षोभान्महतस्त्रिवृता महः । भूतसूक्ष्मेंद्रियार्थानां संभवः सर्ग उच्यत इत्यादिद्वादशस्कंधवाक्यविरुद्धत्वादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ महदादीति । महत्तत्त्वमादिर्यस्मिन्सर्गे सो महदादिः अंडं ब्रह्मांडपर्यंतमवसानं यस्मिन्सर्गे स तथा । महदादिश्चासावंडपर्यंतश्च महदाद्यंडपर्यंतो महदादीनामंडांतानां पदार्थाना य उत्पत्तिः सो सर्ग इति प्रोक्तः प्रोक्तेत्यर्थः । अंडपर्यंतमित्येतत्पदं क्रमण वर्धमानं । आमुक्तेरित्यादिवदंडातिरिक्तमहदाद्युत्पत्तिपरत्वेन व्याख्येयं । अन्यथाऽंडे ब्रह्मण इत्युत्तरवाक्यविरोधः स्यात् । तस्मिन्नेव श्लोके पौरुषः पुरुषदेहस्य सर्गो विसर्ग इति पुरुषदेह मात्रसर्गस्य विसर्गत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायोदाहृतप्रमाणशेषेणैव तत्तात्पर्यार्थमाह ॥ अंड इति । सप्तमी षष्ठ्यर्थे । अंडस्य ब्रह्मांडस्य । कारणीभूतादिति शेषः । ब्रह्मणः परब्रह्मणो यो तु विशेषेण पौरुषः पुरुषसंबंधी सर्गः । स च स एवानु सर्ग इति विसर्ग इति कथ्यत इत्यर्थः । ननु पुरुषसर्गस्य विसर्गत्वमयुक्तं । पुरुषानुगृहीतानामेतेषा वासनामयः विसर्गो यः समा हारो जीवो जीवश्चराचर इति द्वादशस्कंधवाक्ये एतेषामित्यनेनाव्याकृतगुणक्षोभादिति पूर्वश्लोकप्रकृताना महदादीनां समाहार रूपब्रह्मांडसर्गस्य विसर्गत्वोक्तेस्तद्विरोधादित्यतः पुरुषशब्दार्थमाह ॥ पंचेति । पचभूतपदं द्वादशस्कधोक्तमहदाद्युपलक्षकं । पंचभूतमहदादिसमूहेन जातः पदार्थः पुरुष इत्युच्यत इत्यन्वयः । अनेनात्र पुरुषशब्द एव द्वादशस्कन्धोक्तमहदाद्युपलक्षकसमूह

जातब्रह्मांडो भवत्यतो न विरोध इत्युक्तं भवति। ननु महदादिसमूहजातब्रह्माडस्यैकत्वन तत्सर्गस्याप्येकत्वेन कथं तस्य विविध सर्गत्वरूपविसर्गत्वमित्यत आह ॥ बहुत्वादिति। तत्र ब्रह्माडे भूतानां विद्यमानानां पदार्थाना बहुत्वाद्विविधत्वाद्ब्रह्माडस्यापि तावद्बहुत्वात्। एकजं। सप्तसु प्रथमेति वचनात् षष्ठ्यां प्रथमा। एकजस्य एकस्य महदादिसमूहजातब्रह्माडस्य ज जन्म। सर्ग इति यावत्। तस्य तत्त्वं विविधत्वमुपपन्नमित्यर्थः। अनेन समूहजातब्रह्माडस्यैकत्वेऽपि समूहसंबंधिना शरीरादिपदार्थानां बहुत्वेन तत्सर्गस्य बहुत्वात्तद्विवक्षया विविधसर्गरूपविसर्ग उक्त इत्युक्तं भवति। तथा षष्ठ्यर्तकशब्दोपपदाज्जन जनन इति धातार्भाव औणादिके डप्रत्यये एकजशब्दरूपसिद्धिरिति चोक्त भवति ॥ ३ ॥ निरोधोऽस्येति श्लोके शक्तिभिः सहस्यात्मनः परमात्मनो यच्छयन निरोध इत्यर्थभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अनुप्रविश्येति। परमं हरिं। स्वीयैः स्वीयाभिः इच्छाद्यैः इच्छाद्याभिः अप्रकाशितैः अप्रकाशिताभिः। अनेनात्मपदं जीवार्थकमित्युक्तं भवति। मुक्तिर्हित्वेत्युक्ता मुक्तिरत्युक्ता। पंकलिप्तशुक्तिकादिजडस्य पंकाद्यन्यथारूपत्यागेन शुक्तिकादिस्थितेरपि मुक्तित्वं स्यादित्यतस्तदर्थमाह ॥ विमुक्तिरिति। यत्रेति सप्तमी प्रथमार्थे। मोक्षिणां संसारान्मुक्तानां चेतनानां या स्वरूपेण व्यवस्थितिः सा विमुक्तिरित्यर्थः। अनेन भागवते चेत नस्येत्यध्याहारः सूचितः ॥ ६ ॥ आभासश्चेति श्लोके निरोध पदस्य नितरा रोधा निरोध इति निर्बंधार्थत्वभ्रांतिर्भवति। तत्त्रयमित्यस्य पूर्वप्रकृतार्थत्वभ्रांतिर्भवति। तन्निरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ सृष्टीति। यद्बलात् यत्र चेत्यनेन यत इत्यस्यार्थद्वयमुक्तं भवति। अनेन निरोधश्च तच्च पूर्वोक्तसृष्टिस्थित्याख्यद्वयं चेति त्रय तथाऽऽभासश्च प्रकाशश्च यतो हरः सामर्थ्यात् यत्र हरौ स्थिताः स परब्रह्माख्यो हरिराश्रय इति भागवतवाक्यं व्याख्यातं भवति। परमात्मशब्दार्थः ॥ वासुदेवेति ॥ ७ ॥ प्रकारांतरेणाश्रयलक्षण वक्तुमाध्यात्मिकोऽयमिति श्लोकः प्रवृत्तः। तत्र श्लोके यस्तत्रोभयविच्छेद इत्यस्य प्रकृतोपयुक्तार्थो

प्रतीतेः सम्यगर्थमाह ॥ आधिभौतिकेनेति । आधिभौतिकेन रूपेण आधिभौतिकस्थितहरिरूपेण चक्षुःप्रकाशयोः सम्यक्त्वपरिज्ञानं सम्यक्त्वेन परिज्ञानं भवतीत्यर्थः । सम्यक् परिज्ञानमिति क्वचित्पाठः । अनेन यो हरिस्तत्राधिभौतिकघटादिषु स्थित उभयविच्छेद उभयोः आध्यात्मिकाधिदैविकचक्षुःसूर्ययोर्विच्छेदः सम्यक् ज्ञानहेतुः स आधिभौतिकः स्मृतः । यत्सूर्यादिप्रकाशचक्षुषे सम्यग्ज्ञानं भवति तद्घटादिस्थहरिनिमित्तकमेवेति भागवतवाक्यं व्याख्यातं भवति । ननूभयविच्छेद इत्यत्रोभयाभ्यां विच्छेद इति वक्तव्यं । उभाभ्यां विच्छेद इति कथमुक्त इति चेन्न । उभयोन्यत्रेति वार्तिकज्ञापकेनास्योभयशब्दत्वात् । अत्र वीत्युपसर्गबलात् छिदि धातुर्ज्ञानार्थकत्वेन व्याख्यातः ॥ ८ ॥ एतदेकेति श्लोके यदा एतेषां आध्यात्मिकादीनां मध्ये एकतमस्याभावे एतन्नोपलभामहे । तत्र तदा यः त्रितयं वेदेति यदातत्रशब्दयोः कालार्थत्वभ्रांतिर्भवति । त्रितयशब्दस्याविवक्षितार्थप्रतीतिश्च भवति । तदुभयनिरासाय तद्वाक्यं सम्यग्व्याचष्टे ॥ सुप्तावपीति । सर्वमित्यनेन त्रितयमित्यस्याध्यात्मिकादित्रयमित्यर्थ उक्तो भवति । सुप्तावित्यनेन यदातत्रशब्दौ सुप्त्यर्थकावित्युक्तं भवति । पर इत्यनेनात्मा स्वामी पर उत्तम इति आत्मपदं व्याख्यातं भवति । स्वोक्तार्थे प्रमाणमाह ॥ स्वप्नेति । शारीरं जीवं स्वप्नेनाभिप्रहत्य संबध्यासुप्तः परमात्मा सुप्तान् सुप्तौ विद्यमानान्सर्वपदार्थान् अभिचाकशीति वेत्तीत्यर्थः । अस्मिन्नेव श्लोके स्वाश्रयाश्रय इत्यस्य स्वस्य य आश्रयस्तस्याश्रय इत्यन्योन्याश्रयत्वभ्रांतिनिरासाय सम्यगर्थमाह ॥ सुष्ट्विति । अनेन सुष्ठु आश्रयाः स्वाश्रयाः तेषामाश्रय इति तत्पदविग्रहः सूचितः ॥ ९ ॥ पुरुषोऽडमिति श्लोकार्थे विनिर्गत इत्यस्य बहिर्गत इति बहिर्गमनार्थत्वभ्रांतिनिरासायानुवादपूर्वकं विवक्षितमर्थमाह ॥ विनिर्गत इति । अनेन गत्यर्थस्य धातोर्ज्ञानार्थत्वमुक्तं भवति । स्वकृतविनिर्गतपदव्याख्याने प्रमाणं वदंस्तेनैव प्रमाणेन पुरुषोऽडं विनिर्भिद्येत्यादिश्लोकद्वयस्याप्रतीतिविप्रतीतिनिरासाय तात्पर्यार्थमाह ॥ अंडं प्रविष्ट इति । यतः कारणात् अनाशान्नरः

नरनामा परो हरिः अपो सृजत् ततः कारणादापो नाराः प्रोक्ता इत्यर्थः ॥ १०–११ ॥ एको नानात्वमिति श्लोके देवो हरिः स्वयमेक एव सन्मायया‌ऽविद्यया नानात्वमधिदैवादि नानाजगद्रूपत्वमन्विच्छन्वीर्यं त्रिधा व्यसृजदिति हरेराविद्यकनानाजगदात्मकेच्छया सृष्टिरुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ तत्तादिति । नानात्वमित्यस्यार्थः ॥ तत्तात्रिया-मकत्वेन बहुत्वमिति । हिरण्मय इत्यस्यार्थः ॥ अंडमिति । मायेत्यस्यार्थः ॥ कामादिति । तत्स्थो‌ऽधिदैवादिस्थः सन् तत्तत्रियामकत्वेन बहुत्वं प्राप्तुं अंडं अंडरूप स्ववीर्यं अंतः ब्रह्मांडांतस्त्रिधा अधिदैवादि त्रिप्रकारैर्व्यधादित्यर्थः ॥ १३ ॥ पुनस्त त्पौरुषमित्याद्युत्तरभागवतश्लोकानामप्रतीतिविप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अंतः स्थितेति । अडे ब्रह्मांडांतः स्थितहरेः कामात् अंडे ब्रह्मतनोः ब्रह्मणश्चतुर्मुखस्य तनोः शरीरस्य जनिरभवत् । तत्र चतुर्मुखदेहे पुनस्तत्त्वात्मका देवाश्च प्रभोः सकाशाज्जाता इत्यर्थः अनेन त्रिधा‌ऽधिदैवतादित्रिप्रकारैर्भिन्नमपि तत्पौरुषं वीर्यं पुनर्यथा भिद्यत भिन्नमभवत्तथा वक्ष्ये तच्छृणु । अंतः ब्रह्मांडांतः आकाशे‌ऽवकाशे विचेष्टतः पुरुषस्य हरेः कामाद्वीर्येण च जाते पुरुषस्य चतुर्मुखस्य शरीरे ओजः सहोबलो जज्ञे । तत ओज आदिभ्यो महान्प्राणो‌ऽभूदित्यादिप्रकारेण तद्वीर्यमभिद्यतेत्युत्तरभागवतश्लोकसमुदाय उक्ततात्पर्यार्थो भवति ॥ १४ ॥ उत्सिसृक्षोरिति श्लोके चतुर्मुखस्य विष्ठाद्युत्सर्ग उच्यते । स तु मनुष्यादिवत्सदातन इति भ्रातिर्भवति । तन्निरासाय प्रमाणे नैव तत्तात्पर्यार्थमाह ॥ मलादिकमिति । ब्रह्मलोकाभिपत्तये मनुष्यादिजनानामभिपत्तये मलाद्युत्सर्गप्राप्त्यर्थं कामात्स्वेच्छयैव कदाचिदेव मलादिरूमात्मनः स्वदेहान्निर्ममे । ततः सर्वेषां मलाद्युत्सर्गो‌ऽभवादित्यर्थः । ननु ब्रह्मणा मलादिक कामात्कदाचिदेवेति कुतो मनुष्यादिवत्सदा किं न स्यादित्यत आह ॥ वशित्वादिति ॥ २७ ॥ एतद्भगवत इति श्लोके ब्रह्मांडस्य भगवत्स्थूलस्वरूपत्वमुच्यते । अतः परं सूक्ष्मतममित्युत्तरश्लोके जडप्रकृतेर्भगवत्सूक्ष्मस्वरूपत्वमुच्यते । तच्च प्रमाणबाधितमित्यतः प्रमा

णेनैव तत्तात्पर्यार्थं दर्शयति ॥ स्थूलमिति । तत्तंत्रत्वात् भगवधीनत्वात् ब्रह्मदहा भगवतः स्थूलं रूपमुदाहृतमित्यर्थः । अनन रूपशब्दः औपचारिक देहपर इत्युक्तं भवति । शंखचक्रगदाधरमित्यनेनाव्यक्तं अनभिव्यक्तं परं ब्रह्म भगवतः सूक्ष्मं रूपमिति भागवतवाक्यं व्याख्यात भवति ॥ अतः परमिति श्लोके निर्विशेषणमिति हरिरूपस्य विशेषणमुक्तं । तस्य सर्वधर्मराहित्यार्थत्वभ्रांतिनिरासाय तदनूद्य सम्यग्व्याचष्ट ॥ निर्विशेषणमिति । नितरामतिशय उत्कर्षो यस्मिंस्तत्तथेत्यर्थः । अनेन नितरां विशेषणं विशेषोऽतिशयो यस्मिन् अव्यक्ते परब्रह्मणि तत्तथेति तत्पदं व्याख्यातं भवति । विशेषेण पदस्यातिशयार्थत्वं सुप्रसिद्धमेवेति भावेन तत्र प्रयोगं दर्शयति ॥ अस्येति । काव्यस्य कविना व्यासेन प्रोक्तस्य विशेषणे । सुपां सुपो भवंतीति वचनात्सप्तमी द्वितीयार्थे । विशेषणं वेदाद्यपेक्षया बहुविचित्रार्थरूपातिशयं कवयोऽपि ब्रह्मादिव्यतिरिक्तज्ञानिनो न समर्थाः । ज्ञातुं वाति शेषः ॥ ३४ ॥ अमुनीति श्लोके विपश्चितो ज्ञानिनाऽमुनी मायासृष्टेऽनिर्वाच्याऽविद्याकल्पित भगवद्रूप न गृण्हंतीत्यन्यथाप्रतीति पदच्छेदेनाध्याहृतान्वयप्रदर्शनेन परिहरति ॥ मायेति । जगतीत्यनेन मायासृष्टे प्रकृतिसृष्टे जगति येऽविपश्चितस्ते न गृण्हंतीति भागवतवाक्ययोजनोक्ता भवति ॥ ३५ ॥ स वाच्यवाचकतयेति श्लोके हरिर्नामरूपक्रियावाच्यवाचकता धत्त इति पृथक् पृथङ्नामरूपक्रियाणां वाच्यत्वं वाचकत्वं चोच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ नामैवेति । नामेवेत्येवकारो नामातिरिक्तस्य वाचकत्वनिषेधार्थः । न तु नाम्नोऽवाच्यत्वनिषेधार्थः । न केवलं नियामयति किंतु धत्त चेति भागवतस्थधत्त इत्यनेन समुच्चयार्थश्चशब्दः । अस्मिन्नेव श्लोके स कर्माकर्मकेति हरेः स कर्मकत्वमकर्मकत्वं च परस्परविरुद्धमुच्यत इत्यतः प्रमाणेनैव तदर्थमाह ॥ कर्तृत्वादिति । तुरवधारणे । निष्फलत्वादित्यनेन संबध्यते । तेनाकर्मकपदस्य सर्वथा कर्मराहित्यार्थत्वं निवर्तयति ॥ ३६ ॥ प्रजापतीनित्यादि श्लोकत्रयस्थद्वितीयात पदानामन्वयाप्रतीतेः पूर्वार्धस्थक्रियापदानन्व-

तयाऽन्वयमाह ॥ प्रजापत्यादीनिति ॥ ३९–४० ॥ कुशलाकुशलेत्यादि सार्धश्लोके कुशलादित्रिविधकर्मणां फलरूपाः सत्त्वरजस्तमोहेतुकाः सुरनरनारकाख्यास्तिस्रो गतीरुक्त्वा पुनस्तास्वप्येकैक शाऽत्रिधा भिद्यंत इति त्रिविधत्वमुच्यते। तदनुपपन्न। अप्रामाणिकत्वादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ तामसास्तामसा इत्यादिना। प्रधाना मुख्याः। प्रह्लादादिव्यावृत्त्यर्थं देवशत्रव इत्युक्त। तेषां प्रधानदैत्याना। तथु असुरेषु ये अनाख्याता असुरास्ते सात्त्विकाः। तामससात्त्वि[illegible] इत्यर्थः। [illegible] चारिणो मानुषा एव राजसातामसाश्च राजसतामसा इत्यर्थः। एवमुत्तरत्रापि व्याख्येयं। म या म यममा[illegible]ः। पृथगना ख्याता असाधारणनाम्नाऽप्रसिद्धाः। अख्याता असाधारणनाम्ना प्रसिद्धाः। नागकुकलादिमरुदादयः। [illegible] ॥ ४१ ॥ यदैवेकतम इति श्लोक यदैव तामसातामसादिस्वभावेष्वेकतमो यः कश्चित्तामसतामसादिः [illegible] तामसराजसतामससात्त्विकाभ्यां उपहन्यत तदैव भगवान् ब्रह्म रूपधृक्। इदं जगत् धातेति त्रिविध तामस[illegible] तामसाख्या न्याभ्यां नाशकाले हरर्जगत्पोषकत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायोदाहृतप्रमाणशेषेणैव तत्तात्पर्यार्थमाह ॥ [illegible]ति। सात्त्विकेषु त्रिषु सात्त्विकसात्त्विकादित्रिष्वित्यर्थः। रजस्तमोभ्यां राजसराजसादितामसतामसादिभ्या[illegible]ः ॥ ४२ ॥ पुष्णातीति सार्धश्लोक हरिस्तिर्यङ्नरसुरात्मभिस्तिर्यगादिनामकजीवैर्विश्व कालाग्निरुद्रात्मा सन् निय[illegible]ति [illegible]यतीति [illegible] स्तिर्यगादिजीवद्वारा जगतः स्थितिकर्तृत्वं साक्षात्कालाग्निशिवस्वरूपेण संहारकर्तृत्व मूलरूपण स्रष्टृत्वमु[illegible]त्यन्यथाप्रतीतिनि[illegible] साय प्रमाणेनेव तत्तात्पर्यार्थमाह ॥ मत्स्यादीति ॥४३॥ इत्थंभावेनेति श्लोके भगवानित्थंभावेन [illegible] प्रयस्त्वित्थं[illegible] तं द्रष्टुं नार्हतीति ज्ञानिनां सृष्ट्यादिकर्तृत्वेन भगवज्ज्ञानायोग्यत्वमुच्यते। तत्तु प्रमाणविरुद्धमित्यतस्त[illegible] ॥ भगवत्[illegible] इति ॥ ४४ ॥ ननु न चास्य जन्मेति श्लोकार्धे जन्मकर्माणीति बहुवचनकर्मपदस्यानुविधीयत [illegible] [illegible]नक्रियापदान्वय

वक्तव्यः । अनुविधीयत इत्येकवचनक्रियापदान्वयः कथमित्यत आह ॥ जन्मेति । इतिशब्दो जन्मकर्माणीत्यतःपरमपि संबध्यते । जन्मकर्माणीति पदोक्तं विधीयत इति क्रियाविशेषणं विधानरूपक्रिया । जन्मकर्मार्थे विधानक्रियाया विशेषणमेव न तु कर्मेत्यर्थः । कर्तृत्वं प्रतिषेधार्थमिति तदुत्तरार्धे हि यस्मात् परस्य कर्तृत्वं मायया आरोपितं तत्तस्मात्प्रतिषेधार्थमनुविधीयते । स हि सर्वस्य कर्तेत्यादावनूद्य इति हरेः कर्तृत्वस्य मिथ्यात्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ प्रतिषेधायेति । तुशब्दोऽनुक्तेच्छाप्रयत्नात्मकत्वसमुच्चयार्थः । चिदात्मकं इच्छाप्रयत्नात्मकं च परमेशितुः कर्तृत्वं स्वेच्छयैव जीवानां हरिभक्तजीवानां बंधस्य प्रतिषेधाय संसारनिवृत्तये नित्यारूढं ज्ञातव्यमित्यर्थः । अनेन परस्य हरेर्जन्मकर्माणि जन्मसाधनकर्माणि यथा भवति तथाऽस्य हरेः कर्तृत्वं नानुविधीयते । जन्महेतुकर्मसिद्ध्यर्थं हरेः कर्तृत्वस्य विधानं नास्ति किंतु प्रतिषेधार्थं । सुजीवस्य संसारनिवृत्त्यर्थमेव । तद्धरेः कर्तृत्वं ज्ञानेच्छाप्रयत्नात्मकं कर्तृत्वं मायया स्वेच्छयैवारोपितं हरौ नित्यारूढं नित्यसंबंधमिति भागवतवाक्यं व्याख्यातं भवति । ननु शुक्तिकायां रजतमारोपितमित्यादावारोपितशब्दस्याध्यस्तत्वार्थकत्वदर्शनादत्रापि स एवार्थः स्यान्न त्वारोहार्थत्वं । तस्यैतच्छब्दार्थत्वं दर्शयितुमेतच्छब्दप्रकृतरूपं धातुं पठति ॥ रूपेति । रूपेति धातुः । उपरि भावे उपरि विद्यमानत्वेऽर्थे वर्तत इत्यर्थः । धातुमुक्त्वा आरोहार्थे आरोपितशब्दप्रयोगं च दर्शयति ॥ सुभद्रामिति । ननु ज्ञानादिरूपकर्तृत्वस्य हरौ नित्यारूढत्वं न संभवति । तथात्वे तस्य नित्यत्व स्यात् । न चैतत्संभवति । तन्नित्यत्वे प्रमाणाभावादित्यतस्तत्र प्रमाणमाह ॥ स्वाभाविकेति । अस्य हरेः स्वाभाविकी स्वस्वरूपभूतो भावो धर्मः स्वभावः । स्वभाव एव स्वाभाविकी । स्वार्थे तद्धितः । शक्तिमदापेक्षया स्त्रीलिंगत्वं । ज्ञानबलक्रिया ज्ञानबलात्मकक्रियाशक्तिरित्यर्थः ॥ ४५ ॥ अयं तु ब्रह्मणः कल्प इत्यत्र साधारण इत्यस्य सर्ववर्णानां साधारण इत्यर्थभ्रांतिनिरासायापेक्षितशेषं पूरयति ॥ अन्येति । अथ

मितीदंशब्देनाव्यवहितपूर्वोक्तब्रह्मांडांतः सर्गाधारब्रह्मकल्पः परामृश्यत इति भ्रांतिनिरासाय भगवत एव यत्र सर्गाः प्राकृतवैकृता इत्युक्तं । तद्याचष्टे ॥ यत्रेदेति । भागवतस्थतुशब्दार्थ एतेति । सर्वे सर्गा भवंतीति शेषः । साधारणशब्दस्य शेषातरं पूरयति ॥ अन्यब्रह्मेणि । अनेन यत्र तु यत्रैव प्राकृतवैकृताः सर्वे सर्गा भवंति सोऽयं ब्रह्मणः कल्प आदिकल्पः विधि र्विधीयते उत्पाद्यतेऽस्मिन् जगदिति विधिर्जगदुत्पत्तिहेतुः सविकल्पो मन्वंतरादिविविधकल्पनासहितः । अत एव साधारणः । अन्यकल्पानां अन्यब्रह्मकल्पानां च समानः सदृशो दैनंदिनकल्पेष्वन्यकल्पेषु च मन्वंतरादिविविधकल्पनासहितत्वस्य सद्भावेन धर्मेणास्य कल्पस्यान्यकल्पसादृश्यमस्तीति भागवतवाक्यं व्याख्यातं भवति ॥ ४६ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां दशमोऽध्यायः ॥ २—१० ॥ छ ॥

॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितश्रीमद्भागवततात्पर्यनिर्णयस्य टीकायां प्रबोधिन्यां छलारीनारायणाचार्य विरचितायां द्वितीयः स्कंधः समाप्तः ॥ २ ॥ छ ॥ श्रीकृष्णार्पणमस्तु ॥ छ ॥



॥ हरिः ॐ ॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ एवमेतत्पुरापृष्ट इति प्रथमश्लोके वनं प्रविष्टेन क्षत्त्रा मैत्रेय एवमेतत्पृष्ट इति शुकाचार्येण राजानं प्रत्युक्ते सति कदा वनं क्षत्ता प्रविवेशेति जिज्ञासाया यदा त्वय मन्त्रकृद्वो भगवानिति द्वितीयश्लोके धृतराष्ट्रबोधार्थमागतस्य कृष्णस्य पुनरुपप्लाव्यं पुनरागमनकाले विदुरो वनं प्रविष्ट इत्युच्यते। सोऽनुपपन्नः। संजयो विदुरश्चैनं सभार्यमनुजग्मतुः। अनुवव्राज तं कुंती वनाय कृतनिश्चयेत्यादिना दुर्योधननाशानन्तर धृतराष्ट्रेण सह वनप्रवेशप्रतिपादकभारततात्पर्यनिर्णयमूलप्रमाणेन विरुद्धत्वादित्यतः प्रमाणेन तत्तात्पर्यार्थमाह ॥ युद्धकाले त्विति। तुरव धारणे। गजपुर इत्यनेन संबध्यते। विदुरं युद्धकाले युद्धारम्भनिमित्तकृष्णागमनकाले तीर्थयात्रां गतः। अननात्र श्लोके विदुर स्योक्तो वनप्रवेशो युद्धकाले तीर्थयात्रारूप एव। न तु दुर्योधनादिनाशानंतरं धृतराष्ट्रेण सह वनप्रवेशरूपाऽतो न विरोध इत्युक्तं भवति। नन्विदमप्यनुपपन्नं। प्रथमस्कंधे तत्रासीनं कुरुपतिमित्यादिना युद्धकाले विदुरावस्थानोक्तेरित्यत आह ॥ अपीति। तीर्थयात्रां गत इत्यनुवर्तते। अपि यद्यपि सन् सज्जनो विदुरस्तीर्थयात्रां गतः। तथाऽपि पाण्डवाना व्यपेक्षया विशेषणापेक्षया प्रायो गजपुर एवास्त इत्यन्वयः। हितेच्छयेति क्वचित्पाठः। किंचोत्तरत्र भागवते स निर्गतगजाव्हयादित्यादिग्रंथेन विदुरस्य स्पष्टं तीर्थयात्रोच्यते। तेनापि पूर्वश्लोकस्यायमेवार्थो ज्ञातव्यः ॥ ३ ॥ ददाहेत्यत्र धृतराष्ट्रस्य दाहकर्तृत्वमुच्यते। ननु दुर्योधन कर्तृत्वार्थकभारतादिविरुद्धं। तथात्र विदुरयात्रागमनहेतुप्रतिपादकपदं न दृश्यत इत्यतो नात्र दाहकर्तृत्वमुच्यते किंतु दाहकारण रूपप्रयोजनत्वमुच्यते। तथा यदाशब्द एव धृतराष्ट्रस्य प्रयोजकत्वादेर्विदुरतीर्थयात्राहेतुपराऽतो न काप्यनुपपत्तिरित्यभिप्रेत्य तदाऽध्याहारेण यदाशब्दस्य हेत्वर्थकप्रकारं दर्शयन्नर्थमाह ॥ यदेति। यदा यस्मात्कारणात् धृतराष्ट्रो ददाह दाह प्रयोजकत्वं प्राप्तो यदा च केशाभिमर्श। तत्प्रयोजकत्वमिति यावत्। प्राप्तः। धृतराष्ट्र इति शेषः। तदा तस्मात्कारणात् विदुरस्तीर्थयात्रां

गत इति । अनेन प्रकारेण यदाशब्दो हेत्वर्थकः । यदातदाशब्दयोरित्यर्थमुक्तं । तत्राभिधानं पठति ॥ यदातदेतीति । दाहादिप्रयोजकत्वमुपलक्षणं । दायादानादिकत्वं च ग्राह्यं ॥ ६-७ ॥ तत्राथ शुश्रावेति श्लोके सुहृद्विनष्टिं सुहृदां कौरवाणां विनष्टिं शुश्रावेत्यन्यथाप्रतीतिनिरासाय तदनूद्य व्याचष्टे ॥ सुहृद्विनष्टिमिति । ननु विदुरतीर्थयात्राकाले यदूनां विनाशाभावा त्कथमेतदित्यत एष्यामित्यध्याहृतं । शापनिमित्तमेष्यत्कालीनविनाशमित्यर्थः । ननु प्रभास एव ज्ञातसुहृद्वधस्य विदुरस्य पुनरुद्धवं प्रति तद्भद्रप्रश्नो न युज्यते । सुहृद्वधश्रवणेनैव तद्भद्राभावस्य निश्चितत्वेन प्रश्नमूलसंदेहाभावात् । तथा विदुरं प्रत्युद्धवस्य सुहृद्वध कथनं च न युज्यते । ज्ञातज्ञापकत्वात् । अत आलिंग्य गाढं प्रणयेन भद्रमित्यादिप्रश्नोत्तररूपग्रंथो व्यर्थ इत्यतः प्रमाणेनैव तद भिप्रायमाह ॥ विदुरस्त्विति । तुरवधारणे । संक्षेपत इत्यनेन संबध्यते । शाप शापनिमित्तकैष्यत्सुहृद्वधं । अनेन पूर्वं संक्षेपतः सुहृद्वधः श्रुत उत्तरत्रोद्धवाद्विस्तराच्छ्रुतोऽतो सिद्धार्थत्वज्ञातज्ञापकत्वाभावादालिंग्यगाढमित्यादिप्रश्नोत्तररूपग्रंथस्य न वैय र्थ्यमित्युक्तं भवति । ननु तत्राथ शुश्राव सुहृद्विनष्टिमित्यत्रैष्यत्सुहृद्विनष्टिमिति कुतो व्याख्यायते । वर्तमानमिति कुतो न व्याख्या यते इत्यत आह ॥ भारतेति । अन्यथा एष्यामित्यव्याख्याने । एष्यामिति व्याख्याने भारतस्यैव प्रमाणत्वाच्चेति चार्थः ॥ २१ ॥ अन्यानि चेहेति श्लोकस्योत्तरार्धे प्रत्यंकमुख्यांकितमंदिराणीत्यत्र प्रत्यंकनामका ऋषयस्तेषु मुख्यः कश्चिदृषिस्तेनांकित मंदिराणीत्यन्यथाप्रतीतेर्विवक्षितार्थाप्रतीतेश्च तदनूद्य व्याचष्टे ॥ प्रत्यंकेति । प्रत्यकमुख्यो विष्णुरित्युक्तं । तत्कथमित्यतः प्रमाणे नैवप्रत्यंकशब्दार्थकथनपूर्वकं तं शब्दं निर्वक्ति ॥ ब्रह्मेति । अंको लक्षणं । प्रतिः प्रतिनिधौ वीप्सा लक्षणादौ प्रकीर्तितः । मात्रार्थे चाभिमुख्ये च प्रतिदानादिषु प्रतीत्यभिधानात् । प्रति विष्णुदत्तोऽङ्को लक्षणं विद्यतेऽस्मिन्निति प्रत्यंकवानित्यर्थः । क्वचित् पुराणादौ ॥ २३ ॥ पुरुषो स्वनाभ्येति श्लोके स्वनाभिपद्मेत्यस्य चतुर्मुखोत्पत्तिस्थानभूतहरिनाभिस्थपद्मार्थत्वप्रतीति

निरासाय प्रमाणेन विवक्षितमर्थमाह ॥ पद्म इति । अनेन पद्मा च पद्मश्च पद्मा । स्वनाभ्यो च तौ पद्मौ लक्ष्मीचतुर्मुखौ च तयोरनुवृत्तिरनुसरणं तेन युक्तौ । इह भूमौ कलाववतीर्णाविति स्वनाभ्यपद्मत्यादिभागवतवाक्यं व्याख्यातं भवति । अत्र लक्ष्म्या अनुसरणं स्वभावेनैव हरिसेवारूपं । चतुर्मुखस्य त्ववतारार्थं हरिप्रार्थनरूपं । तथा ब्रह्मणो नाभ्यत्वं नाम नाभिपद्मजत्वं । लक्ष्म्यास्तु नाभिपद्माभिमानित्वं ज्ञातव्यं । ननु साक्षान्नारायणरूपयोः शुक्लकृष्णयोर्नित्यकुशलत्वात्तज्जानता विदुरेण कुशला वासाते कच्चिदिति कृष्णादिकुशलप्रश्नः कथं कृत इत्यतः प्रमाणेनैव तदभिप्रायमाह ॥ लोकानामिति । अनेन कुशला लोकानां सुखरूपकुशलकर्तारावितिं कुशलपदं व्याख्यातं भवति । कथ पृच्छ्यते । कुशलमिति शेषः । न कथमपीत्यर्थः । कुतो नेत्य तस्तत्र हेतुमाह ॥ सततेति । नित्यानंदरूपत्वादित्यर्थः ॥ २६ ॥ कच्चित्कुरूणाविति श्लोके वरतर्पणेन वरैरुत्तमैरपेक्षिता र्थैस्तर्पणेन तृप्तिकरणेन वरान् अपेक्षितान् ददातीति वरतर्पणेत्यस्य वरान्ददातीत्यनेन गतार्थत्वप्रतीतिनिरासाय तदनूद्य व्याचष्टे ॥ वरतर्पणेनेति । अनेनात्र वरशब्दो भर्त्रर्थक इत्युक्तं भवति ॥ २७ ॥ कच्चित्सुखमिति श्लोके शतपत्रनेत्रः कृष्णो नृपा सनाधिं परिहृत्य यमभ्यषिचदिति कृष्णस्याधिप्राप्तिः प्रतीयते । परिहारस्य प्राप्तिपूर्वकत्वात् । आधिशब्दस्तु आधिस्तु मानस पीडेत्यभिधानान्मानसदुःखार्थकः । कृष्णस्य साक्षान्नारायणस्वरूपत्वेन पीडाप्राप्तिः प्रमाणबाधितत्यतोऽत्राधिशब्दो न मानसपीडार्थकः किंतु मनोर्थक एवेति भावेन तत्राभिधानं पठति ॥ आधिर्मन इति । अनेन शतपत्रनेत्रः कृष्णो नृपासने मम स्यादिति नृपासन आधिं मनो दूरात्परिहृत्य सर्वात्मना कृत्वेति भागवतवाक्यं व्याख्यातं भवति । नन्वाधिशब्दस्य मानसपीडार्थत्वं गृहीत्वोग्रसेनस्य मानसीं व्यथां परिहृत्येत्यर्थसंभवे मनोहृतं गृहीत्वा स्वमनःप्रवृत्त्येत्यर्थः कुतः क्रियत इति चेन्न । तथात्वे आधिर्मनोवस्थ चेत्यभिधानादाहरणं व्यर्थं स्यात् । किंचाभिषेकानंतरभाव्युग्रसेनव्यथापरिहारस्याभिषेकत्वात्पूर्वकालीनत्वासंभवात्परिहृत्येति पूर्वकालीनत्वार्थकप्राप्तय नाधिपरिहारस्या-

भिषेकात्पूर्वकालीनत्वस्योक्तत्वात्कृष्णमनःपरिहारस्य संभवान्नैवमर्थः कृत इति ॥ ९ ॥ किंवा कृताघेष्विति श्लोक भीमा धृताघेषु दुर्योधनादिष्वघं दुर्योधनादिवधनिमित्तकं स्वनिष्ठ पापं व्यमुंचत्किमिति दुर्योधनादिवधादिजन्यभीमनिष्ठपापमोक्षप्रश्नः कृत इत्य न्यथाप्रतीतिनिरासाय तदनूद्य तत्तात्पर्यार्थमाह ॥ अघमिति । पुनरपराधबुद्धिं पुनः पुनर्दुर्योधनादिकृतापराधविषया बुद्धि- मित्यर्थः । अनेनाघशब्दोऽसकृद्दुर्योधनादिकृतापराधवाचकस्तेन तद्विषया भीमस्थबुद्धिर्लक्ष्यत इत्युक्तं भवति ॥ ३७ ॥ अजस्य जन्मेति श्लोकेऽजस्य स्वरूपत उत्पत्तिरहितस्य हरेर्जन्म देहयोगादिरूपोत्पत्तिरुत्पथनाशनाय उन्मार्गदुष्टजनविनाशाय भवतीति हरेर्देहोत्पत्त्यादिरूपोत्पत्तिरुच्यते । सा तु न जायते म्रियते वा कदाचिदित्यादिनिरवकाशप्रमाणबाधितेत्यतः प्रमाणेनैव तत्ता त्पर्यार्थमाह ॥ न देहयोग इति । देहयोग इत्युपलक्षणं । पराधीनविशेषावाप्तिरपि ग्राह्या । अस्मिन्नर्थे कर्तुर्हरेः कर्माणि पुंसां ग्रहणाय ध्यानाय भवंतीति हरेः कर्म कर्तृत्वं च विरुद्धमुच्यत इत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ हरिः कर्तेति ॥ ४४ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां प्रथमोऽध्यायः ॥ ३–१ ॥ छ ॥

॥ हरिः ॐ ॥ दुर्भगो बतेति श्लोकेऽयं लोक इत्यनेन भूलोकमात्रस्याज्ञानमुच्यत इति भ्रांतिनिरासाय तत्तात्पर्यार्थ माह ॥ त्रिलोकस्येति । न केवलं हरिं न विदुरित्येवं किंतु वैपरीत्येन च हरिं विदुरिति भावेनेंगितज्ञाः पुरप्रौढा इति भाग वतश्लोकः प्रवृत्तः । तस्याप्रतीतिविप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ आनंदरूपमिति । आनंद इत्युपलक्षणं । ज्ञानादिकमपि ग्राह्यं । आनंदादिकमेव रूपमाकारो देहो यस्य स तथा तं हरिं दृष्ट्वाऽपि भौतिकमेव पृथिव्यादिभूतविकारदेहयुक्त मानुषमेव तु विशेषेण मन्यत इत्यर्थः । अत एव भगवत्पादाचार्यैर्भारततात्पर्यनिर्णये देवकीवसुदेवौ मेनिरे मानुषं हरिमित्युक्तं । कृष्णस्यानंदादिदेहत्वमेव कुत इत्यत उक्तं ॥ विष्णुरूपं चेति । हेतुगर्भविशेषणं । विष्णुरूपत्वादेवेत्यर्थः ॥ अत्र लोक

इत्युक्त्या भागवतश्लोके सात्वतां पदं त्रिलोकोपलक्षकमित्युक्तं भवति । तथा भौतिकमित्यनेन भूते भौतिकशरीरे आवसो यस्य स भूतावासः । भौतिकशरीरे वासवानिति यावत् । इति भागवतपदार्थ उक्तो भवति ॥ १३ ॥ मन्येऽसुरानिति श्लोके संयुगे संग्रामे तार्क्ष्यपुत्रस्य गरुडस्यासे स्थितं सुनाभायुधं चक्रयुधं हरिमचक्षतापश्यंस्तांस्त्र्यधीशे विष्णौ संरंभः कोपो द्वेषः स एव मार्गस्तेन निविष्टचित्तानप्यसुरान्भागवतान्मन्य इति भगवद्द्वेषयुक्तानप्यसुराणां मरणे चक्राद्यायुधयुक्तकृष्णदर्शनमात्रेण भगवद्भक्तत्व मुच्यते । तदयुक्तं । भगवद्द्वेषिणामसुराणामपि हरिभक्तत्वे मोक्षः स्यात् । स तु नासुराणा तथा मुक्तिरित्यादिप्रमाणबाधित इत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ असुरा अपीति । तेऽपीत्यपिरवधारणे । असुरा इत्यनेन संबध्यते । अत्र भक्तिपूर्व मवेक्षंते न द्विषतीत्यनेन येऽसुरास्तेऽपि भक्तिपूर्वं सुनाभायुधं हरिं संयुगेऽचक्षत तान्भागवतान्मन्ये । तथा ऋषिपुत्रा अपि सरंभ- मार्गाभिनिविष्टचित्ताः संतः संयुगे कृष्णमचक्षत तांस्त्र्यधीशे सरंभमार्गाभिनिविष्टचित्तानसुरान्मन्य इति भागवतश्लोकयोजना प्रद र्शिता । तथा भक्तिपूर्वमिति शेषपूरणं भागवते कर्तव्यमिति सूचितं भवति । ननु द्वेषिणां यदि तम एव तर्हि हरिद्वेषिणा हिरण्य कश्यप्वादीनां कथं मुक्तिः पुराणादावुक्तेत्यत आह ॥ जीवद्वयेति । यथा स्वसबधिनी स्वयोग्येति यावत् । सा गतिर्भवतीति शेषः । युताश्च स्युरिति क्वचित्पाठः । कंसपूतनिकाद्याश्चेत्यनेन तात्पर्यवाक्येन दृष्ट्वा भवाद्भिर्ननु राजसूये । अहो बकीय स्तन- कालकूटमिति भागवतश्लोकद्वयतात्पर्यार्थ उक्तो भवति । बधाभ्रात्रा बांधव बधुत्व । आदिपदन बंधुत्वादिकं ग्राह्य । गतिद्वय जयंति प्राप्नुवंतीति गतिद्वयाजिगीषवः । अत्र जि धातुः विश्वजित धनजित इत्यादाविव प्राप्त्यर्थकः । तथा सन् तितिक्षुरित्या दाविव स्वार्थे ज्ञातव्यो न त्विच्छाया । सज्जीवस्य सद्गतीच्छायामपि दुर्जनस्य दुर्गतीच्छाभावाज्जीवद्वयसमायोगादिति पूर्वतात्पर्य वाक्येनैव श्लोकद्वयतात्पर्यसिद्धौ कंसपूतनिकाद्याश्चेति पुनर्वचनं तज्जीवद्वयसमानयोगेन बधुत्वादिकं बंधुत्वादिना भक्त्यादिकं तेन

गतिद्वयमिति हिरण्यकादिभ्यः कंसादीनां विशेषसूचनार्थं । नन्वेवमर्थः कुतः कल्प्यते । प्रतीतार्थ एव किं न स्यादित्यत आह ॥ सर्वथेति । मोहाय । दैत्यानामिति शेषः । अन्यवचः द्वेषाचैद्यादय इत्यनकवचः ॥ १८–२३–२४ ॥
इति श्रीभागवततात्पर्यटिप्पण्यां द्वितीयोऽध्यायः ॥ ३–२ ॥ छं ॥

॥ हरिः ॐ ॥ समाहुता भीष्मकेति श्लोके भीष्मकन्यकाया रुक्मिण्याः श्रियोऽर्थेन पुरुषेण दूतेन ये राजानः समाहूता येषां राज्ञां जिहीर्षया सुपर्णो गरुडो मूर्ध्नि पदं दधत्स्वभागं जगृहे इत्यन्यथाप्रतीतिनिरासाय तात्पर्यार्थमाह ॥ भीष्मकेति । विभक्तिव्यत्ययेन भागवतस्थसुपर्णपदस्यैवार्थः ॥ भगवतेति । नन्वेवं चेत्तर्हि सुपर्णेन कृष्णेन रुक्मिण्यर्थे राजान आहूता इत्यर्थः स्यात् । सोऽनुपपन्नः । भीष्मकेणैव राज्ञामाहूतत्वेन कृष्णेनानाहूतत्वादित्यतस्तस्याप्यर्थमाह ॥ आव्हानबुद्धिरिति । भीष्मकस्येति शेषः । अनेन कृष्णस्य भीष्मकांतःप्रेरकत्वेन भीष्मकृतराजाव्हानं मुख्यतः कृष्णकृतमेवेति भावेनोद्धवनोक्तमित्युक्तं भवति । सवर्णमात्रतयेत्यनेन भागवतस्थसवर्णेनेत्यत्र भावप्रधानो निर्देशः सावधारणत्वं चेति सूचितं । तेन क्षत्रियत्वेनेवाहूता न तु रुक्मिणीं प्रति योग्यत्वेनेति सूचितं भवति । ननु कृष्णेन भीष्मकस्य राजाव्हानबुद्धिः किमर्थं कृतेत्याशंका भागवतस्थव्यवहितपदानामन्वयप्रदर्शनेन परिहरति ॥ एषामिति । एषां राज्ञां श्रियः सामर्थ्यादिरूपसंपदः सुपर्णो भगवानित्युक्तं । तत्कुत इत्यतः प्रमाणेनैव हरौ सुपर्णशब्दं निर्वक्ति ॥ सुपर्ण इति । इत्युच्यते हरिरित्यनेन सुष्ठु पर उत्तमो ण आनंदो यस्येति विग्रहः सूचितः । णश्च निर्वृतिवाचक इति वचनात् णकार आनंदवाची ॥ ३ ॥ तास्वपत्यानीति श्लोके पुरुरूपः कृष्णस्तासु स्त्रीषु सर्वतः सर्वप्रकारेणात्मतुल्यान्यपत्यान्यजनयदिति कृष्णपुत्राणां कृष्णेनात्यंतसाम्यमुच्यते । तच्च कृष्णादत्यंतनीचत्वप्रतिपादकप्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ उत्तमैरिति । यदुत्तमैः किंचित्साम्यं तदेव सर्वतः साम्यमित्युच्यत इत्यर्थः

॥ ९ ॥ भगवानपीति श्लोके भगवान्सांख्यं सांख्यशास्त्रमास्थित इत्यन्यथाप्रतीतिनिरासाय सांख्यपद प्रमाणेनैव व्याचष्टे ॥ केवलमिनि । केवल सर्वोत्तमं भगवज्ज्ञानं भगवत्स्वरूपज्ञानं । अनेन समीचीना सर्वोत्तमा आख्या ख्यातिर्ज्ञानं संख्या । संख्यैव सांख्यमिति सांख्यपदव्युत्पत्तिः सूचिता भवति ॥ १९ ॥ तस्येत्थमिति श्लोके तस्य हरेर्गृहमेधेषु गृहाश्रमधनेषु विषयेषु विरागः समाजायतेति हरेर्जीववत्पूर्वमविद्यमानं वैराग्यमिदानीं जातामिति भ्रांतिनिरासाय तत्तात्पर्यार्थं दर्शयन्नुत्तरश्लोकार्धस्य देवाधीनेषु कामेष्विति श्लोके को विश्रभेतेत्यत्र हेतुत्व दर्शयस्तद्व्याचष्टे ॥ सर्वादपीति । विगतरागेण पुरुषेण तुल्य वर्तेत इति विरागवद्भासयीत प्रकाश्यते कदाचित् । हरिरिति शेषः । कादाचित्को विरागस्तस्य हरेरिष्यते । कदाचिद्वैराग्यप्रकाशनमिति शेषः । तेनापि नित्यविरागेणापि हरिणा ॥ २२-२३ ॥ ननु ततः कतिपयैरित्यादि श्लोकेषु यादवादीनां भविष्यत्प्रभासगमनादिकं ययुर्ददुरिति अतीतत्वेनोच्यंते । तत्र किं कारणमित्याशंकां प्रमाणेनैव परिहरति ॥ एष्यच्चेनि । चक्रवत्परिवृत्ते वेत्यनेन द्वितीयं कारणमुक्तं । चक्रवद्भ्रमणवतः कालस्य परिवृत्तेः परावृत्तेः । व्यत्यासादिति यावत् । ग्रंथेषु पूर्वं वक्तव्यकथा पश्चादुच्यते । पश्चाद्वक्तव्यकथा पूर्वमुच्यत इति कालव्यत्यासाचेष्यदतीतत्वेन भण्यत इत्यर्थः । कालव्यत्यासस्तु सोदाहरणः कालव्यत्यासः क्वचिदिष्यते । यथा सुयोधन भीमः प्राहसत्कृष्णसंनिधाविति वाक्येषु बहुषु ज्ञायंते निर्णयादपि । अनिर्णये तु कृष्णस्य पूर्वमुक्ता गतिस्तत इति भारततात्पर्यवाक्यादवगंतव्यः । ततो हंसात्पूर्व गतिर्गमनमित्यर्थः । दुष्टानामित्यनेन तृतीय कारणमुक्तं ॥ २५ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां तृतीयोऽध्यायः ॥ ३-३ ॥ छ ॥

॥ हरिः ॐ ॥ भगवानात्मेति श्लोके आत्ममायायाः स्वाश्रिताज्ञानस्येति भ्रांतिनिरासाय तदनूद्य तस्य विवक्षितमर्थं दर्शयन्विवक्षिताध्याहारेण योजयति ॥ आत्ममायाया इति । गतिं भविष्यद्यादवविनाशरूपा । पूर्वमित्यनेन भागवते

पूर्वमित्यध्याहार्यमिति सूचितं भवति । एवं स्ववाक्येन किंचिद्व्याख्यायेदानीं भगवानात्ममायाया इति श्लोकमारभ्य इति सह विदुरेण विश्वमूर्तेरित्यंतश्लोकानां प्रमाणेनैव तात्पर्यार्थमाह ॥ ज्ञात्वेत्यादिना । जनार्दनः कतिपयैर्वर्षैर्भविष्यंतं मौसलं मुसलजन्ययादवविनाशनं ज्ञानसंतत्या पूर्वमेव ज्ञात्वोद्धवं बदरीं नयन् प्रेषयन्सन् तत्रोद्धवे सज्ज्ञानं विस्तीर्य पुनर्द्वारवतीं ययावित्यन्वयः । अनेन सार्धश्लोकेन भगवानात्ममायाया इत्यारभ्य यत्सूरयो भागवत वदंतीत्यंतश्लोकानां तात्पर्यार्थ उक्तो भवति । पूर्वमेवोपविष्टोऽपीत्यादिश्लोकद्वयेन इत्यादरोक्तः । परमस्य पुंस इत्यारभ्यापगविर्निशाततोऽगादित्यंतश्लोकानां तात्पर्यार्थ उक्तः । प्रभुः उद्धवः ॥ ३–२७ ॥ निधनमुपगतोऽविति श्लोके प्रभुः कृष्णोऽप्याकृतिं स्वकृष्णदेह तत्याजेति तथा ब्रह्मशापापदेशेनेति श्लोके देहं त्यक्षन्निति च कृष्णदेहत्याग उच्यते । स तु वेदाविनाविनाशिनं नित्यमित्यादिप्रमाणबाधित इत्यत आकृतिपदमनूद्य व्याकुर्वन्स्वव्याख्यानेऽभिधानं पठंस्तेनैवाभिधानेनोत्तरश्लोकस्थदेहशब्दस्य पृथिव्यर्थत्वमाभिप्रेत्य स्वोक्तार्थं प्रमाणेनोपपादयति ॥ आकृतिमिति । नित्यानंदस्वरूपत्वात् । कृष्णदेहस्येति शेषः । सदृशीं कृष्णदेहसदृशीं । राजन्परस्येति वाक्यमेकादशस्कंधातिमाध्यायस्थं । परस्य सर्वोत्तमस्य हरेः याः तनुभृज्जननाप्ययेहयाः जीवज्जननाशचेष्टा मायाविडंबनं स्वेच्छया जनवंचनमवेहि । यथा नटस्य पुरुषस्य स्त्रीवेषादिकं तथेत्यर्थः ॥ २८—२९ ॥ नोद्धवोऽण्वपीति श्लोके उद्धवोऽण्वपि मत्तो न्यूनो न भवतीति कृष्णेनोद्धवस्य सर्वप्रकारेण स्वसाम्यमुच्यते । तत्तु न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य इत्यादिप्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ उत्तमैरिति । मोहार्थं चेत्यत्र विद्यमानं वाशब्दत्रयमवधारणार्थं । यस्तूत्तमैर्देवानां स्वाधिकत्वं वा साम्यं वा स्वविजयो वोच्यते तत्सर्वं किंचिन्मोहार्थमेव कचिदुपेक्षया । अत्र तृतीया व्यत्ययेन चतुर्थ्यर्थे । उपेक्षायै तमोयोग्यैरुत्तमानामुपेक्षां कर्तुमेव कचिन्मूढदृष्ट्यनुसारादेव कचित्किंचित्साम्यैर्वोच्यत इत्यर्थः ॥३१॥ इति श्रीभागवततात्पर्य

टिप्पण्यां चतुर्थोऽध्यायः ॥ ३—४ ॥ छ ॥

हरिः ॥ ॐ ॥ परावरेषामिति श्लोके कृष्णकथामृतौघात् ऋते विनाति ऋतशब्दस्यान्वयार्थभ्रांतिनिरासाय विविक्षितार्थमुक्त्वा तन्मूलधातुं पठति ॥ऋत इति । अवगम इत्यनेन भावे क्तप्रत्यय इत्युक्तं भवति । नन्वेव चेत्तर्हि कृष्णकथामृतौघादिति पंचमी न स्यात् । तस्यान्याराादितरर्ते इति सूत्रेण वचनार्थकेर्तशब्दयोगविहितत्वादत्र तदभावादित्यतोऽत्र हेतौ पचमीत्यभिमेत्य तेषामित्यादिभागवतवाक्यतात्पर्यार्थमाह ॥ तेषामिति । तेषां विरिंचादिचरितानां तात्पर्यावगमे तानि कृष्णचरितानि पराण्युत्तमानि येषु विरिंचादिचरितेषु तानि तत्पराणि तेषां भावस्तात्पर्यं । तात्पर्येणावगमे ज्ञाते सति असौ विरिंचदिचारितौघो यतः कृष्णकथामृतौघ एव भवत्यतो न तृप्नुम इति भागवतवाक्येनास्यान्वयः । अनेन तेषां विरिंचादिचरितानामृते उत्तमकृष्णचरितैः सहावगमे ज्ञाते सति तेषां चतुर्मुखादिचरितानां कृष्णकथामृतौघात्कृष्णकथामृतसहितादोघान्न तृप्नुम इति भागवतवाक्यं व्याख्यातं भवति। तथा तृप्त्यभावं प्रति कृष्णकथामृतस्य हेतुत्वं सूचितं भवति ॥ १० ॥ मुनिर्विवक्षुरिति श्लोके नृणां मतिर्यस्मिन्कृष्णे ग्राम्यसुखानुवादगृहीता न तु हरेः कथायां गृहीता । स कृष्णो भरतमाहेत्यन्वयार्थभ्रातिनिरासाय विवक्षितान्वयार्थावाह ॥ यस्मिन्निति। भारते। उक्तायामिति शेषः। कथाया। श्रुतायामिति शेषः। तद्भारतमाहेति भागवते नास्यान्वयः । ननु भगवद्गुणप्रतिपादकेषु वैराग्यादिसाधनेष्वन्येषु पुराणादिग्रंथेषु सत्सु भगवद्गुणविवक्षया ग्राम्यसुखवैराग्याद्यर्थं भारतकारणमयुक्तमित्याशंकां प्रमाणेनैव परिहरति ॥ भारतादिति । अधिकं महिमावाचकमिति संबधः । भारतात् । अन्यदिति शेषः । ननु भारतादधिकमिति यथा श्रुतान्वयसंभवे सत्यत्रान्यादिति शेषोऽधिकमित्यस्य महिमावाचकमित्यनेनान्वयः कुतः क्रियत इति चेन्न । तथात्वे भारतादधिकाभावेऽपि भारतसममन्यद्भविष्यति । तेनैव पुनर्भारतस्य गतार्थत्वं स्यादेव । अत

एवं व्याख्यातं ॥ १२ ॥ **सा श्रद्दधानस्येति** श्लोके सेति स्त्रीलिंगेन तच्छब्देन स्त्रीलिंगशब्दवाच्याव्यवहितप्रकृतकथा परामृश्यत इति भ्रांतिनिरासाय तच्छब्दपरामृश्यार्थं दर्शयन्विवर्धमानेत्यस्य वुत्रेति विषयापेक्षायां पूर्वश्लोकोक्तस्य विषयत्वं दर्शयति ॥ सा ग्राम्येति ॥ १३ ॥ इति भागवततात्पर्यटिप्पण्यां पंचमोऽध्यायः ॥ ३—५ ॥

॥ हरिः ॐ ॥ **भगवानेक आसेति** श्लोके आत्मनां जीवानामात्मा स्वरूपभूतो भगवानित्यन्वयभ्रांत्या जीवेश्वरैक्यमुच्यत इति भ्रांतिनिरासाय विवक्षितमन्वयं दर्शयंस्तत्तात्पर्यार्थमाह ॥ **आत्मनामिति** ॥ १ ॥ **स वा एष इति** श्लोके एकराट् स्वतंत्रो हरिरात्मानं जीवं संतमिव वस्तुतोऽसंतमेव संतं मेन इति जीवस्य स्वरूपतोऽसत्त्वं हरेरविद्यमानसत्त्वमज्ञत्वेन भ्रांतत्वं च प्रतीयते । तन्निरासाय प्रमाणेनेव तत्तात्पर्यार्थमाह ॥ **परमात्मेति** । सत्यज्ञानः सत्यार्थविषयज्ञानः । असौ जीवः । अनेन संतामिव वस्तुतोऽसंतमज्ञत्वं जीवं मेन इति भागवतवाक्यं व्याख्यातं भवति । अस्मिन्नेवार्थे सुप्ता लीनाविनष्टा शक्तिः सामर्थ्यं यस्य हरेः स तथेति भगवत्सामर्थ्यनाशभ्रांतिनिरासाय प्रमाणाभ्यामेव शक्तिसुप्तिशब्दयोर्विवक्षितमर्थमाह ॥ **शक्यत्वादित्यादिना** । ननु शक्यत्वादिति ब्रह्मतर्कवाक्ये भार्यासामर्थ्ययोः शक्तिशब्दवाच्यत्वस्योक्तत्वात्किमुभेऽपि ग्राह्ये । उत तयोरेकमेव । एकग्रहणपक्षे किं भार्याग्राह्युत सामर्थ्यं । अत्र कोऽपि पक्षोंऽगीकर्तुमशक्यः । निश्चायकप्रमाणाभावादिति चेन्न । सुप्तिस्तु प्रकृतेः प्रोक्तेति व्योमसंहितावाक्ये हरिभार्यावाचकप्रकृतिशब्दग्रहणाच्छक्तिशब्देन भार्याग्रहणस्यैव न्याय्यत्वात् । अन्यथा सामर्थ्यस्येति ब्रूयात् । तुर्विष्णोरित्यनेन संबध्यते । अतीवभगवद्रतिः हरेरन्यत्रानास्था चानासक्तिश्च प्रकृतेर्लक्ष्म्याः सुप्तिः प्रोक्ता विष्णोस्तु सुप्तिश्चक्षुर्निमीलनमित्यर्थः । इदं तु विष्णोः सुप्तिप्रतिपादकग्रंथांतरतात्पर्यार्थकथनं ज्ञातव्यं ॥ २ ॥ **सोऽप्यंशगुणेति** श्लोके प्रकृतेरंशभूतगुणाः सत्त्वादयः कालश्च एते आत्मा स्वरूपं यस्य विज्ञानात्मनः स तथेति महत्तत्त्वाभिमानिनश्चतुर्मुखस्य

प्रकृतिगुणाद्यभेद उच्यत इत्यन्यथाप्रतीतिनिरासायांशपदं स्वयं व्याख्यायांशगुणकालात्मेत्येतत्प्रमाणेनैव व्याचष्टे ॥ अंश इत्यादिना । एवशब्दः सर्वजीवाभिमानित्वादित्यनेन संबध्यते । अनेनांशा जीवाश्च गुणाश्च कालश्च तेषामात्माऽभिमानिनीति विग्रहस्तथा न केवलं जीव एवांशशब्दवाच्यः किंतु जीवाभिमानी चतुर्मुखश्च तदभिमानित्वादेवांशशब्दवाच्य इत्युक्तं भवति । चतुर्मुखस्यांशत्वोक्तेरुत्तरत्रोपयोगः ॥ ६ ॥ आधत्तांभोरसमयवालमायांशयोगत इत्येतदनूद्य व्याचष्टे ॥ कालेति । परिणामाज्जडप्रकृतेश्चित्प्रकृतेरित्यर्थः । अत्र परिणामात्प्रकृतेरिति पदद्वयेन भागवतस्थमायाशब्दस्यार्थद्वयमुक्तं भवति । यथा हिरण्य गर्भादित्यनेन भागवतस्थांशशब्दो व्याख्यातः । तेन हिरण्यगर्भस्य पूर्वोक्तांशशब्दवाच्यस्यात्रोपयोगः सूचितः । अनेनैव कालमायांशयोगेनेति पूर्वश्लोकस्थं पद तथा मही गंधगुणामित्युत्तरश्लोकस्थकालमायांशयोग इति पदं च व्याख्यातं भवति ॥ ॥ १३ ॥ एते देवा इति श्लोके कालमायांशा एव लिगान्यनुमानानि येषां सतीति देवाना कालमायांशानुमेयत्वमुच्यत इति भ्रांतिनिरासाय तदनूद्य व्याचष्टे॥ कालमायांशलिगिन इति । तन्निमित्तेत्यनेन कालमायांशेभ्यो लिंगशरीरमेषामस्तीति भागवतस्थ कालमायांशलिंगपदस्य विग्रहः सूचितो भवति। कालमायांशेत्यत्र न केवलं जडकालांश एव ग्राह्यः। किन्तु तदभिमानी चतुर्मुखोऽपि ग्राह्यः । न चांशपदेन पुनरुक्तिः । तद्वाच्यहिरण्यगर्भरूपादन्यस्य हिरण्यगर्भरूपस्य कालपदेन ग्रहणादित्याशयवानाह ॥ हिरण्यगर्भ स्यैवेति । कालाभिमान्येकं रूपं जीवाभिमान्यपर रूपमिति हिरण्यगर्भस्यैव द्विविधं रूपमिति इतिशब्दाध्याहारेणेद वाक्य योज्यं । स्वोक्तार्थे प्रमाणमाह ॥ कालजीवेति ॥१६॥ आत्मंस्तुभंत इति श्लोकेऽङ्घ्रिच्छायांशविद्या अंघ्रेर्या छाया तस्या योंऽशस्तस्य विद्या मिति हरिपादच्छायैकदेशस्य विद्योच्यते । साऽनुपपन्ना । तस्याप्रामाणिकत्वादित्यतः प्रमाणेनैव तदर्थमाह ॥ ब्रह्मा गेच्येति । हरेर्हर्यंघ्रेः छायेव छाया । यथा ग्रीष्मर्तौ सूर्यातपतप्तस्य कल्पवृक्षादिछायाऽतिसुखप्रदा । तथा संसारे त्रिविधतापतप्तस्य हरि

पाद्माहात्म्यविषयकब्रह्मविद्यार्थक इत्युक्तं भवति। नन्वनेन हरिपादस्य ब्रह्मविद्येत्यर्थ उक्तो भवति। तत्र षष्ठ्यर्थः क इत्य" पेक्षायां विषयविषयिभावलक्षणो वाऽऽधाराधेयभावलक्षणा वा सबंध एव षष्ठ्यर्थ इत्याशयवानाह ॥ सर्वाविद्योते । विषय त्वेनेति शेषः। भोक्ताः। हरिपाद इति शेषः। आधाराधेयभावे शेषो न पूरणीयः। तदंशो हि सुरादेष्विति सामान्योक्त्या ब्रह्मादीनां विद्याप्राप्तावाह ॥ प्रधानांश इति। प्रधानोऽन्यजीवेभ्योऽधिकोंऽशो ब्रह्माद्यांशो यस्मिन्स तथेत्यर्थः। इदमन्य देवतातारतम्योपलक्षकं। अनेनैव भागवतवाक्यं व्याख्यात भवति। तवाङ्घ्रिछायांशविद्या अङ्घ्रेः पादस्य छाया छायेव छाया तन्माहात्म्यविषयब्रह्मविद्या तस्या अंशविद्यां एकदेशभूतविद्यां वय दवा आश्रयेमेति ॥ १८ ॥ यस्याघमर्ष इति श्लोके घुसरितो गंगाया धरायाः पृथिव्या इति भ्रांतिनिरासाय तत्पदं व्याचष्टे ॥ घुसरित इति। अनेन षकारस्य दैर्घ्याभावः छादस इति घुसरितो गंगाया बहिरावरणोक्तधरायाश्च पदमाश्रय इत्यर्थः। घुसरित्सहिता धरा तस्या इति सूचितः ॥ १९ ॥ तथा परे चात्मेति श्लोके परे धीरा वरिष्ठां प्रकृतिं लक्ष्मीं जित्वाऽऽत्मसमाधियोगबलेन त्वामेव विशतीति भगवदुक्तेः पराभूतत्व लक्ष्म्या उच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थं वदंस्तेनैव प्रमाणेन विष्ण्वाद्यूर्जितत्वप्रतिपादकवत्प्रतीयमानस्थलातरस्थवाक्य स्यापि तात्पर्यमाह ॥ वायोश्चेति। एवशब्दोऽध्याहृतवशीकरणशब्देन संबंधनीयः। भक्त्या वशीकरणमेव विष्ण्वादेर्जयो नाम। अन्यथा पराभवरूपो नैव भवतीत्यर्थ. ॥ २५ ॥ तत्ते वयं लोकेति श्लोके वय त्रिभिरात्मभिरनुसृष्टा उत्पादिता इति देवोत्पादकास्त्रय आत्मान उच्यंते। ते क इति न ज्ञायते। अतस्तदनूद्य व्याचष्टे ॥ त्रिभिरिति। अनेन कालमायांशयोगेनेत्यादेः स्वकृतव्याख्याने इदमपि प्रमाणमिति सूचितं भवति ॥ २६ ॥ ततो वयं सदिनि श्लोके सत्प्रमुखा वयं यदर्थे बभूविमेति सदा दित्वमुच्यते। तत्र सच्छब्दस्यानेकार्थत्वादत्र विवक्षितार्थः क इत्यतस्तदनूद्य तस्य विवक्षितमर्थमाह ॥ सत्प्रमुखा इति। महत्

महत्तत्त्वाभिमानी विरिंच आदिर्येषां ते तथा सच्छब्दार्थ इति भावः ॥ २९ ॥ इति श्रीभागवततात्पर्यटिपण्ण्यां षष्ठोऽध्यायः ॥ ३–६ ॥ छ ॥

॥ हरिः ॐ ॥ इति तासामिति श्लोके ईश्वरः स्वशक्तीनां स्वसामर्थ्यरूपाणां तासां देवतानां गिरं निशम्येति ब्रह्मादि देवतानां हरिसामर्थ्येनैक्यमुच्यते । तत्तु प्रमाणबाधितमित्यतः प्रमाणेनैव शक्तिशब्दार्थमाह ॥ शक्यत्वादिति । रमा तथेत्यनेन देवीं बिभ्रच्छक्तिमुरुक्रम इत्युत्तरश्लोकोक्तं रमायाः शक्तित्वं व्याख्यातं भवति । अनेन शक्यत इति शक्तिरिति शक्तिशब्द व्युत्पत्तिः सूचिता । सा विष्णुस्वरूपशक्तिर्यतो मुख्यशक्ति मुख्यतः शब्दवाच्या शक्तित्वादेव शक्तिर्न तु शक्यत्वात् हि तस्मा दित्यर्थः । तस्मिन्नेव श्लोके असतीनां देवतानां गिरं समेत्य प्राप्यैव निशम्येत्यन्वयभ्रांतिनिरासाय विवक्षितान्वयार्थमाह ॥ समेत्येति । तत्रैव श्लोके प्रसुप्तलोकतंत्राणामिति देवविशेषणमुक्तं । तत्तु लोकाश्च तंत्राणि शास्त्राणि च लोकतंत्राणि । प्रसुप्तानि विलीनानि लोकतंत्राणि यासु देवतास्वन्यथा गतीरिति भ्रांतिनिरासायानूद्य यथावद्व्याचष्टे ॥ प्रसुप्तेति । ननु तंत्रशब्दन शक्ति र्गृहीता । तत्र तंत्रशब्दस्य का वृत्तिरित्यतः प्रमाणेनैव तंत्रवृत्ति दर्शयन्स्वव्याख्यानं च दृढयति ॥ तनुते येनेति । कर्तेति शेषः ॥ ॥ १ ॥ त्रयोविंशतितत्त्वानामित्यनेन त्रयोविंशतितत्त्वान्युक्तानि तानि कानीत्यतः प्रमाणेनैव तानि दर्शयति ॥ शब्दाद्या इत्यादिना । शब्दाद्यभिमानिनः किं तत्त्वान्युतातत्त्वानि । द्वितीये विष्णुकृततत्त्वविवेकादिग्रंथविरोधः । आद्ये त्रयोविंशतितत्त्व संख्याऽनुपपन्ना । इत्यत आह ॥ देवतेति । इंद्रियपदं शब्दाद्युपलक्षकं । ऐक्यादेकशब्दवाच्यत्वात् । तयोरभिमान्याभिमन्यमानयोः। न केवलं त्रयोविंशतिक एव तत्त्वगुणः किं त्वधिकोऽप्यस्तीत्याह ॥ प्रकृतिस्त्विति । एव शब्दस्पर्शरूपादिशब्दैः साभिमानशब्द-स्पर्शरूपादिकं स्वीकृत्य संख्योक्त्वेदानीं निरभिमानशब्दस्पर्शादिस्वीकारेण तत्त्वसंख्यामाह ॥ यदेति । जीवस्तत्त्वाभिमानी श्रीर्वेति

पक्षांतरद्योतकवापदेन षड्विंशक एकः पक्षः । सप्तविंशकोऽपरः पक्षः । तत्र षड्विंशकपक्षे प्रकृतिपदेनैव चिदचित्प्रकृती ग्राह्ये । सप्तविंशतिपक्षे प्रकृतिपदेन केवलजडप्रकृतिरेव ग्राह्येति सूचितं । एवं पक्षभेदेन तत्त्वसंख्यानमुक्त्वेदानीं कालसंज्ञां तदा देवीमित्यादि श्लोकत्रयस्याप्रतीतिविप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ त्रयोविंशतीत्यादिना । तत्र तयोविंशतितत्त्वानीति तात्पर्यार्धश्लोकेन कालसंज्ञामिति भागवतश्लोक उक्ततात्पर्यार्थो भवति । ननु स्वतः स्वाधारकरणेऽशक्तैर्देवैर्हरिः प्रार्थित इति पूर्वमुक्तं । तदनंतरं तैः प्रार्थितो हरिस्त्रयोविंशभिः स्वांशैस्त्रयोविंशतितत्त्वेषु प्रविश्य तानि संयोज्य ब्रह्मांडरूपमाधिष्ठानं निर्ममे इत्येव वक्तव्यं । प्रकृतावनुपयुक्तं कालसंज्ञां तदा देवीमित्यादि किमित्युच्यत इति चेन्न । कालस्य कार्यमात्रनिमित्तकारणत्वस्य प्रमाण सिद्धत्वेनात्र कालो ब्रह्मांडरूपं कार्यं प्रति निमित्तकारणत्वेन वाच्यः । तस्य च केवलजडत्वेनासामर्थ्यत्वादभिमानी वाच्यः । अभिमानी चतुर्मुखो लक्ष्मीश्चेति द्विविधः । असति बाधके मुख्यामुख्यन्यायेन चतुर्मुखस्य महत्तत्त्वरूपोपादानाभिमानित्वेनोक्त्वा त्रयोविंशतितत्त्वेषु लक्ष्म्या अनुक्तत्वाच्च लक्ष्मीरेव ग्राह्येति भावेन कालसंज्ञामिति वेदव्यासेनोक्तं । तत्र लक्ष्म्याः कालानियमने स्वातंत्र्यभ्रांतिनिरासाय विष्णुना शक्यत्वान्नियम्यत्वाच्छक्तिमित्युक्तं । अनेनैवाभिप्रायेणाचार्यवर्यस्त्रयोविंशतितत्त्वानीत्यादि प्रमाणेनेमं श्लोकं व्याचष्टे । सर्वचेष्टकरूपेणेति तात्पर्यश्लोकेन सोऽनुप्रविष्टो भगवानित्यादिभागवतश्लोकद्वयमुक्ततात्पर्यार्थं भवति । तत्र सर्वचेष्टकरूपेण स्वसामर्थ्येन चेत्यनेन चेष्टारूपेणेति भागवतपदं व्याख्यातं भवति । मात्राभिरिति भागवतपदमंशत इति प्रमाणेन व्याख्यातमपि प्रतीकग्रहणेन स्पष्टमव्याख्यातत्वान्मात्राभिः शब्दस्पर्शादिविषयैरिति भ्रांतिनिरासाय च प्रतीकग्रहणेन स्पष्टं व्याचष्टे ॥ मात्राभिरिति । प्रबुद्धकर्मा दैवेनेत्यत्र दैवमुक्तं । तद्दैवं दैवं दिष्टं भागधेयं भाग्यो स्त्री नियतिर्विधिरित्यभिधाना द्भाग्यमिति प्रतीयते । तन्निरासाय प्रमाणेनैव तदर्थमाह ॥ ईश्वर इति । सर्वस्यापि प्रभुत्वत इत्यनेन दैवशब्दः सर्वोपलक्षकः ।

तत्स्वामित्वरूपेदमर्थे तद्धितप्रत्यय इत्युक्तं भवाति ॥ २–३–४ ॥ **स वै विश्वसृजामिति** श्लोके दैवकर्मात्मशक्तिमानिति हरे-विशेषणमुक्तं । तत्रात्मशक्तिमानित्यनेन स्वरूपभूतसामर्थ्ययुक्तत्वमुच्यते । तदयुक्तं । स्वाभिन्नेन स्वस्य युक्तत्वासंभवादित्यत आत्मशक्तिपदमनूद्य व्याचष्टे ॥ **आत्मशक्तिरिति** । अनेनात्मनः शक्तिरिति विग्रहः सूचितः ॥ ७ ॥ एष ह्यशेषसत्त्वानामित्यत्र विद्यमानैतच्छब्दोऽडकोश उवासावित्यत्राव्यवधानेन प्रकृतांडप्रविष्टरूपपरामर्शक इति प्रतीयते । तदयुक्तं । अंडस्थरूपपरामर्शांगीकारेऽडस्वरूपस्यैवाद्योऽवतारो यत्रासावित्युक्ताद्यावतारत्वमंगीकर्तव्यं स्यात् । तत्तु प्रथमं महतः स्रष्टुर्द्वितीयं त्वंडसंस्थितमित्यादि-द्वितीयावतारत्वप्रतिपादकप्रमाणबाधितामित्यतस्तत्परामृश्यमर्थं दर्शयाति ॥ **पुरुषेणेति** । इति पूर्वाध्यायस्थश्लोके यो महत्तत्त्वस्रष्टृत्वेनोक्तो यश्चाडमसृजत्सो महत्तत्त्वादिस्रष्टा एष इतिशब्देनोक्तः परामृष्ट इत्यर्थः । स्वोक्तार्थे प्रमाणं वदंस्तेनैव प्रमाणेनाद्यं द्वितीयं च पदाभ्यां मासमंडस्थमहत्तत्त्वस्रष्टृरूपभेदभ्रमं च निवारयाति ॥ **आद्यावतार इति** । स ब्राह्मणो हृदि स्थित्वेति तात्पर्यार्थेन भागवतस्थहृदयेनेति पदं प्रसिद्धहृदयार्थत्वभ्रांतिनिरासाय भगवदर्थत्वेन व्याख्यातं ॥ ८ ॥ **एकधा दशधेति** पूर्वश्लोकोक्तस्य विवरणरूपे **साध्यात्ममिति** श्लोकेऽध्यात्मेन सहितं साध्यात्ममित्यध्यात्मादित्रयांतर्गतभगवद्रूपं त्रिधेति पूर्वोक्तं विवृतं । तत्राध्यात्मादिकं किं विराट् प्राणो दशविध इति दशविधप्राणांतर्गतभगवद्रूपं दशधेति पूर्वोक्तं विवृतं । तत्र प्राणशब्दोऽनेकार्थः । अत्र विवक्षितः प्राणः कः । कश्चास्य दशविधा इत्यतस्तत्सर्वं प्रमाणेन दर्शयाति ॥ **प्राणादिपंचकमित्यादिना** । नागादीत्यादि-पदोक्तं स्वयमेवाह ॥ **तादिति** । तत्तेनेत्यर्थः । नागकूर्मकृकलदेवदत्तधनंजयाः । तत्तेन नागादिपंचकपदेनोक्ता इत्यर्थः । एवं दशधा दशरूपवान् । तुरप्यर्थे । अखिला इत्यनेन संबध्यते । तेन प्राणस्य दशरूपाणां प्रत्येकमध्यात्मादित्रिरूपत्वमुक्तं भवाति । नन्वनेन प्राणः क इति शंका न परिहृतेत्यतः प्रमाणेनैव तां परिहराति ॥ **प्राण इति** । प्राणादिदशनामकमध्यात्मादित्रिनामकं

च केवलं मुख्यप्राणरूपमेव न । किन्तु मुख्यप्राणपुत्रा अपि तन्नामान इति भावेनाह ॥ त्वगात्माद्या इति । तुशब्दार्थस्त त्पुत्रा इत्यनेन संबध्यते । त्वगात्मा त्वगिंद्रियाभिमानी प्राणः । आद्यपदेनापानादयो ग्राह्याः । तत्पुत्रा मुख्यप्राणपुत्राश्च । प्राणा ध्यात्मादिशब्दवाच्या इति शेषः । एवं प्राणादिदशकमध्यात्मादित्रिकं च द्विधाभूतं प्रधानाप्रधानप्राणादिरूपेण द्विविधमुदाहृत मित्यर्थः ॥ ९ ॥ आत्मानं चेत्यादि श्लोकत्रयं आत्मानं देहं वाचस्पतिर्वायुरूपाविशत् । अहमिति जीवविषयकं ज्ञानमभिमानिनो मदीयत्वाभिमानिनः कर्त्रंशेन कर्तृत्वेनाविशत् । सत्त्वं सत्त्वगुणं । महान् श्रेष्ठः पुरुषः चित्तेनांतःकरणेनोपाविशदित्यन्यथाप्रतीयते । तथाऽऽत्मनि यथैकस्यैव प्रवेशस्तथाऽहं सत्त्वयोरप्येकैकस्यैव प्रवेश इति च भ्रांतिर्भवत्यतस्तन्निरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अहं सत्त्वमितीति । ब्रह्मनाड्याऽहमिति सत्त्वमिति द्वेधाऽवांतरप्रभेद इत्यर्थः । आद्यस्तुशब्दोऽवधारणे । हरस्तथेति तथाशब्द उत्तरत्र संबध्यते । चैवेत्येवकारश्चित्तमित्यनेन संबध्यते । अह नाड्यां त्वहंकारः अहंकारनियामकः । कर्तृनामकैव हरो व्यव स्थितः । तथा सत्त्वे नाड्यां अभिमानोऽभिमाननियामकः चित्तं चित्तनामा हरो व्यवस्थितः । तथा ब्रह्मा चतुर्मुखोऽपि अहनाड्यां सत्त्वनाड्यां च व्यवस्थित इत्यर्थः । अनेनाहं चास्य विनिर्भिन्नमिति भागवतश्लोके च संबंधनीयं । तथा सत्त्वं चास्येति भागवत श्लोकस्थमहानिति पदं अहं चास्य विनिर्भिन्नमित्यत्रापि संबंधनीयमित्युक्तं भवति । तत्रस्थो बुद्धिस्थः । बुद्धिर्बुद्धिनामा । भागव तस्थक्रमोल्लंघनं त्वभिमान्याधिक्याभिप्रायेण ज्ञातव्यं ॥ २४–२५–२६ ॥ मुखतो वर्ततेत्यादि श्लोकचतुष्टये ब्रह्मादिपदैर्ब्रा ह्मणादय एवोच्यंत इति भ्रांतिस्तथा पुरुषपदस्यानेकार्थत्वाद्विवक्षितार्थो न प्रतीयते । अतस्तन्निरासाय प्रमाणेन तत्तात्पर्यार्थमाह ॥ ब्रह्माभिमानीति । ब्रह्माभिमानी ब्राह्मणजात्यभिमानी । एवमेव क्षत्राभिमानीत्याद्यपि व्याख्येयं । ब्रह्मणश्चतुर्मुखस्य । वास्तुः वास्तुनामा गृहाभिमानी देवः । अनेन भागवतस्थपुरुषपदं चतुर्मुखवाचीत्युक्तं भवति । पुरुषस्य मुखता वर्ततेत्याद्युक्त्या

चतुर्मुखस्य स्वातंत्र्यं प्राप्तं । तन्निवारयंश्चतुर्मुखादन्यतोऽपि ब्रह्माद्युत्पत्तिमतिदेशेनाह ॥ **एते पूर्वमित्यादिना** । ब्रह्मणश्चतुर्मुखात् । यतस्तदंतःस्थहरेः चतुर्मुखाद्यंतःस्थितहरेः भृग्वादयो जाता अतो न विरिचादीनां ब्राह्मणादिजनने । स्वातंत्र्यमिति शेषः पूरणीयः ॥ ३०–३३ ॥ एतत्क्षत्तरिति श्लोके देवकर्मात्मरूपिण इत्यनेन हरेर्देवसंबंधियज्ञादिकर्मणा जीवैश्चैक्यमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **अधिकत्वादिति** । यतः कारणादधिकत्वादध्याद्याधिकत्वादेव देवेषु देवशब्दः प्रवर्तते यतश्च हरिर्देवेष्वप्यधिकोऽतो दैवमित्येव भण्यते । यतश्च मूलं कृतिरादिकर्ताऽतः कर्मेति भण्यते । आत्मेति शब्दो यस्मिन्स तथा ॥ ३५ ॥ **अतो भागवत** इति श्लोके आत्मा परमात्मा न वेदेति भ्रांतिनिरासायात्मा न वेदेत्येतदनूद्यात्मशब्दार्थमाह ॥ **आत्मेति** । अहं चान्य इमे देवा इत्यत्राहमित्यस्मच्छब्दो मैत्रेयवाचक इति भ्रांतिनिरासाय तदर्थमाह ॥ **अहमिति** । आत्माऽहंशब्दाभ्यां चतुर्मुखरुद्रौ गृहीतौ । तयोस्तौ शब्दौ प्रमाणेनैव निर्वक्ति ॥ **गुणपूर्तेरिति** । यथाधिकारमिति शेषः । आत्मेतिशब्दो यस्मिंश्चतुर्मुखे स तथोक्तः । हरो रुद्र इंद्रादिभ्योऽहीनत्वतोऽहंशब्दवाच्य इत्यर्थः । अनेन ततः स्वयोग्यगुणैर्व्याप्तः पूर्ण इत्यात्मशब्दस्य चतुर्मुखे तथा न हीन इत्यहंशब्दस्य रुद्रे निर्वचनं सूचितं । निर्वचनादेवाहीन इत्यत्र हकारस्थेकारस्याकारनकारस्थाकारलोपश्च सूचितो भवति । यद्यप्येवमेतावधिकौ तथाऽप्येतौ ब्रह्मरुद्रौ न जानीत इत्यन्वयः । अतो भागवतीमायामित्यत्र मायाशब्दस्याविद्यार्थत्वभ्रांतिनिरासाय सिंहावलोकनन्यायेन विवक्षितमर्थमाह ॥ **भगवत इति** । स्वोक्तार्थे प्रमाणमाह ॥ **माया त्विति** । अत्रैव श्लोके आत्मवर्त्मेत्यस्य आत्मा परमात्मैव वर्त्म मार्गो यस्येत्यर्थमतीतिनिरासायानुवादपूर्वकं विवक्षितमर्थमाह ॥ **आत्मवर्त्मेति** । अनेनात्मनः परमात्मनः प्राप्त्यर्थं वर्त्म ज्ञानलक्षणमार्गो यस्माच्चतुर्मुखाद्भवति स आत्मवर्त्मेति विग्रहः सूचितः । चतुर्मुखोपदेशेन हरिप्राप्तिसाधनं ज्ञानं भवतीति भावः ॥ ३९–४० ॥ इति श्रीभागवततात्पर्यटि-

प्पण्यां सप्तमोऽध्यायः ॥ ३-७ ॥ छ

॥ हरिः ॐ ॥ क्रीडायामुद्यत इति श्लोके क्रीडायामुद्यतः प्रयत्नवतोऽर्हस्य योग्यस्य भगवत इति उद्यतोऽर्हस्येतिपद द्वयं हरिविशेषणमिति भ्रांतिनिरासाय क्रीडायामुद्यतोऽर्हस्येत्यत्र पदच्छेद प्रदर्श्यार्हस्येतद्व्याचष्टे ॥ क्रीडायामिति । सुत सुखं । अनेनार्हस्य जन्यसुखयोग्यस्य । पूर्णसुखस्येति यावत् । क्रीडायाः सकाशान्सुत सुखं भवतीति भागवतवाक्ययोजना सूचिता । अस्मिन्नेवार्थे चिक्रीडिषाऽन्यत इत्यत्रान्यतोऽन्यस्मादिति भ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ अन्यत इति । सार्वविभक्तिकस्त- सिरिति वचनात् षष्ठ्यर्थे तसिः । अन्यस्य स्वतः सृष्टयादन्यस्य । तस्य तात्पर्यार्थः ॥ अरतेरिति । नास्ति रतिर्यस्य सोऽरतिः तस्येति विग्रहः ॥ ३ ॥ भगवानेक इति श्लोके एष भगवानेक एव सर्वक्षेत्रेषु सर्वशरीरेषु अवस्थितोऽमुष्य भगवतः तत्र दुर्भगत्वं वा क्लेशो वा कुतः कर्मभिः कैः कर्मभिः भवतीति हरेर्दुर्भगत्वादिनिमित्तकर्मकप्रश्नः क्रियत इति भ्रांतिनिरासाय तत्तात्पर्यार्थमाह ॥ दुर्भगेति । सुपां सुपो भवंतीति वार्तिकवचनात्तस्येति षष्ठी तृतीयार्थेऽपि । तस्य हरर्दुर्भगक्लेशिशरीरस्थत्वात्तेनापि दुर्भगत्वा दिनाऽपि भाव्यमित्यर्थः । अनेनात्र किंशब्द आक्षेपार्थ इति सूचितं भवति ॥ ६ ॥ सेयं भगवतो मायेति श्लोके यत् दुर्भग देहस्थस्यापि तन्निमित्तक्लेशादिराहित्यं नयेन युक्त्या विरुध्यत सेयं तदिदं भगवतो माया भगवदाश्रिताज्ञानकल्पितमित्यन्यथाप्रतीति निरासाय सेयं भगवतो मायेत्यनूद्य व्याचष्टे ॥ तस्येति । तस्य हरेः । तन्न्याय्यमेवेत्यनेन नये न्याय्यमिति सप्तम्यंतपदं । सप्तमी तु द्वितीयार्थे तृतीयार्थे पचम्यर्थे च सप्तमीति श्रुतिगीतातात्पर्योदाहृतमहाव्याकरणवचनातत् तृतीयार्था । तथा च नये न्यायेन न विरुध्यते न्याय्यमेवति भागवतवाक्यं व्याख्यातं भवति ॥ न युज्यत इति । तदुक्तमित्येपोऽध्याहारः ॥ यद्वा ॥ नयेन विरु ध्यत इत्यस्य व्याख्यानं न युज्यत इति । उक्तन्याय्यमित्यध्याहारः । अस्मिन्पक्षे नयेनेति यथास्थितं तृतीयांतपदं । एवं श्लोकं

योजयित्वेदानीं तत्तात्पर्यार्थमाह ॥ दुर्भंगादीति । विमुक्तेश्वरस्य कार्पण्ययुतबंधनं नयेन न्यायेन विरुध्यते न युज्यत इति यदुक्तं तन्न्याय्यमेवेतीयं मायाऽयं महिमेति भागवतवाक्यं योजितं भवति । स्वोक्तार्थे प्रमाणमाह ॥ कथं देहेति । लिप्यतैव । यदि लिप्येत तर्हीत्येतावत् कथं न दुःखी स भवेदित्यतः पूर्वं संयोजनीयं । तथा दुःखी चेदित्यतःपूर्वं दुःखी भवेदेवेति योजनीयं । अनेन तात्पर्यश्लोकेन भागवतस्थप्रश्नवाक्यानि व्याख्यातानि भवंति । उर्वरिततात्पर्यवाक्यैः सेयं भगवतो मायेत्याद्युत्तररूपभागवतवाक्यानि व्याख्यातानि भवंति । मयता मायाशब्दवाच्यत्वं । महिम्न इति शेषः । मायामयं महामायमनामयं च प्राहुः । अतो देहस्थस्यापि । बंधादि राहित्यमिति शेषः । नन्वीश्वरः प्राकृतदेहवान् चेतनत्वात् जीववदित्यनुमानेनेश्वरस्य प्राकृतदेहवत्त्वसिद्धेः प्राकृतदेहस्याज्ञानाद्यवश्यं भावान्मायाशब्देनाज्ञानमेव ग्राह्यं । न चेश्वरस्याज्ञाने जगत्सृष्ट्यादिकर्तृत्वं न संभवतीति वाच्यं । जगत्सृष्ट्यादेर्मिथ्यात्वेन तत्कर्तृत्वस्य मिथ्यात्वादित्याशंका प्रमाणेनैव निराकुर्वन्नादौ ॥ अविलुप्तावबोधात्मेति प्रश्नश्लोकोक्ताविलुप्तबोधरूपत्वाख्यप्रतिपक्षहेतुना परानुमान निराकरोति ॥ अलुप्तबोधेति । युपरुपलुपविमन इति धातोर्भावे क्तप्रत्यये जाते लुप्तशब्दो मोहवाची । अयप्रत्ययः अत्यंताभाववाची । तेन नास्ति लुप्तं मोहो यस्मिन्स तथा । बोधो यथार्थज्ञानमेव स्वरूपं यस्य स तथा । अलुप्तश्चासौ बोधरूपश्चालुप्तबोधरूपस्तस्य भावस्तत्त्वं तस्मादिति हेत्वर्थः सिद्धः । तेन जीवे न व्यभिचारः । तस्य व्यतिरेकदृष्टांतत्वं च सिद्धं । भ्रांतिर्भ्रांतिविषयः । भ्रांतिवादाः भ्रांतिविषयं सृष्ट्यादिकं वदंतीति भ्रांतिवादाः ॥ ९ ॥ यथार्थेन विनेत्यादि श्लोकत्रये ईश्वरस्य विमुक्तस्येति पूर्वप्रकृतेश्वरस्यैवोपदेष्टृपदसामर्थ्येनात्मविपर्यय आनदाद्यात्मकस्वरूपाद्विपरीतो दुःखादिरूपः संसारस्तन्मोक्ष उच्यत इति भ्रांतिनिरासाय तत्तात्पर्यार्थमाह ॥ भ्रांत्या जीवस्येति । वासुदेवानुकंपयेत्यादेस्तात्पर्यार्थः ॥ ईशज्ञानादिति ॥१०-११-१२ ॥ ॥ यदेंद्रियेति श्लोके इंद्रियोपरमस्यार्थः इंद्रियोपरम एवार्थः प्रयोजनं यस्येति तत्पुरुषसमास-

भ्रांतिनिरासाय तत्पदं व्याचष्टे ॥ इंद्रियोपरमेति ॥ १३ ॥ साधु तद्व्याहृतमिति श्लोकार्धेऽप्यनमुपादनत्वेनाश्रयभूतात्ममा यया जीवाश्रिताविद्या हरेराभासत इत्यन्वयार्थभ्रांतिनिरासाय,विवक्षितार्थान्वयावाह ॥ स्वरूपसामर्थ्येति । स्वरूपसामर्थ्याश्रयं स्वरूपसामर्थ्यबलं सेयं भगवतो मायेत्याद्युक्तवचनं । उभयत्रापि भगवन्नित्यत्रोक्तमुभयं किमिति न ज्ञायते । तथाऽपार्थं निर्मूलं विश्वमूलमिति विशेषणत्रयस्य विशेष्यं च न प्रतीयते । तथा न यद्बहिरित्यस्यान्वयो यश्च मूढतमो लोक इत्यादिश्लोकद्वयस्य प्रकृत संगतिश्च न प्रतीयते । अतोऽपेक्षिताध्याहारेण तत्सर्वं दर्शयति ॥ अपार्थं चेत्यादिना । संबंधिनो भावः संबंधित्वं । संबंध एव आदिपदेनाहंकारो ग्राह्यः । अनेन देहादौ ममत्वरूपसंबंधः जगत्कारणं परं ब्रह्म चेत्युभयं दर्शितं भवति । तस्माद्देहादिसंबद्धपर ब्रह्मण उभयत्र देहादिसंबद्धे परब्रह्मणि धावति च । मन इति शेषः । तस्मादुभयत्र मनोधावनात् । तां चापीत्यत्र तच्छब्दापिश ब्दयोरर्थं दर्शयंस्तच्छब्दस्य क्रियान्वयं च दर्शयति ॥ तथाऽपीति । तां चापीत्यत्रापिपदस्यैवं व्याख्यानेन प्रतीतस्यापीत्यत्रापि शब्दो यद्यपीति व्याख्यायत इति सूचितं । तेन यद्यपि देहादिसंबद्धस्य प्रतीतिर्भवति तथाऽप्यनात्मनो देहादिसंबंधस्य प्रतीतस्य । भावे क्तप्रत्ययः । प्रतीतेरर्थाभावं प्रयोजनाभावं । उपलक्षणमेतत् । निर्मूलत्वं च निश्चित्य तां प्रतीतिं पराणुदे नाशयामीति भाग वतवाक्यं व्याख्यातं भवति । ननु सम्यक्त्वात्परोक्षिणो विदुरस्यापि बुद्धेः पारंगतत्वे सति तस्मादंतरितोऽस्मीति स्वस्मिन्बुद्धेः पारंगतत्वरूपगुणाभावं वदतस्तस्यासत्यवक्तृत्वदोषः स्यात् । तथा मैत्रेयेणापृष्टं गुणाभावं वदतो विदुरस्य निषिद्धापृष्टपरिभाषणे-नाचातुरत्वं स्यादित्याशंकां प्रमाणोदाहरणपूर्वकं परिहरति ॥ आत्मन इति । अपिपदं वदत इत्यनेन संबध्यते प्रथमस्तु विशे षार्थ उत्तरत्र संबद्धते । दमार्थं दम इंद्रियनिग्रहः । तद्रूपमर्थं वस्तु । निमित्तं कृत्वेति शेषः । विशेषेण वैराग्याद्धेतोरिति यावत् । आत्मनः स्वस्य गुणाभावं विद्यमानस्य गुणाभावं वदतोऽप्यसत्यता असत्यवक्तृता नैवास्ति । अपृष्टस्य च अपृष्टस्यापि पुरुषस्य

गुणायैव श्लाघ्यत्वादिगुणायैव भवति । स्वस्य गुणाभावोक्तिरिति शेषः । लोके तथा दृष्टत्वात् । न हि लोकेऽतिविरक्ताः पुरुषाः परैरपृष्टा अपि स्वस्मिन्विद्यमानं सद्गुणमाच्छाद्य तदभावं वदंतोऽसत्यवादिन इत्युच्यंते । नाप्यचतुरा भवति । प्रत्युतातिश्लाघनीया एव भवंति । इति व्यासस्मृतेः । गुणाभाव वदतो असत्यवादित्वाभावादिप्रतिपादकप्रमाणाद्विदुरो विद्यमानमनुभवसिद्धं बुद्धेः पारंगतत्वमन्यथा वैपरीत्येन नास्तीति वदति तस्मादं ।रितोऽस्मीत्यादिनेत्यर्थः । अविद्यमानमपीत्यनेन यद्विदुरस्य बुद्धेः पारगंतत्वमुक्तं तत्र प्रमाणमाह ॥ द्रोणेति ॥ १५ १८ ॥ सृष्ट्वाऽग्रे महदादीनीति श्लोके तेभ्यो विराजमुद्धृत्येत्यत्र विराज ब्रह्माडमिति भ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ विराजामिति । स्वोक्तार्थे प्रमाणं वदंस्तेनैव प्रमाणेन तमनुप्राविशद्विभुरित्यादि श्लोक व्याचष्टे ॥ ब्रह्माणमिति ॥ २१ ॥ यस्मिन्दशविधप्राणेति श्लोके इंद्रिये इंद्रियसहितप्राणस्य परमात्मनि प्रवेशः प्रतीयते । तथा यतः प्राणाद्वर्णा जाता इति वर्णानां प्राणजातत्वं च प्रतीयते । अतस्तन्निरासाय प्रमाणेनैव तं यथावद्व्याचष्टे ॥ अनुप्रविश्येति । अनेन भागवते यस्मिन्निति यत इति यच्छब्दो व्यत्ययेन प्रथमांतो हरिवाचकश्च । प्राणा वर्णादिति प्रथमा व्यत्ययेन द्वितीयार्थे । असृजदिति क्रियाऽध्याहारश्चेत्युक्तं भवति ॥ अनुप्राविश्य ब्रह्माणमिति तात्पर्यवाक्येन सृष्ट्वाऽग्रे महदादीनीति भागवतस्थं तमनुप्राविशद्विभुरिति वाक्यं व्याख्यात ॥ २३ ॥ ऋषीणां जन्मेति श्लोकार्धे वेदस्य च विकर्षणमिति वेदस्य विशेषणमुच्यत इति भ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ विकर्षणमिति ॥ २९ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामष्टमोऽध्यायः ॥ ३-८ ॥ छ ॥

॥ हरिः ॐ ॥ स्वमेव धिष्ण्यमिति श्लोके धिष्ण्यपदस्य गृहार्थत्वभ्रांतिनिरासायाधारार्थत्वमभिप्रेत्य तत्राभिधानं पठति॥ आधार इति । अनेन स्वस्य स्वयमेव धिष्ण्यमाधारमामनंति । स्वे महिम्नि स्थितेरिति श्रुतेरिति भागवतवाक्य व्याख्यातं

भवति ॥ ४ ॥ तस्यात्मसूक्ष्मेति श्लोके लोकानपीमान्दहश्चे स्वदेह इति पूर्वश्लोकोक्तस्य हर्यंतर्गतार्थस्य नाभिदेशादभिद्यतेति नाभिं भित्वा बहिरागमनमनुक्त्वा तस्यैव हर्यंतर्गतलोकात्मार्थस्योत्तरश्लोके स पद्मकोशः स हसोदतिष्ठदिति पद्मकोशत्वमुच्यत इति भ्रांतिनिरासाय तत्तात्पर्यार्थमाह ॥ उदकमिति । अनेन लोकानामपीत्यत्र लोकपदेनोदकमपि ग्राह्यं । उत्तरश्लोकेऽतर्गतार्थ पदेनोदकमेव ग्राह्यं । तथा शुष्यन्नित्यत्र वायुनेति शेषः पूरणीय इति सूचितं ॥ १३ ॥ स पद्मकोश इति श्लोके आत्मनां जीवानां योनिः कारणं हरिस्तत्सलिलं विद्योतयन्नित्यन्यथाप्रतीतिनिरासायात्मशब्दार्थं दर्शयन्नात्मयोनिरित्यस्य विग्रहं दर्शयति ॥ आत्मेति । अस्य पद्मकोशस्य योनिर्मूलं । अनेन बहुव्रीहिसमासः पद्मकोशविशेषणमित्युक्तं भवति ॥ १४ ॥ तल्लोकपद्ममिति श्लोके स एव विष्णुस्तल्लोकपद्मं प्राविशत् । तस्मिन्पद्मे स उ एव विष्णुरेव स्वयमभूदिति विष्णोरेव पद्म उच्यत इति भ्रांतिनिरासाय तत्तात्पर्यार्थमाह ॥ पद्मसंस्थितेति । तत्रैतद्बुद्ध्या विवेकेन समस्तेन पद्मपदेन संबध्यते ॥ यद्वा ॥ तत्र तस्मिन्सृष्टिकाले तस्मिन्नेव श्लोके सर्वगुणावभासमिति लोकपद्मस्य विशेषणमुच्यते । तस्य सर्वगुणानां ज्ञानादीनामवभासो यस्मिन्नित्यर्थभ्रांतिनिरासाय तदनूद्य यथावद्व्याख्याय तमुपपादयति ॥ सर्वगुणेति । अनेन सर्वगुणाः शब्दादयः अवभासंते यस्मिन्पद्म इति विग्रहः प्रदर्शितः । ननु पद्मस्य पृथिव्यात्मकत्वं यदुक्तं तदयुक्तं । अस्य पद्मस्योत्तरश्लोके चतुर्मुखासनत्वमुच्यते। पृथिव्यात्मकपद्मस्य चतुर्मुखासनत्वे प्रमाणाभावादित्यतस्तत्र प्रमाणमाह ॥ तस्येति । पृथिवी पृथिव्यात्मकं पद्मं तस्य चतुर्मुखस्यासनविधानार्थमासनसिद्धये उच्यत इत्यर्थः ॥ १५ ॥ क एष य इति श्लोकस्योत्तरार्धे सता सज्जनेनानुभाव्यमिति सच्छब्दस्य सज्जनार्थत्वभ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ सतेति । ब्रह्मणा परब्रह्मणा । अनेन सता हरिणाऽनुभाव्यमुत्पादयितुं योग्यमिति भागवतवाक्यं व्याख्यातं । कुतोऽयमर्थ इत्याशंकां समाख्यावाक्येन परिहरति ॥ स ब्रह्मेति । नुः स्यात्प्रश्ने विकल्पार्थे

प्रतीतानुनयार्थयोरिति विश्वप्रकाशाभिधानात्पुरतीतकालार्थे । तथा च पद्मं कुतः कदा स्यादिति नु अतीतकाले । आदाविति यावत् । संचिंत्य ब्रह्मणः परब्रह्मणः स्यादिति ब्रह्मा पश्चादचिंतयत् व्यजानादित्यर्थः ॥ १८ ॥ शेषभोगपर्यंक इत्यत्रैक शब्दस्य द्वितीयराहित्यार्थत्वभ्रांतिनिरासाय तथा स्वयं तदंतर्हृदयेऽवभातमित्यत्र सोऽजो विरिचः स्वमपश्यदिति तथा तस्मिन्स्वयं वेदमथो विधातेत्यत्र विधाता ब्रह्मा स्वयमेवाभूदिति स्वयं शब्दस्य स्वस्वार्थभ्रांतिनिरासाय चैकादिशब्दानां प्रमाणेनैव विवक्षितमर्थं दर्शयंस्तत्प्रसंगात्तेनैव प्रमाणेन ब्रह्मेशानादिभिर्देवैरित्यादौ स भवान्केवलो हर इत्यादिना भगवति प्रत्युक्तकेवलशब्दस्याप्यर्थमाह ॥ प्रधानवाचकमिति । प्रधानेति भावप्रधानो निर्देशः । तुर्विशेषे । चः समुच्चये । अत्रैक इतिशब्दः अनन्य इतिशब्दः केवल इतिशब्दः स्वयमितिशब्दश्च तुर्विशेषेण प्रधानवाचकः प्रधानत्ववाचक इति प्रत्येकमितिपदशब्दपदाध्याहारेण योजना द्रष्टव्या ॥ २२–२३ ॥ पुंसां स कामायेति श्लोकोत्तरार्धे नखेंदुमयूखभिन्नांगुलीत्यत्र नखेंदुमयूखैर्भिन्ना विदारिता अंगुलय इति भिन्नशब्दस्य विदारितार्थत्वभ्रांतिरंगुलिविशेषणत्वभ्रांतिश्च भवति । अतस्तन्निरासाय तदनूद्य व्याचष्टे ॥ भिन्नमिति ।अनेन नखानींदुरिव वर्तुलत्वेन कांतिमत्त्वेन च चंद्रसदृशानि ।मयूखस्त्विट् करज्वालास्वित्यभिधानात् । तेषां नखानां मयूखो दीप्तिर्यस्मिन्पादपद्मे तत्तथा । भिन्नमन्येभ्यो विलक्षण अंगुलय एव चारुपत्राणि दलानि यस्मिंस्तत्तथा । नखेंदुमयूख च ताद्भिन्न च तदंगुलीयचारुपत्रं नखेंदुमयूखभिन्नांगुलिचारुपत्रमिति विग्रहः सूचितः ॥ २६ ॥ परार्ध्यकेयूरेति श्लोकोत्तरार्धेऽव्यक्तमूलमित्यस्याव्यक्तं जडप्रकृतिर्मूलं कारणं यस्येत्यर्थभ्रांतिनिरासायाव्यक्तस्य मूलं कारणमित्यर्थमभिप्रेत्य तत्र प्रमाणं पठति ॥ तस्माद व्यक्तमिति॥२९॥ सूर्येंदुवाय्वग्नीति श्लोकोत्तरार्धे सूर्येंदुवाय्वग्न्यगमर्थमयं हरिमगमदगच्छदित्यन्यथार्थप्रतीतेस्त्रिधामभिरित्यस्यान्यथाप्रतीतेश्च तदर्थं यथावद्व्याचष्ट ॥ सूर्येंद्विति । अनेन त्रीणि धामानि वैकुंठादीनि यस्य विष्णोः स तथा । गच्छंतीति गमंतः

न गमंतोऽगमंतः । त्रिधाम्नोऽगमंतः अगमास्त्रिधामानः । सूर्यश्चेंदुश्च वायुश्चाग्निश्च सूर्येंदुवाय्वग्नयः । सूर्येंदुवाय्वग्नयश्च तेऽगमास्त्रिधामानश्च तैरिति विग्रहः सूचितः । तथा हरिं विहायागच्छाद्भिर्मुक्तैः सूर्यादीभिर्वृतामित्यर्थश्चोक्तो भवति । प्राधानिकैरित्यस्यार्थः ॥ प्राथमिकैरिति । स्वोक्तार्थे प्रमाणं वदंस्तेनैव प्रमाणेन तस्यां स चांभोरुहकर्णिकायामिति पूर्वश्लोकस्थस्य लोकमपश्यमान इति वाक्यस्य विद्यमानमपि लोकमपश्यमान इति विरिंचस्याज्ञत्वप्रतिपादकत्वभ्रांतिं पश्यमान इति वाक्यस्य विद्यमानमपि लोकमपश्यमान इति विरिंचस्याज्ञत्वप्रतिपादकत्वभ्रांतिं च निवारयति ॥ मुक्तेति । तत् तदा ब्रह्मान्याभावत एवान्यन्न ददर्श तस्तत्स्रष्टुमैच्छतेत्यर्थः ॥ ३१ ॥ इति श्रीभागवततात्पर्यटिप्पण्या नवमोऽध्यायः ॥ ३-९ ॥ छ ॥

॥ हरिः ॐ ॥ ज्ञातोऽसि म इति श्लोकोत्तरार्धे हे भगवन् त्वत् त्वत्तोऽन्यत्किमपि नास्ति । यदस्तीति वचनं तदप्यशुद्धं दुष्टं । त्वं मायया गुणव्यतिकरादविद्यारूपगुणाख्यविकारात् उरुर्बहुरूपो विभासीति यत् बहुरूपत्वं तदपि परमार्थतो नास्तीति जगतो मत्स्यादिहरिरूपाणां च मिथ्यात्वमुच्यत इत्यन्यथाप्रतीतिनिरासायापेक्षिताध्याहारेण तदर्थं सम्यग्व्याचष्टे ॥ स्वत इति । स्वतः स्वातंत्र्येणाशुद्धमज्ञानादिदोषयुक्तं । उरुशब्दार्थः ॥ स्वनानात्वमिति । यच्च स्वनानात्वं विश्वतैजसादिरूपाणां नानात्वं भिन्नत्वं भाति तदप्यसदेव । कुतः । स्थानभेदादेव प्रतीयमानत्वादित्यर्थः । स्वोक्तार्थे प्रमाणमाह ॥ एकोऽपीति । ईयते ज्ञायते ॥ १ ॥ रूपं यदेतदिति । श्लोकद्वये तदेतद्रूपं त्वयाऽऽदौ गृहीतं यन्नाभिपद्मादहमाविरास । अतोऽस्माद्रूपात्परमुत्तममन्यद्रूपं नास्तीति पद्मनाभकरूपस्यैवोत्तमत्वमुक्त्वा यद्भगवत आनंदमात्रं स्वरूपं पश्याम्यदस्ते स्वरूपमाश्रितोऽस्मीति पद्मनाभस्वरूपादन्यस्यैव रूपस्य ज्ञेयत्वमाश्रयत्वमुच्यत इति भाति । तदयुक्तं । तथात्वे चतुर्मुखाश्रयतज्ज्ञेयरूपस्यानुत्तमत्वं स्यात्पद्मनाभस्याज्ञेयत्वं च स्यात् । ततश्च ज्ञायते भगवत इत्यनेनार्थादुक्तं ज्ञेयत्वं बाधितं स्यादित्याशंका श्लोकद्वयस्यैकान्वयप्रदर्शनेन परिहरति ॥

यन्नाभीति । अतः प्रदर्शितमज्ञेयपद्मनाभरूपादन्यत्परं सर्वोत्तमं नास्तीत्यर्थः । यतोऽन्यत्परं नास्त्यतस्तस्यैव ज्ञेयत्वान्न ज्ञायत इत्यवद्यमित्युक्तं युक्तमिति शेषः । ननु यतो वाचो निवर्तंत इत्यादिश्रुत्यादिनैव हरेरज्ञेयत्वस्योक्तत्वात्कथं न ज्ञायत इत्यस्य दुष्टत्वमित्यत आह ॥ अत्युत्तमेति । अत्युत्तमस्यात्युत्तमभगवद्विषयसाकल्यज्ञानस्यापेक्षया निषेधापेक्षया यतो वाच इत्यादिप्रमाण । प्रवृत्तमिति शेषः । यतो वाच इत्यादिप्रमाणं साकल्येन विष्णोर्ज्ञेयत्वनिषेधकं । न ज्ञायत इति भागवतवाक्यं विष्णोरसाकल्येनाज्ञेयत्वनिषेधकमिति भावः । आदौ गृहीतं रामकृष्णादिसर्वरूपापेक्षया प्रथमगृहीतमिति पद्मनाभरूपस्यागंतुकत्वभ्रांत्या पूर्वमभावभ्रांतिर्भवत्यतस्तन्निरासायादौ गृहीतमित्यस्य तात्पर्यार्थमाह ॥ अनादीति । गृह्यते तदुपासनयोग्याधिकारिणं प्रति प्रदर्श्यत इत्यर्थः । स्वोक्तार्थे प्रमाणमाह ॥ यत्तदिति । अव्यक्ता स्वप्रसादं विनाऽज्ञेया । तस्मात् क्षीरसागरमध्यगतहरिरूपात् । पश्यामि विश्वसृजमित्यस्मिन्नर्थे भूतेंद्रियात्मकमित्यनेन हरेर्भूतेंद्रियैक्यमुच्यत इति भ्रांतिनिरासाय तत्त्वपदं व्याचष्टे ॥ भूतेति । आत्मकं आदानादिकर्तारं । आत्मशब्दस्यादानादिकर्तृत्ववाचकत्वे प्रमाणमाह ॥ यच्चेति । आदिपदेन यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति भण्यत इति श्लोकशेषो गृह्यते ॥ २—३ ॥ ये तु त्वदीयेति श्लोके त्वदीय संबंधी यश्चरणः पादः स एवांबुजकोशस्तस्य गंधमिति हरिपादस्य देवदत्तदेहपादवद्धरिदेहैकदेशत्वं प्रतीयते । तथा गंधशब्देन पृथिवीगुणसुरभ्यादिगंधः प्रतीयते । तदयुक्तं । प्रमाणबाधित्वात् । पृथिवीगुणगंधस्य श्रोत्रेंद्रियेण ज्ञानासंभवाच्चेत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ हृदीति । अनेन चरणः क्षीराब्ध्यादिस्थितभगवन्मूलरूपं अंबुजकोश इव चरणांबुजकोशस्तेन सहितो गंधो हृदिस्थितहरिरूपमिति विग्रहः सूचितः । यत्त्वित्यन्वयः । सः तत्त्रूपगंधः गंधशब्देनोच्यत इत्यर्थः । स्वरूपं त्विति तुशब्दोऽप्यर्थः । सर्वमित्यनेन संबध्यते । तेनैकदेशत्वव्यावृत्तिः । पादेन

पादशब्देन । ननु त्वदीयेति हरिसंबंधित्वेनोक्तस्य हरिभिन्नस्य चरणांबुजकोशगंधस्य हरिरूपत्वेनांगीक्रियमाणे नेह नानास्ति किंचनेत्यादिश्रुतिबाधः स्यादित्यत आह ॥ गंधेति । गधगंधवतोरित्येतत्कार्यकारणयोश्चैवेत्यादितत्त्वविवेकश्लोकोक्तानामुपलक्षकं । तेन क्वचनेत्येतदुपपन्नं । कार्यकारणादिषड्राशिषु मध्ये क्वचन कस्मिन्नपि राशौ भेदोऽत्यंतभेदो नेष्यते । तस्माद्धरिगंधयोस्त- द्राशिस्थत्वाद्भेदः । नैवेति वाक्यशेषः । यावद्द्रव्यभावित्वाद्भेदाभेदौ च न स्तः । विशेषबलात्त्वदीयेत्यादिव्यपदेशोऽपि युज्यत इति हृदय । गंधगंधवतोरित्यत्र गंधपदं चरणांबुजकोशस्याप्युपलक्षकं ॥ ५ ॥ यावत्पृथक्त्वमिति श्लोके आत्मनो जीवस्य भगवतः सकाशात्पृथक्त्वं भेदस्तत् यावत् यदा मायाबलं मायया अज्ञानेनैव बलं यस्य तत्तथाऽविद्याकल्पितं पश्येत्तावत्तदाऽस्य संसृतिः प्रतिसंक्रमेत न पश्यतीति जीवेश्वरभेदमिथ्यात्वज्ञानेन मोक्ष उच्यत इत्यन्यथाप्रतीतिनिरासायादौ मायाबलमित्येतदनूद्य व्याचष्टे ॥ मायाबलमिति । अनेन मायाया बलं सामर्थ्यं यस्मिन्पृथक्त्वे तत्तथा । भगवदिच्छाधीनमिति भागवतपदं व्याख्यातं । नन्वत्र लक्ष्म्याद्यनेकार्थकमायाशब्देन भगवदिच्छैव कुतो गृह्यत इति चेत् । उच्यते। अत्र यदा जीवस्य पृथक्त्वं मायाबलाद्भवतीति पश्येत्तदा संसृतिर्न पश्यतीति पृथक्त्वनियामकत्वेन मायाज्ञानं संसृतिनिवृत्तिसाधनमुक्तं । तेनास्य मायायाः संसृतिनिवृत्तिहेतुज्ञान विषयत्वमघटितानादिसंसारनिवृत्तिरूपमकारयटकशक्तिमत्त्वमीश्वराभेदादिकं चोक्तं । तल्लक्ष्म्यादौ न संभवत्यतो भगवदिच्छयैव ग्राह्या न लक्ष्म्या इत्याशयवान्प्रमाणेनैव मायाशब्दानां भगवदिच्छादीनां परस्परव्यावर्तकधर्मान्दर्शयन्स्वोक्तार्थं द्रढयति ॥ ज्ञेयत्व मिति । ज्ञेयत्वं मोक्षसाधनज्ञानविषयत्वं । अत्रोक्तज्ञेयत्वादयस्तत्तद्धर्मा मायाशब्दार्था एव ज्ञातव्याः । कथमिति चेत् । इत्थं । मीयत इति मायेति व्युत्पत्त्या ज्ञेयत्वं मायाशब्दार्थः । माङ् मान इति धातोः कर्मणि यप्रत्यये टापि च मायेति रूपसिद्धिः । प्रधानमय इत्याहुः । प्राधान्यान्मायता भवेदित्येतत्स्कंधाष्टमाध्यायतात्पर्योदाहृतभाल्लवेयश्रुतिवचनान्माया प्रधाना । प्राधान्यं तु

दुर्घटघटनाधिकशक्तित्वमेव । एवमुत्तरत्र सर्वत्रापि धातोरनेकार्थत्वं । माधातोरेव कर्त्राद्यर्थे यथासंभवं औणादिके प्रत्यये मय मायाशब्दरूपं बोध्यं । मायाशब्दस्य तादात्म्यार्थविवक्षयाऽभेद ईश्वरेणापीत्यापि मायाशब्दार्थ एव । माति निर्माति उत्पादयति जगदिति मायेति व्युत्पत्त्या सृष्ट्यादावंतरंगतेत्यपि मायाशब्दार्थ एव । मा निर्माण इति धातोः कर्तरि यप्रत्यये टापि च मायेति रूपसिद्धिः । तद्भार्यात्वं सुरूपता तस्य विष्णोर्भार्यात्वमेव स्वरूपं यस्या सा तद्भार्यात्वसुरूपता । तस्या भगवत्तंत्रता स्वतंत्रता । मयः प्रधानो हरिस्तत्संबंधिनी माया । संबंधस्तु नियम्यनियामकभावो भार्यापतिभावश्चेत्यभिप्रेत्य भगवत्तंत्रता तद्भार्यात्वसुरूपतेत्यपि मायाशब्दस्यैवार्थ उक्तः । पापमेनोमयं चाघो वृजिनं दुरितं तथेत्यभिधानान्मयःशब्दो दोषवाचीति दोषयुक्तेत्यापि मायाशब्दार्थ एव । मायाशब्दस्यैव विकारार्थत्वविवक्षया परिणामिनीत्यपि मायाशब्दार्थ एव । मयशब्दस्य दोषार्थत्वान्माति जानातीति व्युत्पत्त्याऽत्र दोषाश्चेतनता तथेत्यपि मायाशब्दार्थ एव । अनेन पृथक्त्वस्य लक्ष्म्याद्यनधीनत्वमपि ज्ञातव्यमिति सूचितं । एवं माया शब्दार्थमुक्त्वेदानीं पृथक्त्वशब्दस्य जीवेश्वराभेदार्थत्वभ्रांतिनिरासाय प्रमाणेनैव तदर्थं दर्शयन्निंद्रियार्थमित्यस्यापि तेनैव प्रमाणेनार्थं दर्शयति ॥ ध्याय इति । तुरवधारणे । इच्छाबलादित्यनेन संबध्यते । जीवस्येंद्रियमुक्तये ध्याये मंस्य इत्यादिविभक्तता विभागेनेच्छा हरेरेच्छाबलादेव भवतीत्यर्थः । व्यर्थाऽपि दुःखनिवहं वहती क्रियार्थेति व्याहतमुच्यत इत्यतो व्यर्थेत्यस्यान्वयं दर्शयन्क्रियार्थेत्येतद्व्याचष्टे ॥ इंद्रियाणामिति । अनेन देहगेहादिसंसृतिर्यदिंद्रियार्थं इंद्रियाणां भोगार्थं भवति । तथा व्यर्थाऽपि यदा धर्मादिक्रियार्था भगवदाराधनादिरूपधर्मादिसाधनक्रियार्था भवति । तदा सार्थकेति भागवतवाक्यं व्याख्यातं ॥ ततश्चैवं श्लोकार्थः ॥ आत्मनो जीवस्येंद्रियार्थमिंद्रियभोगार्थं पृथक्त्वं ध्याये पश्यामीत्यादिविभक्तं विभागेनेच्छा । इदं पृथक्त्वं भगवतो मायाबलादेव भवतीति मुक्तियोग्यजनो यावत् यथा पश्येत्तावत् । तदा ससृतिर्देहादिसंसारः प्रतिसंक्रमेद्विवर्तेत । कीदृशी

संसृतिः । इंद्रियार्थैरिंद्रियाणां भोगार्थं व्यर्थाऽपि यदेंद्रियभोगार्थं भवति तदा व्यर्थाऽपि क्रिया यदा भगवदाराधनादिक्रियार्थं भवति तदा सार्थकेति ॥ ९ ॥ अध्याहृतार्थेति श्लोकेऽर्थाश्च करणानि चार्थकरणानीति द्वंद्वभ्रांतिनिरासाय विवक्षितविग्रहं दर्शयति ॥ अर्थैरिति । अर्थैर्विषयैः करणानींद्रियाणि । अनेनाध्याहृतान्यर्थैः करणानि येषां ते तथेति विग्रहः सूचितः । नन्विदमयुक्तं । विषयैरिंद्रियाहरणवतां जागरणमेव स्यान्न तु निःशयनं । तस्येंद्रियोपरमरूपत्वात् । अतोऽर्थाश्चेंद्रियाणि चेत्ये वोचितं । न त्वर्थैरिति चेन्न । स्यादेतत् । यदि निशीथस्य प्रसिद्धकालावयवरात्र्यर्थं स्यात् । न चैवं । किं त्वज्ञानार्थत्वमेवे त्याशयवानज्ञानार्थत्वे प्रमाणमाह ॥ अज्ञानं त्विति ॥ १० ॥ यद्यद्धिया त इति श्लोकार्थे ते उपासका धिया यद्यद्विभा वयंति ध्यायंति तत्तद्वपुः प्राप्नोषीति हरेस्तत्तद्वपुःप्राप्तिरुच्यत इति भ्रांतिनिरासायापेक्षिताध्याहारेणान्वयमाह ॥ तत्तद्वपुरिति । अनेनोपासकास्ते तव यद्यत् यादृशं यादृशं वपुर्भावयंति तेषां वपुस्तादृशं तादृशं वपुः प्रणयसे प्रापयसि । मुक्ताविति शेषः । इति भागवतवाक्यं व्याख्यातं भवति । स्वोक्तार्थे श्रुतिस्मृती दर्शयति ॥ यादृश इति । तदेव भवति तथैव भवति ॥ ११ ॥ नाति प्रसीदसीति श्लोके यत्तु यथा सर्वभूतदयया त्वमतिप्रसीदासि तथा हृदि बद्धकामैः सुरगणैरुचितोपचारैराराधितोऽपि नाति प्रसीदसीति देवापेक्षया भूतदयावतो मनुष्यादेर्भगवदतिप्रसादमात्रत्वमुच्यत इति भ्रांतिनिरासाय श्लोकं यथावद्व्याचष्टे ॥ सर्वं भूतेति । अत्र यथा तथेति शेषपूरणेनातिप्रसीदसीत्यस्य पूर्वत्र संबंधेन च योजना कर्तव्या । स्वव्याख्याने प्रमाणमाह ॥ आराधित इति । भक्तिज्ञानग्रहणेन भागवतस्थदयापदं ज्ञानाद्युपलक्षणमिति सूचितं । अत्रापि यथाऽतिप्रसीदाति तथा प्रसन्न स्त्वामित्येतावच्छेषेण योजना कर्तव्या । किमाक्षेपे ॥ १२ ॥ शश्वत्स्वरूपमहसैवेति श्लोके नितरां वीतो नष्टो भेदमोहो जीवेश्वरादिभेदविषयो मोहो मिथ्याज्ञानं यस्येति जीवेश्वरादिभेदस्य मोहविषयत्वेनासत्यत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव

भेदमोहशब्दार्थं दर्शयंस्तत्पदं व्याचष्टे ॥ ईशस्येत्यादिना । सः भेदमोहः । हरौ सदा नास्ति । अपि यद्यपि हरेरन्येषां सतां क्वचिदसुरावेशेन । भेदमोहो भवतीति शेषः । तथाऽपि तेषां स भेदमोहस्तत्प्रसादेन हरिप्रसादेन शनैर्यात्यपगच्छति नश्यतीत्यर्थः। अत्र सत्पदक्वचित्पदयोर्ग्रहणेनासतां सदाऽस्ति कदाऽपि न नश्यतीति सूचितं । भागवते क्वचिन्निपीतभेदमोहायेति पाठः । तत्र नितरां पीतः ग्रासितो निरस्त इत्यर्थः ॥ १४ ॥ यस्यावतारगुणकर्मेति श्लोके ये विवशाः स्त्रीपुत्रादिपरवशाः सन्तो यस्य हरेर्नामानि गृणंति तेनैकजन्मकृतं पापं हित्वाऽपावृतमज्ञानावरणरहितं परं ब्रह्म संयांतीति स्त्र्यादिविषयासक्तानामभक्तानामपि हरिगुणकर्मादिविषयनामकीर्तनमात्रेण मोक्ष उच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव श्लोकतात्पर्यार्थं दर्शयन्नादौ विवशा इत्यत्रापेक्षितं शेषं पूरयति ॥ भक्त्येति । विः पक्षिपरमात्मनोरित्यभिधानात् । भक्त्या वेः विष्णोर्विशेषेण वशा इत्यर्थः । उक्तार्थे प्रमाणमाह ॥ य इति । विष्णोरित्युभयत्रापि संबध्यते । विष्णोर्विशेषेण वशा इत्यर्थः । अनेन विवशा इति भागवतवाक्येपीत्युभयार्थकमित्युक्तं भवति । तात्पर्यप्रमाणे कैमुत्योक्त्या ये नामानि गृणंति तेऽपि यदा ऋतं ब्रह्म संयांति तदा ये यस्यावतारगुणकर्मविडंबनानि गृणंति ते ऋतं संयांतीति किमु वक्तव्यमिति भागवतवाक्ययोजना सूचिता भवति ॥ १५ ॥ यो वाऽहमिति श्लोके भगवान् स्थित्युद्भवप्रलयहेतवोऽहं ब्रह्मा गिरिशश्च विभुर्विष्णुश्चेति स्वयमेव भूत्वा बद्ध इति हरेरेव चतुर्मुखादिस्वरूपत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ब्रह्मादीति । प्रथमस्तु रवधारणे । तन्नियामकेत्यनेन संबध्यते । द्वितीयोऽप्यवधारणे । तद्व्यावर्त्यम् ॥ नान्यथेति । तत्रैव श्लोके त्रिपादित्यस्य त्रयः पादा यस्येति त्रिविक्रमरूपार्थत्वप्रतीतिनिरासाय प्रमाणेनैव तदर्थमाह ॥ अनंतासनेति ॥ १६ ॥ लोको विकर्मेति श्लोके तस्मै अनिमिषायेति हरेरनिमिषाख्यजडकालैक्यमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव हरौ काले

चानिमिषशब्दप्रवृत्तिनिमित्तमाह ॥ नित्यज्ञानेति । लवकाल इत्युपलक्षणं । क्षणकालादिकालोऽपि ग्राह्यः । अत एव लवादावित्येतदुत्तरत्रापिशब्दो गृहीतः । चो यस्मादित्यर्थे । एवशब्दो नित्यज्ञानसदृशेत्यनेन संबध्यते । यस्मात्तात्त्विकमपि तस्मिन् लवकालमात्रे विद्यमानमपि लवकालमीश्वरो नित्यं पश्येत्तस्मादनिमिषो हरिरित्यर्थः । अनेन निमिषानिमिषौ कालमभदे । क्षि निमीलन इति विश्वप्रकाशाभिधानान्न विद्यते निमेषोऽक्षिनिमीलनं लवमात्रकालेऽपि यस्य हरेः सोऽनिमिष इति तस्य विग्रहः सूचितः । तथा हरावनिमिषशब्दप्रवृत्तिनिमित्त नित्यज्ञातृत्वं काले तु नित्यज्ञेयत्वामिति सूचित । अत्र तात्कालिकं लवकालं पश्ये दित्यनेन लवस्य लवमात्रावस्थायित्वं क्षणस्य क्षणमात्रावस्थायित्वं कलाकाष्ठादेः स्वस्वकालमात्रावस्थितत्वं चेश्वरप्रत्यक्षसिद्ध मित्युक्तं भवति । तेन क्षणादयःक्षणिकास्तद्विशेषा इत्यादिभारततात्पर्यनिर्णयोक्तं क्षणादेः क्षणिकत्वादिकं प्रमापितं भवति ॥ ॥ १७ ॥ रेमे निरस्तेत्युत्तरार्धे निरस्तरतिरिति हरेः सुखराहित्यमुच्यत इति भ्रांतिनिरासाय पदच्छेदं प्रदर्श्य तद्व्याचष्टे ॥ अनिरस्तेति ॥ १९ ॥ सायं समस्तेति श्लोके समस्तजगतामात्मा स्वरूपमित्यन्यथाप्रतीतिनिरासाय प्रमाणेनैवात्मशब्दार्थमाह॥ आत्मेति । सदेहो देहसहितो जीवश्च जीवरहितो देहश्च केवलजीवश्च मनश्च बुद्धिश्च त्वयं च तथा ब्रह्मा चतुर्मुखोऽपि क्रमशोऽ मुख्यात्मशब्दार्था इत्यर्थः । उत्कर्षो ह्यात्मतेत्यनेन समस्तजगतां सकाशादात्मा उत्कृष्ट इति भागवतवाक्य व्याख्यातं भवति ॥२२॥ एष प्रसन्नवरद इति श्लोके आत्मशक्त्या रमयेति रमाया हरिसामर्थ्यैक्यं प्रतीयते । तथा रमया सह यद्यत्करिष्यतीत्यनेन रमासहायं विना हरेः कार्यकरणासामर्थ्यं च प्रतीयते । अतस्तन्निरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ स्वसामर्थ्यादिति । स एष केशवः सर्वाणि कर्माणि स्वयमेव रमासहायं विनैव कुरुते । रमया सह कानिचिदेव कुरुते । तान्यपि स्वसामर्थ्यादेव स्वेच्छयैवेत्यर्थः । अत्र स्वसामर्थ्यादित्यनेनात्मशक्त्येत्येतद्व्याख्यातं भवति । सहेत्यनेन रमाया आत्मशक्तेर्भेदः सूचितः ॥२३॥

**मा वदे गर्भगा** इति श्लोके भवान्यन्मां प्रार्थयते तन्मायापूर्वमेव संपादितमित्युच्यते । तदयुक्तं । विरिंचप्रार्थितस्य लोकसंस्थानाज्ञाननिमित्तकविषादाभावस्य तत्प्रार्थनात्पूर्वमेव हरिणा संपादितत्वादितत्यस्तत्तात्पर्यार्थमाह ॥ **प्रार्थनमपीति** । मत्प्रेरणं मम प्रेरणं यस्मिन्प्रार्थनाविषये तत्तथा । न केवलं ज्ञानादिकं किंतु प्रार्थनमपीत्यपिशब्दार्थः । अननाग्रे यत्प्रार्थ्यते प्रार्थनां करोति तत्प्रार्थनमपि मयाऽऽपादितं कारितं मत्प्रेरणयैव त्वया कृतमिति भागवतवाक्यं व्याख्यातं भवति ॥ २९ ॥ **भूयश्च तप** इति श्लोके तपःकृच्छ्रचांद्रायणादिकं पंचरात्राद्यर्थप्रतीतिनिरासाय प्रमाणेनैव तदर्थमाह ॥ **तपश्चेति** । निष्ठा । हराविति शेषः ॥ ३० ॥ **तत आत्मनीति** श्लोके आत्मनीत्यस्य जीव इति आत्मन इत्यस्य परमात्मन इति च भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **देहदेहिन इति** । अनेनात्मनो देहिन आत्मनि देह इत्यन्वयार्थौ दर्शितौ । तस्मिन् देहस्थिते । अंगुष्ठमात्रेऽपि परे उत्तमे हरावित्यर्थः । नन्वंगुष्ठपरिमाणे हरौ कथं सर्वलोका प्रतिष्ठिता इत्यत उक्तं परशक्तिरिति । तत्रैव श्लोके मयीत्यस्मच्छब्दस्य चतुर्मुखस्तुतरूपत्वार्थप्रतीतिनिरासायापेक्षिताभ्याहारेणात्मनीत्यावृत्त्य तेनान्वयमाह ॥ **आत्मनीति** । आत्मनि देहे । अनेन देहांतर्गतरूपिणो विरिंचस्तुतरूपस्य चैक्यमुक्तं भवति ॥ ३१ ॥ **यदा रहितामिति** श्लोके स्वरूपेण जीवस्वरूपेण मयोपेतमिति ब्रह्मस्तुतहरिणा स्वस्वजीवैक्यमुच्यत इति भ्रांतिनिरासाय तदनूद्य तत्तात्पर्यार्थमाह ॥ **स्वरूपेणेति** । परमेश्वरसहितमित्यनेन मया मम स्वरूपेण मत्स्थरूपेणेत्यर्थः सूचितः । व्यत्ययेन मयेति तृतीया षष्ठ्यर्थ इति सूचितं । स्वरूपेण मयोपेतमित्येतत्स्वयं व्याख्यायेदानीं सर्वश्लोकं प्रमाणेनैव व्याचष्टे ॥**त्यक्त्वेति** । देहाद्यात्मभावं देहादावात्मभावं जीवत्वभ्रांतिं त्यक्त्वा हृदिस्थिते जीवरूपे आत्मभावं जीवत्वं दृष्ट्वा तमपि हरिपदाब्जेन सह संस्थितं च । उत्तमानां तु पादेन सर्वं रूपं तु कथ्यत इति ब्रह्मतर्कवचनाद्धरेः पादाब्जेन स्वहृत्स्थस्वरूपाख्यपद्मेन सह संस्थितं । तदाश्रितं च यदाऽऽपरोक्ष्यात्पश्यति तदाऽसौ मुक्तिं व्रजतीत्यर्थः । अत्र त्यक्त्वा देहा

घात्मभावमित्यनेन भूतेंद्रियगुणाशयैः भूताद्यात्मकदेहाद्यात्मभावेन रहितामिति भागवतवाक्यं व्याख्यातं । हरिपादाब्जसंस्थितमित्यनेन स्वरूपेण मयोपेतामित्येतद्व्याख्यातं भवति ॥२३॥ यन्मां त्वं मन्यस इति श्लोके भूतेंद्रियगुणात्मभिरित्यत्रायुक्तं मां मन्यस इति हरेर्भूतादिसाहित्यमात्रप्रकारकज्ञानविषयत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ भूतेंद्रियेति । भूतेंद्रियगुणात्मभिरित्यत्रात्मशब्दार्थः ॥ मनोबुद्धीति । मनोबुद्ध्योरात्मशब्दार्थत्वं त्वात्मशब्दस्य मुख्यार्थ इति प्रकाशसंहितावाक्येनैवोक्त । सर्वेशः सर्वेषु जानाति परोक्षतया पश्यन्पश्यति अपरोक्षीकरोतीति । अनेन सुपां सुपो भवंतीति वचनाद्भागवते भूतेंद्रियगुणात्मभिरिति तृतीया सप्तम्यर्थ इत्युक्तं भवति । नियामकतयेत्यद्ध्याहारः । सत्यवलान्नियामकतयेत्येतद्धलाच्च तात्पर्यस्थं भागवतस्थं च युक्तपद संस्थितमिति व्याख्येयं ॥ ३६ ॥ यदस्तौषड्गुणमयं सत्त्वादिगुणात्मकं निर्गुणं ज्ञानानंदादिगुणशून्यमित्यन्यथाप्रतीतिनिरासाय परस्परव्याहतिपरिहाराय च प्रमाणेनैव तत्पदं व्याचष्टे ॥ सर्वज्ञादीति ॥ ३९ ॥ ननु पूर्वश्लोके लोकविजयेच्छया कृतस्तोत्रेण हरिप्रीतिरुच्यते । साऽयुक्ता । लोके जयकामनया कृतस्तोत्रस्य काम्यकर्मत्वं । काम्यकर्मणस्तु निषिद्धत्वेन हरिप्रीतिजनकत्वाभावादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ आधिकारिकेति । स्वाधिकारादिकामनं स्वस्य विष्णुना दत्तौ जगत्सर्जनाद्यधिकारस्तस्याधिकामनमित्यर्थः । समासस्थमधिकामनपदं बुद्ध्या विविच्य भक्त्यादेरित्यनेनापि संबंधनीयं । यद्भक्त्यादेरधिकामनं तदपि विष्णोः प्रीतये भवतीत्यपिशब्दसंबंधः ॥ यद्वा ॥ अपिशब्दः कैमुत्यार्थकः । स्वाधिकाराधिकामनमपि यदा विष्णोः प्रीतये भवति । तदा सदा विष्णुभक्त्यादेरधिकामनं विष्णुप्रीतये भवतीति किमु वक्तव्यमिति । अनेन ब्रह्मण आधिकारिकदेवत्वात्तस्य लोकविजये काम्यकर्म निषिद्धं न भवतीत्युक्तं भवति ॥४०॥ पूर्तेन तपसेति श्लोके पूर्तादेः राज्यं निःश्रेयसं फलमुक्त्वा तच्च प्रसिद्धदेशाद्याधिपत्यं न भवति किंतु मत्प्रीतिरेवेत्युक्तं । तत्र हरिप्रीतेः राज्यनिःश्रेयसत्वं कथं घटतेऽसंभवादित्यतस्तद्घटनायान्वयं प्रदर्श्य

व्याचष्टे ॥ निःश्रेयसमिति । अनेन निःश्रेयसपदं मोक्षार्थकं प्रथमा च सप्तम्यर्थ इत्युक्तं भवति । एवशब्देन हरिप्रीति मुख्यतो राज्यशब्दार्थत्वं सूचितं । अनेन पूर्तादेर्न साक्षादेव राज्याद्यैहिकामुष्मिकफलसाधनत्वं किंतु हरिप्रसादद्वारैव । अन्यथा कर्मणा त्वधमः प्रोक्तः प्रसाद इत्यादिप्रमाणविरोधः स्यादित्युक्त भवति । स्वव्याख्याने प्रमाणमाह ॥ मुक्तस्येति । अनु रज्यते अपेक्षते । रंजु राग इति धातोः । रागोऽपेक्षा । मुक्तस्येति षष्ठी तृतीयार्थे ॥ ४१ ॥ नन्वहमात्माऽऽत्मनामिति श्लोकेऽहं प्रेयसामपि सकाशात्प्रेष्ठो हरेः सर्वप्रियवस्तुभ्योऽतिशयेन प्रियत्वमुच्यते । तदयुक्तं । सर्वेषां सर्वापेक्षया देहादिकं प्रियं । ततोऽन्यदतिशयेन प्रियं नास्तीत्येतदनुभवसिद्धमतो हरेः प्रेष्ठत्वमनुपपन्नमित्याशंकापरिहाराय भागवतदेहादिर्यत्कृत इति वाक्यं प्रवृत्तं । तत्रैतच्छंकापरिहारः स्पष्टं न प्रतीयते । ततो यथा शंकापरिहारः स्यात्तथा प्रमाणेनैव तद्व्याचष्टे ॥ सर्वतोऽपीति । अपिपदद्वयं यद्यपि तथापीत्यर्थः । यद्यप्यात्मा स्वदेहादिसर्वतः प्रियस्तथापि तस्य स्वात्मादेः प्रियतां हरिरेवातिप्रियः स्वसंनिधानेनापादयति करोतीति यद्यस्मात्तस्मात्स्वात्मादेः स्वसंनिधानेन प्रियत्वकर्तृत्वाद्धरेः स्वात्मनोऽपि जीवदेहादिभ्योऽतिप्रिय इत्यर्थः अत्र प्रियतामापादयति यदित्यनेन भागवते यत्कृत इत्यत्र यदिति यस्मादित्यर्थे । कृत इति सप्तमी प्रथमार्थे । ततःपूर्वं मया देहादेः स्वसंनिधानेन प्रियत्वमिति शेषः पूरणीय इत्युक्तं भवति । तेन यद्यस्मान्मया स्वात्मदेहादेः स्वसंनिधानेन प्रियत्व कृत तस्मात्सर्वासां प्रेयसां प्रेष्ठो हरिरिति भागवतवाक्यं योजितं भवति ॥४२॥ इति श्रीभागवततात्पर्यटिप्पण्यां दशमोऽध्यायः॥३–१०॥

॥ हरिः ॐ ॥ विरिंचोऽपीति श्लोके विरिंच आत्मनि हरौ आत्मानं स्वरूपमाविश्यैक्येन संचित्य तपश्चक्र इति चतुर्मुखस्य हर्यैक्यमुच्यत इति भ्रांतिनिरासाय तत्तात्पर्यार्थमाह ॥ आत्मनीति ॥ ४ ॥ धर्मस्य हीति श्लोके निमित्तस्य जगत्कारणस्य परमेष्ठिनो धर्मस्यैतावान्विपाक इति पदच्छेदार्थयोर्भ्रांतिनिरासाय स्वयं पदच्छेदार्थौ दर्शयति ॥ अनिमित्तस्येति । अनेन अः

विष्णुर्निमित्तमुद्दिश्य यस्य धर्मस्येति विग्रहः सूचितः । तस्य तात्पर्यार्थः ॥ ब्रह्मार्पणेत्यादि । अकारस्य विष्णुवाचित्वे प्रमाणमाह ॥ अः इतीति ॥ ९ ॥ यदात्थेति श्लोके हरेः कालाख्यं लक्षणं व्यावर्तकधर्मं वर्णयेति जडकालस्य हर्यसाधारणधर्मत्वमुच्यत इति भ्रांतिनिरासायाभिधानेन लक्षणशब्दार्थमाह ॥ लक्षणमिति । अनेन कालांतर्गतकालनामकभगवद्रूपं वर्णयेति भागवतवाक्यं व्याख्यातं ॥ १० ॥ गुणव्यतिकरा इति श्लोके गुणादीनां सत्त्वादीनां व्यतिकारा विकारभूताकारो देहो यस्येति हरेः प्राकृतदेहत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तत्पदं व्याचष्टे ॥ गुणेति । अनेन गुणानां सत्त्वादीनां व्यतिकरं वैषम्यावस्थां आ सम्यक्करोतीति गुणव्यतिकाराकार इति विग्रहः प्रदर्शितो भवति । अत्र करोतीत्यनेन यत्कर्तृत्वमुक्तं तदंतर्गताथमाह ॥ तद्द्रष्टेति । अत्रैव श्लोकेऽप्रतिष्ठित इति हरेः सर्वात्मना स्थित्यभाव उच्यते । सोऽनुपपन्नः । तथात्वे शशविषाणवद्धरेरत्यतासत्त्वं स्यादित्याशंकां शेषपूरणेन परिहरति । अप्रतिष्ठित इति । अनेन नात्र सर्वात्मना स्थित्यभाव उच्यते किंतु स्वाधारत्वमेवोच्यतेऽतो नात्यंतासत्त्वं हरेरित्युक्तं भवति । हरेः स्वाधारत्वे श्रुतिमाह ॥ स भगव इति । हे भगवः पूज्य । सः हरिः । इति प्रश्न इति शेषः । स्वे महिम्नीत्युत्तरमुच्यत इत्यर्थः । अत्रैव श्लोके पुरुषो हरिः स्वात्मानं स्वं तदुपादानं तस्य गुणव्यतिकरस्योपादानं परिणामिकारणमसृजदिति हरेः परिणामिकारणत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तदनूद्य व्याचष्टे ॥ तदुपादानमिति । गुणव्यतिकरस्योपादानं स्वीकारस्तस्य कर्तारं । स्वापादितं वैषम्यावस्थितस्य सत्त्वादिगुणस्य प्रवर्तकमित्यर्थः । अनन तस्य गुणव्यतिकरस्योपादानं स्वीकारो येन कृतः स तथेति विग्रहः सूचितो भवति । एवं तदुपादानमिति पदस्यार्थमुक्त्वेदानीं पुरुषस्तदुपादानमिति संपूर्णार्धस्य विवक्षितमर्थमाह ॥ सृष्ट्यादीति । आत्मना स्वेन ॥ ११ ॥ विश्वं वै ब्रह्मेति श्लोक तद्विश्वं ब्रह्ममात्रं ब्रह्मात्मकमित्यन्यथाप्रतीतिनिरासाय ब्रह्मतन्मात्रमित्येतद्व्याचष्टे ॥ ब्रह्मेति । अनेन ब्रह्मणि चतुर्मुखे तद् ततं व्याप्तं

ब्रह्म तद्ब्रह्म परब्रह्मणा मात्रं निर्मितामिति विग्रहः सूचितः। तत्रैव श्लोके विष्णुमाययेत्यस्य विष्ण्वाश्रिताऽनिर्वचनीयाऽविद्येतिभ्रांतिनिरासाय माययेत्यनूद्य व्याचष्टे॥ माययेति । तत्रैव श्लोके कालेन कालांतर्गतेनेश्वरणेतीश्वरपदस्य कालांतर्गतविष्णुरूपार्थत्वभ्रांतिस्तथा परिच्छिन्नपदस्य युक्तार्थत्वभ्रांतिस्तदुभयनिरासायापेक्षिताध्याहारेण तत्तात्पर्यार्थमाह॥ तत्रेति। तत्र ब्रह्मादित्रिषु रूपेषु। मध्य इति शेषः। सहर्तीत्यनेन कालशब्दार्थ उक्तः । तत्र धातु पठति ॥ कल इति। छेदनं विनाशः। अनेन परिच्छिन्नशब्दः छेदनार्थक इति सूचितं। तथा कालाख्यस्वरूपं नो वर्णयेति विदुरकृतप्रश्नस्य हरेः संहर्तृत्वरूपमेव कालाख्यं ज्ञातव्यमित्युत्तरं भवति। ब्रह्म निर्मातृकमित्यारभ्येतिधातोरित्यंततात्पर्यग्रंथेन सृष्ट्याद्यर्थत्वेनेत्यादिपूर्वतात्पर्यग्रंथो विवृतो भवति । तेन भागवतेऽपि गुणव्यतिकराकार इति प्रथमश्लोकस्य विश्वं वै ब्रह्म तन्मात्रमिति द्वितीयश्लोको विवरणात्मक इति ज्ञापित भवति । स्वोक्तार्थे प्रमाणमाह॥ अथ त्रयी वावेति ॥ १२ ॥ ननु विष्णुमाययेत्यस्य विष्णुसामर्थ्येनेत्यर्थः कुतः। विष्ण्वज्ञानेनेत्यर्थः किं न स्यात्। ततश्च विश्वमिथ्यात्वमुच्यत इत्याशंकापरिहाराय यथेदानी तथाऽग्रे चेति भागवतवाक्यं प्रवृत्तं । तस्यैतद्ब्रह्म यथेदानीं तथाऽग्र उक्तकालेऽप्येकप्रकारमेवेति ब्रह्मपरत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ सृष्टिश्चेति । सर्वदेत्यस्यैव व्याख्यानं ॥ आदीत्यादि। एकप्रकारेणाद्यंतरहितकाले विद्यमानाः सर्वदा घटत्वे घटत्वमेव प्रकारः पटत्वे पटत्वमेव प्रकारस्तस्य वैपरीत्य नास्तीत्यर्थः। इतिहाससहितैर्वेदैस्तदभिमानिभिरित्यर्थः। सर्वस्य जगतो वेत्तारः॥ १३ ॥ सर्गो नवविध इति श्लोके नवविधः सर्गः प्रतिज्ञातः। कालद्रव्यगुणैरस्येति श्लोकार्धेन त्रिविधो लयः प्रतिज्ञातः। तत्र प्रतिज्ञातनवविधः सर्गः कृष्णद्वैपायनेनैव प्रदर्श्यते। त्रिविधो लयो न प्रदर्श्यते। अतस्तं त्रिविधलयं कालेन द्रव्यैः पृथिव्यादिद्रव्यैः गुणेन तमोगुणेनेत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव दर्शयति ॥ तामसस्येत्यादिना । सत्त्वं प्रवृद्धतमोऽत्युल्बणं कचिद्रजोऽपि लयोस्तामससात्त्विकपदार्थयोः कारणमिति शेषः। विरोधिना

जलादिद्रव्येण पित्तादेर्नाशः कालस्य क्षणादिरूपस्य संख्यया जातः कालसंख्यजः। किंचिद्वस्त्वेव क्षणावस्थायि किंचित्त्रिक्षणावस्थायि किंचिदेकघटिकावस्थायि तदनंतरं द्वितीयक्षणादौ नश्यतीत्येवं कालं संख्याजो लय इत्यर्थः। अयं कालजो लयः सर्वजन्यपदार्थानां ज्ञातव्यः। अत एव सर्वस्य वस्तुन इत्युक्तं। आद्यस्तु महत इति श्लोकार्धे पूर्वं प्रतिज्ञातनवविधसर्गेष्वाद्यः सर्गो गुणवैषम्यमिति गुणवैषम्यस्याद्यसर्गत्वमुक्तं। तत्र गुणवैषम्यं नाम किमित्यतः प्रमाणेनैव तत्प्रदर्शनायादौ सत्त्वादिगुणाना परिमाणतः स्थितिमाह ॥ तमस इति। प्रकृतिजा उद्भूता गुणा गुणनामकास्तद्भागा एव परिमाणतः। स्युरित्यन्वयः। अनेन सूक्ष्मरूपेण नित्यसत्त्वादिगुणानामिदं परिमाणं न भवतीति सूचितं। एवं परिमाणमुक्त्वेदानीं समत्वभ्रांतिं निवारयति ॥ तत्रे त्यादिना। तत्र प्रकृतिजगुणेषु मध्ये सत्त्वे केवलं रजस्तमोभ्याममिश्रितं स्यादित्यर्थः। सत्त्वगुणस्य केवलत्वोक्त्याऽर्थाद्रजस्तमसोरकेवलत्वमुक्तं। तत्तयोर्न समासामिति भावेनाह ॥ रजसीति। तत्र रजसि सत्त्वमपि शताधिकं शतभागात्मकमधिकं तथा रजः शतांशानां मध्ये य एकांशस्तत्परिमितं तमश्चाधिकं प्रकीर्तितं। यथा सत्त्वं रजस्यस्ति तथा तमस्यपि सत्त्वं प्रकीर्तितमित्युक्ते रजस्तमसोः सत्त्वभागाः समाः संतीति भ्रांतिनिरासायाह ॥ तमस इति। अत्र षष्ठी सप्तम्यर्थे। तमसि तु सत्त्व दशोत्तरं दशभागरूपमुत्तरमधिकमिति तथा तादृशांशेन तस्य तमसो दशभागानां मध्ये एकभागपरिमितं रजोऽप्यधिकं प्रकीर्तितमित्यर्थः नन्वेवं रजस्तमसोर्गुणांतरमिश्रितत्वं चेत्तर्हि रजआदिशब्देनैव व्यवहारः कुत इति चेन्न। रजआदिभागाधिक्यादेव रजआदिशब्दव्यवहारोपपत्तेः। तेजोऽबन्नवदयमेव सूक्ष्मरूपगुणादीनां विकारतोपचयः। भूतेंद्रियप्राणगुणेत्यादि तत्त्व विवेके ज्ञातव्यं। इदमुक्तं भवति। एकराशिभूतसत्त्वादिरूपप्रकृतेर्जातेषु सत्त्वादिगुणेषु मध्ये सत्त्वगुणो रजस्तमोभ्याममिश्रितः। रजोगुणस्तु सत्त्वगुणस्य शतमभागैस्तमसो रजोगुणशतभागानामेकभागपरिमितेन भागेन च मिश्रितः।

तथा तमोगुणेऽपि सत्त्वस्य दशभागैस्तमोदशभागानामेकभागपरिमितेन रजसो भागेन च मिश्रितः । तथाचानेनैवोक्तं गुणानां प्रकृतिजत्वमपि विवृतं भवति । तत्र सत्त्वस्य प्रकृतिजत्वं नाम प्रकृतिनामकसूक्ष्मरूपात्पृथग्भवनं । रजस्तमसोस्तु गुणांतरभागोपचितत्वं ज्ञेयं । एवममिश्रितत्वादिना गुणानां स्थितिमुक्त्वेदानी वैषम्य साम्यावस्थापेक्षत्वादादौ तां दर्शयति ॥ मूलजमिति । तुरवधारणे । तदित्यनेन संबध्यते । यद्रजोमूलजं सत्त्वस्य शतभागैस्तमसो रजःशतांशपरिमिति भागेन च मिश्रितं तदेव रजो विलये प्रलये सत्त्वे मूलसत्त्वे दशांशतः स्वदशभागैर्मिश्रितं तमसि मूलजतमसि स्वकांशेन च मिश्रितं भवति । हि प्रमाणप्रसिद्धमेतत् । अनेन प्रकृतिजसत्त्वेन तमसि च रजांशयुक्तत्वेन साम्यादियं साम्यावस्थेत्युक्तं भवति । अत्रोक्तप्रकृतिजरजसः प्रलये सत्त्वादौ प्रवेशः प्रकृतिजसत्त्वादिगुणत्रयस्य मूलप्रकृतौ प्रलये प्रवेशस्योपलक्षकः । अन्यथा गुणत्रयस्य मूलप्रकृतौ प्रवेशाभावेन पुनः पुनः सृष्ट्या उद्धारेण परिमितत्वं स्यात् । अनुद्धारे प्रकृतिजत्वं न स्यात् । तदभावे प्रमाणबाधः । इदानीं वैषम्यावस्थां दर्शयति ॥ यदा त्विति । तत् साम्यावस्थापन्नं रजो यदा सर्वं स्वदशभिरंशैः सत्त्वे मिश्रितं गुणवैषम्यनामक स तु तमसा सह संगतं युक्तं । भवतीति शेषः । तदा तत्तु तदेव रजो महत्तत्त्वं महत्तत्त्वोपचयकारणमाहुः । एवमुत्तरत्रापि व्याख्येयं । मूलजं यद्रजस्त्वित्यारभ्य गुणवैषम्यनामकमित्यंतेन सत्त्वस्य रजःसबंधे गुणसाम्यावस्था । तदभावे गुणवैषम्यावस्थेति ज्ञापितं । एतद्विवरणार्थं तच्चतुर्भागसंभवमित्युक्तं । तत्ररजसो द्वौ भागौ तमसो द्वौ भागाविति भ्रांतिनिरासायाह ॥ तत्रेति । त्रिभागः त्रिभागा ब्रह्मणश्चतुर्मुखस्य स्वरूपमभिमन्यमानं । ननु ग्रंथांतरे महत्तत्त्वस्य केवलसत्त्वगुणसंभूतत्वस्योक्तत्वात्तद्विरुद्धमेतदित्यत आह ॥ तदेवेति । इतरापेक्षयाऽहंतत्त्वापेक्षयाऽस्याधिकसत्त्वभागोपचितत्वादित्यर्थः । तत्र सत्त्वं केवलं स्यादित्यादिनाऽत्र प्रयुज्यमानसत्त्वादिशब्दस्य केवलजडवाचित्वभ्रांतिनिरासाय तदभिमानिदेवतावाचित्व दर्शयन्विष्णोस्तदुत्तमत्वं दर्शयति ॥ श्री-

रित्यादिना । मूलसत्त्वं प्रकृतिजसत्त्वाभिमानिनी तन्नामिका चेत्यर्थः । एवमुत्तरत्रापि ज्ञातव्यं । गुणेभ्यः मूलसत्त्वाद्यभिमानि॰ श्रियादिभ्यो गुणमूलान्महालक्ष्म्याश्चेत्यर्थः ॥ १४ ॥ पूर्वोक्ततात्पर्यश्लोके गुणेभ्य इति बहुवचनेन प्रकृतिजसत्त्वादीनां पृथग्राशित्वं गुणमूलाच्चेत्येकवचनेन सत्त्वादिगुणमूलभूतप्रकृतेरेकराशित्वं ज्ञापितं । पृथग्राशित्वे गुणेभ्य इति बहुवचनं स्यात् । तत्र त्रिभागो रजस इत्यनेन यन्महत्तत्त्वस्य रजस्तमश्चतुर्भागजन्यत्वमुक्तं तद्विवृणोति ॥ यद्रज इति । मूलरजसि मूलरजेत्यर्थः । एवमुत्तरत्रापि व्याख्येयं । यद्रजो मूलरजसीत्यनेन भागद्वयं विवृतं भवति । तत्र प्रलये सत्त्वे प्रविष्टा ये मूलरजसो दशभागास्ते एको भागस्तद्व्यतिरिक्तो मूलरजसो य एको भागः स द्वितीय इति । मूले तमसीत्यनेन रजस्तृतीयभागो विवृतो भवति । स तु प्रलये तमसि यः प्रविष्टो रजोभागः स एव ज्ञातव्यः । अनेन तत्र त्रिभागो रजस इत्यर्थ यदा तु तद्रजः सर्वमित्यस्य विवरणात्मकमित्युक्तं भवति । अनेनैव महत्तत्त्वाद्विकुर्वाणादित्यादौ यदहंतत्त्वस्य महत्तत्त्वोपादानकत्वमुक्तं तदपि विवृतं भवति । एवमुत्तरत्रापि ज्ञातव्यं । एवमाद्यस्तु महतः सर्ग इत्यर्थं व्याख्यायेदानीं द्वितीयस्त्वहमो तत्रेत्यादिश्लोकद्वयस्याप्रतीतिविप्रतीतिनिरासाय प्रमाणशेषेणैव तात्पर्यार्थमाह ॥ **दशांशा इत्यादिना** । तत्र त्रिषु गुणेषु मध्ये सत्त्वदशांशाः सत्त्वस्य दशांशानां मध्ये य एकांशस्तत्परिमितं रज एतद्रजसो दशभागान्कृत्वा तन्मध्ये य एको भागस्तत्परिमितं तमश्चेत्येव तदात्मको गुणत्रयभागोपचितोऽहंकार इत्यर्थः । रुद्रस्तदभिमानीत्यर्थः । ननु तमआद्यपेक्षयाऽधिकसत्त्वगुणात्मकाहंकारदेहस्य रुद्रस्य पुराणादौ तामसत्वप्रसिद्धिः कथमित्यत आह ॥ **तामस इति** । तत्र हेतुमाह ॥ **सत्त्वाद्या इति** । चो हेतौ । यस्माद्यस्याहंकारस्य तद्वन्महत्तत्त्वस्यैव सत्त्वाद्यास्त्रयो गुणास्तारतम्योपेताः सति । तस्मादितरापेक्षया सत्त्वं विरिंचापेक्षयैव तामसमित्यर्थः । सुपां सुपो भवंतीति वचनात्तत्तमोंऽशादिति पंचमी षष्ठ्यर्थे । तम इति सत्त्वाद्युपलक्षणं । स चासौ तमोंऽशश्च तत्तमोंऽशः । सत्त्वाद्यंशत्रयात्मकस्याहंकारस्य यः

सात्त्विकोंऽशः स मनआद्याः प्रकीर्तिताः । सूक्ष्मरूपा मनआद्या अहंकारस्थसत्त्वांशैरुपचिता भवतीति भावः । एवमुत्तरत्रापि व्याख्येयं । आद्यग्रहणेन भागवतोक्तवैकारिकदेवदेहा ग्राह्याः । अनेन भागवतेऽहंकारसर्गानंतरं भूतादिसर्गोक्तिर्भूतादेरहंकारांशो पादानकत्वज्ञापनार्थेति सूचितं । अत्रैव श्लोकद्वये तत्र सर्गे द्रव्यज्ञानक्रियादयः सति भूतसर्गे एव तन्मात्रशक्तिद्रव्यवान् य इंद्रिय-सर्गः स ज्ञानक्रियात्मक इति सर्गस्यैव द्रव्याद्यधिकरणत्वादिकमुच्यत इत्यन्यथाप्रतीतिनिरासाय तथा द्रव्यज्ञानक्रियादय इत्यादि पदानामर्थाप्रतीतिनिरासाय च प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ भूतानित्यादिना । अनेन भागवते भूतसर्गादिशब्दः सृष्टभूता-द्यर्थकः । द्रव्यशब्दो द्रवणार्थकः । द्रवणं कार्योन्मुखत्वं । मात्रशब्दः शब्दस्पर्शादितन्मात्रार्थकः । ज्ञानक्रियाशब्दौ तच्छक्त्युप-लक्षकावित्युक्तं भवति । मनसा सह देवाश्च ज्ञानशक्त्येत्यनेन वैकारिको देवसर्ग इत्यर्थ वैकारिकदेवा मनश्च यन्मयं यस्मिन्ज्ञाने मयं प्रधाना ज्ञानशक्तिमंत इति व्याख्यातं भवति । देवाश्चेति चशब्दस्य ज्ञानशक्त्यश्चेत्यन्वयः । तेनानुक्तक्रियाशक्तिमत्त्वं समुच्चीयते। एतेषां मूलभूतत्वादित्यादितात्पर्यवाक्येन भागवते तत्र द्रव्यज्ञानक्रियादय इत्यस्य द्रव्यादिजननशक्तयो यत्रेत्यर्थ उक्तो भवति। तथा भूतसर्गस्तृतीयस्त्वित्यादिभागवतसार्धश्लोको द्रव्यज्ञानक्रियादय इति भागवतवाक्यस्य व्याख्यानरूपः । आदिशब्दो देवदेहार्थक इति चोक्तं भवति। सात्त्विकांशो मनआद्या इत्युक्तं । तत्राद्यपदेन के गृह्यंते । तेषां सात्त्विकत्वं च किमेकप्रकारेणोत तारतम्येनेति जिज्ञासायामाह ॥ मानुषेत्यादिना। अपिशब्दो विशेषे स्याद्गर्हायामवधारण इत्येभिधानादत्रापिशब्दो विशेषार्थकः। तत्र देवेषु यास्तात्त्विका देवतास्ता अपि विशेषेण सात्त्विका इत्यर्थः ॥ यद्वा ॥ तत्रापि सात्त्विकदेवेष्वपि । इयं निर्धारणे सप्तमी । तेनातिशयसात्त्विकत्वं द्योत्यते । एवमुत्तरत्रापि ज्ञातव्यं । तत्रापि चतुर्मुख इत्यत्र । तत्रेत्यस्य तत इत्यर्थः । भागवते आद्यस्तु महतः सर्गः । द्वितीयस्त्वहमीयतेत्युक्त्वा वैकारिको देवसर्गः पंचम इत्युक्तं । तेन ब्रह्मरुद्रयोर्वैकारिकत्वं नास्ति । तदन्येषामस्तीति

द्योतितं । तत्कुत इति शंकानिमित्तप्रदर्शनेन परिहरति ॥ अविकारावित्यादिना । यत इत्यध्याहार्यं । देहभेदादिसंभवे देहस्य भेदो विदारणं नाशः । आदिपदेनोत्पत्तिः । तयोः संभवेऽपि प्राप्तावपि अविकारौ तन्निमित्तविकाररहितौ तन्निमित्तविकारवंत इति भेदो देहादिसंभव इत्यस्योभयत्र संबंधः । ब्रह्मणः स्वदेहनिरभिमानित्वेन तद्भेदादिनिमित्तकविकारवत्त्वेऽपि तैजसेंद्रियाभिमानिप्रयोजकदेहाभावेन तद्भेदादिनिमित्तकविकाराभावः । ब्रह्मादेरिंद्रियाभिमानित्वेन विकारवत्त्वात्कथमविकारित्वमित्याशंकापरिहारिंद्रादीनामेवेंद्रियाभिमानिरूपेणातिविकारत्वमाह ॥ त एवेति । त एवेंद्रादय एव । तेषु तैजस शब्दप्रवृत्तिनिमित्तमाह ॥ ज्ञानमात्रगुणोद्रिक्तास्तस्मात्तैजसनामका इति । गत इत्यनुवर्तते । अनेन तेजो ज्ञानं तत्संबंधिनस्तैजसा इत्युक्तं भवति । ननु यद्येवमतिविकारिणस्तर्हि तेजसा वैकारिकाश्चेवेति वैकारिकादिभेदेन भिन्नत्वव्यवहारोऽनुपपन्न इत्यत आह ॥ अविकारि त्वेति । तुरवधारणे । अविकारि त्वित्यनेन संबध्यते । इंद्रियेषु इंद्रियाभिमानिरूपेषु । इंद्रियेष्वित्युपलक्षणं । भूतेष्वित्यपि ग्राह्यं । कथमित्यतो दृष्टांतत्वेनोपपादयति ॥ यथा विप्र इति । अयं भावः । यथा वेदाध्ययनविकारवान्विप्रस्तद्राहित्येन मूर्ख इत्यभिधीयते तथाऽविकारित्वयोग्या अपींद्रादयोऽतिविकारित्वाभावदविकारित्वराहित्येन वैकारिका इत्युच्यंते । तथा च वेदाध्ययनाधिकाररहितः शूद्रो वेदाध्ययनराहित्येन मूर्ख इति नाभिधीयते तथा विकारित्वादविकारित्वयोग्यतारहिता इंद्रियाभिमानिनोऽविकारराहित्येऽपि वैकारिका इत्यभिधीयंते । अन्यथा शूद्रोऽपि मूर्ख इत्यभिधीयेतेति । एकस्यैव देवस्याविकारित्वयोग्यत्वं तदभावश्च कथमित्याशंकाऽप्येतद्दृष्टांतकथनेन परास्ता । यथैकस्यैव जीवस्य विप्रशूद्रदेहाभिमानभेदेन विद्यायोग्यताऽयोग्यते स्त एवमेकस्यैव देवस्य वैकारिकदेहेंद्रियभूताभिमानिदेहेनाविकारित्वयोग्यत्वायोग्यत्वे स्यातामिति । नन्वस्त्वेवं तथाऽपि भूताभिमानिदेवानां तामसत्वं कुतः । ज्ञानगुणोद्रिक्तत्वेन तैजसत्वमेव किं न स्यादित्यत आह ॥ तामसानीनि । भूतानि

भूताभिमानिनो देवाः। सुष्ठुज्ञत्वेऽपि ज्ञानस्य किंचिद्व्यवहितत्वतो व्यवधानात्तैजसरूपो वरोद्रेकाभावान्न तैजसानीत्युच्यंते। किंतु तामसानीत्युच्यंत इत्यर्थः। अत्राप्यभिमानिभेदाज्ज्ञानभेदो ज्ञातव्यः। नन्वेवं चेत्तर्हि तामसभूतव्यतिरिक्तानां सर्वेषां ज्ञाना व्यवधानेन ज्ञानोद्रिक्तत्वं स्यात्। तेन च हरिसाम्यं स्यादिति चेन्न। अन्येषां स्वयोग्यतानुसारेण हर्यधीनज्ञानोद्रेकवत्त्वाद्धरेस्तु स्वातंत्र्येणानवधिकज्ञानोद्रेकवत्त्वादित्याशयेनाह॥ पूर्णज्ञान इति॥ १५–१६॥ षष्ठस्तु तमस इति श्लोकार्धे षष्ठस्तमसः सर्गोऽबुद्धिकृतो बुधिशून्येन कृत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह॥ अबुद्धिपूर्वमिति। वस्तुतोऽबुद्धिपूर्वं न भवति किन्तु बुद्धिपूर्वमित्येकं व्याख्यानं। हरिबुद्धिकृत इति द्वितीयं व्याख्यानं द्रष्टव्यं। अनेन अस्य अकारवाच्यस्य हरेर्बुद्ध्या कृत इति तस्य विग्रहः सूचितः। अंधकारार्थत्वभ्रांतिनिरासाय तमःशब्दार्थमाह॥ अविद्येति। प्रभोरित्यस्यार्थः॥ ब्रह्मणो महात्मन इति। अविद्योपादानं दर्शयन्नादौ तामसोंऽशश्च खादय इत्यनेन जातां भूतानां केवलतमोभागोपचितत्वभ्रांति निवारयति॥ तामसानामिति। तामासानां तु अहंकारस्थतमोभागोपचितानामित्यर्थः। अनेन तमस एकेन भागेन तथा तमस एकभागस्य ये शतभागास्तेषां मध्ये य एको भागस्तत्परिमितेन रजोभागेन तथा रजस एकभागस्य ये सहस्रभागास्तेषां मध्ये एकभागपरिमितसत्त्वभागेन भूतान्युपचितानि भवंतीत्युक्तं भवति। न च त्रिगुणांशोपचितानां भूतानां तामसत्वं कथमिति वाच्यं। सत्त्वाद्यपेक्षयाऽधिकतमोभागत्वात्। न चैवं सर्ववेदित्वानुपपत्तिः। येभ्यः स्वावरेभ्यः सर्ववेदित्वं तेभ्योऽधिकगुणवत्त्वात् केवल-रजःसत्वाभ्याममिश्रो योऽविद्या तदुपादानिकाविद्येत्यर्थः। अविद्याकार्यमाह॥ तद्देहा इति॥ १७॥ एवं भूतस्थतमोभाग कार्यमुक्त्वेदानीं तत्स्थरजोभागकार्याण्याह॥ यद्रजोभाग इति। मानुषाणां शरीराणां सदेत्यनेनेदानीं जायमानानामपि मानुष देहानां भूतस्थरजोगुणापादानकत्वमुक्तं भवति। एवं भूतस्थकेवलतमोरजकार्यमुक्त्वेदानीं तत्स्थमिश्रिततमआदीनां कार्यमाह॥

तमो गूढेनेति । स्थास्नुचारिणां स्थावरजंगमानां । अनेन सप्तमो मुख्यसर्गस्त्वित्यारभ्य दुःखे च सुखमानिन इत्यंतभागवत-श्लोकानां तात्पर्यार्थ उक्तो भवति ॥ १८–२५ ॥ तत्र तु भूतेष्वेव तमःशतांशेन भूतस्थतमःशतभागानां मध्ये एकभागपरिमितेन भूतस्थसत्त्वेन गूढं भौतिकं रजस्तमोऽप्यांडजं ब्रह्मणो रूपं तदुपादानं प्रकीर्तितमित्यर्थः । तज्जो ब्रह्मांडविग्रहश्चतुर्मुखजः । पुनर्जनिरित्यनेनेयं ब्रह्मांतःसृष्टिरिति सूचितं । देवमानुषदेहोपादानकारणमाह ॥ गूहितमिति । तत्सत्त्वं भूतस्थगुणः । देवा यदा मानुषा मनुष्यदेहा भवंति तदा तद्देहस्य भूतरजसा गूहितं तत्सर्वमुपादानकारणमित्यर्थः । उपसंहरति ॥ एवं गुणा इति । एते सूक्ष्मरूपसत्त्वादिभ्य उद्धृताः । सर्वं व्याप्येत्युक्त्या मुक्तब्रह्मादिस्वरूपस्यांधंतमस्थकल्यादिस्वरूपस्यापि प्रकृतिगुणव्याप्तत्वभ्रांतिं निराकरोति ॥ गुणातीतमिति । चोऽवधारणेऽनुक्तसमुच्चये च । ब्रह्मादीनां सुखात्मकं । चशब्दात्कल्यादीनां दुःखात्मकं । चिद्रूपं चेतनात्मकं यद्रूपं स्वरूपं तद्गुणातीतमेव प्रकृतिजगुणकार्यसंबद्धमेव । नन्वेवं चेत्तर्हि ब्रह्मादीनां कल्यादीनां चोत्तमत्वाधमत्वेन स्यातां । तथा चोत्तमानां ब्रह्मादीनां परस्परमधमानां कल्यादीनां परस्परं तारतम्यं च न स्यादित्यत आह ॥ तच्चेति । तत् सत्त्वं । चोऽवधारणे । तम इत्यनेनापि संबध्यते । तेन सत्त्वस्य तमसश्च गुणांतरामिश्रितत्वं सिध्यति ॥ अयमर्थः ॥ तत्र गुणातीतेषु मध्ये । यत्र स्वभावतः सत्त्वमेव विद्यते यदुत्कृष्टं उत्तमं । यत्र स्वभावतस्तम एवास्ति तद्धीन मध्यमं । तथाऽत्रोत्तमेषु कल्यादिस्वरूपेषु मध्ये यत्र स्वरूपे यदपेक्षया स्वभावतः सत्त्वस्योत्कर्षो विद्यते तत्स्वरूपं तत उत्कृष्ट उत्तममेव । तत्राधमेषु कल्यादिस्वरूपेषु मध्ये । यत्र स्वरूपे यदपेक्षया स्वभावत उत्कृष्टं तमो विद्यते तत्ततो हीनं स्वभावतोऽधममेवेति । अनेन मध्यमानां गुणातीतत्वं नास्तीति सूचितं । ननु पूर्वं गुणबद्धस्यदानीं गुणातीतत्वं कथमित्यत आह ॥ उपगूहनमिति । उपगूहने तु पूर्वं गुणबद्धत्वे सत्यविशेषो नित्यचिन्मये मुक्तजीवे विशेषो गुणबद्धत्वरूपविशेषो नैवास्ति । हरिज्ञानादिना तस्य नष्टत्वादित्यर्थः । एवं

द्विविधानां संसारमुक्तानां गुणातीतत्वमुक्त्वेदानीं नित्यमुक्तयोः श्रीविष्ण्वोर्गुणबद्धत्वं निराकरोति ॥ प्रकृतेरिति ॥ २७–२८ ॥ ननु षडिमे प्राकृताः सर्गा इत्यादिना यदहंकारादिसर्गाणां प्राकृतत्वमुक्तं तदयुक्त । अहंकारादीना महदुपादानकत्वेन प्रकृत्युपादानकत्वाभावात् । तथा वैकृताहंकाराशिष्टस्थावराणां विशिष्य वैकृतोक्तिश्चायुक्तेत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अव्यक्ताद्या इत्यादिना । अबुद्धिकृत इति भागवतपदस्य बुद्धिकृत इत्यर्थ उक्तः । तं विष्णुव्रनविधायाः प्राकृतत्वं विवृणोति ॥ पंचपर्वेत्यादिना । प्रथमतुशब्दोऽवधारणे हरिणेत्यनेन संबध्यते । भूतेभ्यः भूतस्थतमसः । तेन चतुर्मुखद्वारेण तत्स्रष्टत्वज्ञापनाया विधायाश्च चतुर्मुखस्रष्टृत्वज्ञापनाय । तस्मात्प्रकृतिनामकभूतस्थतमसः सृष्टत्वात् ॥ १७ ॥ रजोभाजो भगवत इत्यत्र हरेः रजोगुणबद्धत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ एत इति । एते रजादयो हरेर्यत्स्वातन्त्र्यविषयाः । प्रकृतेश्च ब्रह्मणोऽपि तदन्येषु देवेष्वेव क्रमात्स्वतंत्रास्तत्तस्थस्वातंत्र्यविषयाः । तदन्येषु देवतातिरिक्तविषयेषु परतंत्रास्तत्तस्थपारतंत्र्यविषयाः । अनेन रजोभाजो इत्यत्र रजःशब्दः सत्त्वाद्युपलक्षकः । हर्यादेस्तद्भाक्त्वं नाम गुणाधीनत्वमित्युक्तं भवति । तत्र हरेः प्रकृत्यादेश्च गुणनियामकत्वे मुख्यत्वामुख्यत्वविशेषो ज्ञातव्यः । अत एव सम्यक् सदेत्युक्तं ॥ १८ ॥ सप्तमो मुख्यसर्गस्त्वित्यत्र मुख्यानां सर्ग इति वनस्पत्यादीनां मुख्यत्वमुक्तं । तत्तु न सर्वापेक्षा किंतु सजातियेभ्य इत्यभिप्रेत्य वेदव्यासेनोत्स्रोतस इत्युक्तं । तेन सजातीयोत्तमत्वं कथमागतमित्यतः प्रमाणेनैव तद्दर्शयन् तच्छेषेणैव तिरश्चामष्टमःसर्गोऽर्वाक्स्रोतस्तु नवम इत्यत्र तिर्यक्शब्दार्वाक्स्रोतःशब्दयोः अप्रतीतिविप्रतीतिनिरासाय विवक्षितमर्थमाह ॥ स्थास्नुभिरित्यादिना । स्वतः स्वभावतो नियमात् प्रायः परोपकर्तृत्वात् परोपकारकर्तृत्वेन स्थितेरित्यन्वयः । यत्र फलाद्यभावकाले उपकाराभावात्प्राय इत्युक्तं।अनेन उत् उत्कृष्टं स्रोतो गतिरेषां त उत्स्रोत इति विग्रहः प्रदर्शितो भवति । तामिति वक्ष्यमाणानुसारेणात्र परशब्देन सतो

ग्राह्याः । तेनासदुपकारकनिषिद्धस्थावरे सदुपकारकानिषिद्धस्थावराणां मुख्यत्वं सिद्धं । अतास्तिरश्चां स्थावराणां चेत्युत्तरत्र सदुपकारिकातिरिक्तस्थावराणामर्वाक्स्रोतस्त्वमुच्यते । तेन भागवते नृशब्दस्तात्पर्ये मानुषशब्दश्चान्योपलक्षक इति सूचितं । चोऽवधारणे विनेत्यनेन संबध्यते । गतिरित्यस्यानुवृत्त्यर्थोऽपिशब्दः । यज्ञोपयोगं सतामुपकारं विनैव यज्जनिस्तेषा तिरश्चां नाधोगतिर्नोर्ध्वगतिः । किंतु यत्र मृतास्तत्रैव पुनर्गतिरित्यर्थः । अनेन तिर्यगेवांचंति गच्छति न तूर्ध्वमधश्चेति तिर्यंच इति विग्रहः । तथा यज्ञोपयोगिसदुपकारकगवादीनामुत्स्रोतस्त्वं च सूचितं भवति ॥ २० ॥ मनुष्योत्तमापेक्षया प्राय इत्युक्तं । प्रयत्नेन बहुप्रयत्नेन विना नियमादूर्ध्वगतेत्येतद्ग्रंथांतरतात्पर्यकथनं ज्ञेय । अर्वाक्स्रोतस इत्येव मानुषा इत्यत्र मानुषशब्दोऽन्योपलक्षक इत्यभिप्रेत्य तत्र प्रमाणमाह ॥ तिरश्चामिति । चशब्दो यज्ञोपयोगं सदुपकारसाहित्यसमुच्चयार्थः । चतथाशब्दावन्योन्यसमुच्चयौ । सर्वेषां साम्यप्राप्ते सत्याह ॥ नियमादिति । ते मुख्यस्रोतसः । स्वत इति तात्पर्यवाक्ये यत्स्थावराणां मुख्यस्रोतस्त्वमुक्तं तन्मुख्यपदबलाद्भागवतमुख्यसर्गपदस्यार्थ इति प्रतीतिर्भवति । तां प्रतीतिं निवारयति ॥ मुख्यस्रोतस इति । मुख्यस्रोतस इत्यस्यार्थे उत्स्रोतस इत्यन्वयः । अनेन उत् उत्कृष्टं मुख्यं स्रोतो गतिर्येषां त उत्स्रोतस इति विग्रहः सूचितो भवति । उत् ऊर्ध्वं स्रोतो येषामिति कुतो न व्याख्यायत इति चेन्न । तथात्वे वनस्पत्यादीनामूर्ध्वस्रोतस्त्वेन देवसाम्यं स्यात्तत्प्रमाणबाधितमित्याशयवान् प्रमाणेनैवानयोः शब्दयोर्भिन्नार्थत्वं व्यवस्थयाऽऽह ॥ ऊर्ध्व इत्येवेति । यः सुष्ठतिशयेनोत्तमः स एवोर्ध्व इत्यभिधीयत इत्यन्वयः । अपिर्यस्मादित्यर्थे । उच्छब्दो भण्यत इत्यन्वयः ॥ १९ ॥ अंतःस्पर्शा इत्यस्यांत एव स्पर्शाख्यगुणवंत इति प्रतीतिनिरासाय भागवत एव हृदि वेदिन इत्यनेनार्थ उक्तः । तत्तु तिरश्चामेव विशेषणमिति भ्रांतिं निवारयन्नपेक्षिताध्याहारेण व्याचष्टे ॥ तिरश्चीना इति । हृद्गतं जानंतीति हृद्गज्ञाः । शास्त्राद्गच्छंति जानंतीति शास्त्रगाः । अनेनांतःस्पर्शो ज्ञानं येषां ते तथेति विग्रहः ।

तथा स्पर्शपदस्य ज्ञानोपलक्षणत्वं सूचितं । एवं प्रमाणेन व्याख्यातमप्यस्पष्टत्वात्स्वयं व्याचष्टे ॥ यदिति । शास्त्रयुक्तिभ्यामित्यत्रापि हृदयंगममिति संबध्यते । ननु भागवते गौरजो महिषः कृष्ण इत्यादिनोदाहृतानां गवादीनामष्टाविंशत्याधिक्ये सति अष्टाविंशादिति केनाभिप्रायेण प्रतिज्ञातमित्यतः प्रमाणेनैव तदभिप्रायमाह ॥ अष्टाविंशादिति । अष्टाविंशद्विशेषेण यज्ञेषु यत्कृतं यतस्तिरश्चां तावदेतस्माद्भण्यते शास्त्रवेदिभिरिति एतस्तिरश्चां मध्येऽष्टाविंशत्संख्याकं विशेषणं । विशिष्यत इति शेषः । भावप्रधानो निर्देशः । विशेषवत्त्वेन निमित्तेन यज्ञेषूपकृतं एतस्मात्कारणात्तावदेव भण्यत इत्यन्वयः ॥ २० ॥ केतेऽष्टाविंशसंख्याका इत्यतस्तान्दर्शयति ॥ गौरजा इत्यादिना । ननु भागवते मकरादय इत्यनेनैव प्रमाणे जलजा इत्यनेनैव कूर्मस्योक्तत्वात्पुनः कूर्मस्य ग्रहणं व्यर्थमित्याशंकां स्वयं परिहरति ॥ कूर्म इति । अनेन जलजपदं पंचनखव्यतिरिक्तजलजार्थकमित्युक्तं भवति । ननु भागवते गौरजो महिषः कृष्ण इत्यादिना स्वतः प्रसिद्धमेव गवादीनां द्विशफत्वादिकं किमर्थमुच्यत इत्यतः प्रमाणोदाहरणपूर्वकं तत्प्रयोजनमाह ॥ तत्तदाकारेति । द्विशफादीनामिति भावप्रधानो निर्देशः । उक्तरीत्याऽनेनापि संबध्यते । ननु स्कांदवचनेन तत्तदाकारस्य स्मरणं कर्तव्यमित्येवोक्तं । न तु प्रसिद्धानामुक्तिः स्मरणार्थेति । अतो प्रमाणाभावात्प्रसिद्धोक्तिर्व्यर्थेत्यतः स्पष्टं प्रमाणमाह ॥ उच्यत इति । चोऽप्यर्थे । तुरवधारणे । भासवल्लूरबर्हिण इत्यत्र वल्लूरशब्दस्य दुर्गमार्थत्वादभिधानेनैवार्थमाह ॥ वल्लूर इति ॥ २१–२४ ॥ ननु भागवते यज्ञोपयोगिनां याऽष्टाविंशत्संख्योक्ता साऽयुक्ता तथा यथा तात्पर्ये गौरजो महिषः कूर्म इत्यादिना यज्ञोपयोग्यष्टाविंशत्संख्याकप्रदर्शनं कृत तदप्ययुक्तं । गवादिव्यतिरिक्तानां सर्पादीनां विद्यमानत्वादित्याशंकां प्रमाणेनैव परिहरति । अष्टाविंशादिति । तिरश्चां याः प्रधाना यज्ञोपयोगिन्यो जातयस्ता अष्टाविंशति तु अष्टाविंशत्संख्याका एव । योऽन्यस्तासां मध्ये यत्र सदृशयज्जातीयस्थेन सदृशस्तु तत्रैव च जातावंतर्भूतो भवेत् । तदेव भृंगिग्राहकतया दर्शयति ॥

जलजेति । यच्छब्दस्य तच्छब्दसापेक्षत्वात्तच्छब्दोऽध्याहार्यः । तेन चशब्दः संबध्यते । सर्वशः सर्वेषां तेषां शरीरस्येत्यन्वयः । तुश्चार्थे । जलप्रधानत्वादित्यनेन संबध्यते । तेन स्थलजसर्पकीटादयो जलजसर्पकीटादिसदृशत्वात्तच्छरीरस्य जलजप्रधानत्वाच्च जलजांतर्गता इत्युक्तं भवति ॥ २० ॥ अर्वाक् स्रोतस्तु नवम इत्यत्रोक्तमर्वाक्स्रोतस्त्वं नृपदग्रहणेन मनुष्याणामेवेति प्रतीयतेऽतस्तन्निरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ रजोनिष्ठा इति । ननु यद्यसुराणामर्वाक्स्रोतस्त्वं स्यात्तर्हि भागवते नृणामितिवदसुरज्ञापकं किंचिद्भवेत् । न चास्त्यतः कथमित्यतोऽसुरज्ञापकमाह ॥ दुःख इति । स्वोक्तार्थे प्रमाणमाह ॥ सर्वार्थानिति । सुखैकभावाः सुखमित्येककेवलो भावो भावनाऽनुसंधानं येषां ते तथेत्यर्थः ॥ २५ ॥ वैकृतास्त्रय इति श्लोके एत एव स्थावरादय एव त्रयो वैकृताः प्रोक्ताः । यश्च देवसर्गः स तु वैकारिकः प्रोक्तः । यः कौमारः सनत्कुमारसंबंधी सर्गः स तूभयात्मक इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ कुमारंतीत्यादिना । अत्र सुपां सुलुगित्यनेन लुप्तविभक्तिकं कुमेति भिन्नं पदद्वयं ज्ञेयं । कौ पृथिव्यां तदुपलक्षिते ब्रह्मांडे मा मानं निर्माणं अरंति प्राप्नुवंतीति कुमारा देवास्तेषां संबंधित्वात्कौमारः । अस्य तात्पर्यार्थः ॥ अंडजोद्भव इति । अ इति अतेः ऋच्छादेशाभावः छांदसः । नन्वस्त्वेवं कौमारशब्दार्थस्तथाऽपि तस्योभयात्मकत्वं कथमिति चेन्न । इदमुभयात्मकत्वं न कौमारस्योच्यते किंतु वैकारिकदेवसर्गस्यैवेत्याशयेनाह ॥ वैकारिकाणामिति । जननादिति पंचमी प्रथमार्थे । जननः सर्गो वैकारिकाणां देवानां सर्गः स प्राकृतो वैकृतश्चेत्युभयात्मक इत्यर्थः । ननु ब्रह्मादिसर्गस्याप्यंडांतर्जातित्वेनोभयात्मकत्वे संभवति सति कथ वैकारिकाणामित्युच्यत इत्यत आह ॥ वैकारिकेष्विति । वैकारिकेष्वेव मध्येऽन्येषां केषाचिदीषद्भोगित्वहेतुतोऽष्टा विधा अपि देवा उभयात्मकत्वेनैव प्रोच्यंत इत्यन्वयः । अनेनांडांतर्जातत्वमात्रेणोभयात्मकत्वमुच्यते किं त्वीषद्भोगवत्त्वसहितेनांडांतर्जातिब्रह्मादेर्नास्त्यतो वैकारिकाणामित्युक्तमिति

सूचितं भवति । देवसर्गश्चाष्टविध इत्यत्र चशब्देनास्याप्यसिद्धत्वं समुच्चीयते तदयुक्तं । अन्याष्टविधत्वात्प्रतीतेः । अतश्चशब्दो व्यर्थ इति चेन्न । देवसर्गशब्दस्य ब्रह्मादिदेवसर्गार्थप्रतीतिनिरासायार्थत्वाच्चशब्दस्येत्याशयवान् चशब्दार्थमाह ॥ देवसर्गश्चेतीति । अनेन देवशब्दो ब्रह्मादिव्यतिरिक्त इति सूचितं । ननु वैकृतास्त्रय एवैत इति श्लोके उभयात्मक इत्यनेन वैकारिकदेवसर्गस्योभयविधत्वमुक्त्वा कौमार इत्यनेकविधाः प्रदर्शिताः । द्वितीयविधप्रदर्शकं किमपि न दृश्यते । अतः कथमिदमुक्तमित्यतस्तत्रस्थं ज्ञापकं दर्शयति ॥ वैकारिकास्त्विति । अनेन वैकारिकपदं द्वितीयविधाज्ञापकमिति सूचितं । तेनैवं भागवतवाक्ययोजना सूचिता। देवसर्गो वैकारिकदेवसर्गस्तु वैकारिको कौमारश्चेत्युभयात्मको वैकारिकाहंकारजातत्वेन प्राकृताः कुमारा अडांतर्जाता ईषद्भोगिनश्च । तेषां संबंधित्वेन वैकृतश्चेत्युभयात्मकमिति ॥२६॥ ननु देवसर्गश्चाष्टविध इत्यष्टविधप्रतिज्ञाऽसंगताऽधिकानामुदाहृतत्वादित्यतः प्रतिज्ञाऽसंगतिपरिहरन्नन्येषां ईषद्भोगित्वहेतुत इति पूर्वोक्तं स्पष्टयति ॥ भोक्ता इत्यादिना । देवा वैकारिका इत्यर्थः । अन्येष्वन्यासु सर्वजातिषु भूतप्रेतादिषु भागवतोक्तासु । अनेन गंधर्वाप्सरसो मिलित्वैका विधा । यक्षरक्षांसि मिलित्वैका विधा । भूतप्रेतपिशाचाश्च विद्याध्राः किंनरादयो मिलित्वैका विधेत्येवमष्टविध इत्युक्तं भवति । एते वै एते एव विबुधपितृशतादय एव वैकारिकेषु देवेषु मध्ये । एत एवेत्यवधारणव्यावृत्त्यमाह ॥ अभोगिन इति । अभोगिनो मुख्यभोगिनो न भवंति । ईषद्भोगिन इति यावत् । अनेन वैकारिकेष्वेवान्येषामीषद्भोगित्वहेतुत इति पूर्वोक्तं विवृतं भवति । ननु देवसर्गश्चाष्टविध इत्युक्तमयुक्तं । पित्रादीनां देवत्वाभावादित्यतस्तेषु सहेतुकं देवत्वमाह ॥ देवा इति । चो यस्मादित्यर्थे । यस्मादेते पित्रादयः स्वयोग्यतानुसारेण सर्वज्ञास्तेषु देवेष्वंतरे एव भक्तास्ते देवैः सहाराध्याश्च ततस्तस्मादेवाः स्मृता इत्यर्थः । अनेन दिवु क्रीडा विजिगीषेत्यादि दिवुधात्वर्थानां मध्ये गतिशब्दार्थभूतज्ञानभक्तीस्तुतिशब्दार्थभूताराध्यत्वं चादाय पित्रादिषु देवशब्दः प्रवृत्त इत्युक्तं

भवति । एवं देवानामष्टविधत्वं पित्रादीनां देवत्वं चोपपाद्येदानीं तेषां परस्परभेदकमाह ॥ नृत्येत्यादिना । एषा देवानां क्वचिच्चाराः प्रेष्यदूताः क्वचिच्छेवाकरा इत्यन्वयः । अत्र नृत्येत्यनेन गंधर्वाप्सरसां भेदकमुक्तं । वाहनेत्यनेन यक्षादीनां भेदकमुक्तं । सिद्धसिद्धेत्यनेन सिद्धानां भेदकं । चारा इत्यनेन चारणां भेदकं । सेवका इत्यनेन भूतानां भेदकमुक्तं । इदानीं विबुधादित्रयाणां भेदकमाह ॥ अन्ये त्विति । तुर्विशेषे चो हेतौ । गंधर्वादिभ्योऽन्ये ये देवास्ते यस्मात्कारणाद्विशेषेण सर्वज्ञास्तस्माद्विबुधा प्रकीर्तिता इत्यर्थः । अनेन विशेषेण बोधत्वं विबुधभेदकत्वमुक्तं भवति । तैस्तैः श्राद्धादियज्ञभोक्तृत्वात्सुरतिमत्त्वादिभिः कर्मभिरष्टभेदांतरमष्टभेदेष्ववांतरमंतर्गतत्वं गताः । नन्वेवमुक्तानां विबुधाद्यष्टविधानां यदा शापादिना मानुषादिषु जन्म भवति तदा किं देवत्वादिकमस्त्युत नेति संशयं प्रमाणेनैव परिहरंस्तत्प्रसंगादाधिकमप्याह । दोषाच्छापादेः । तथाऽपि देवादयो देवादय एव विज्ञेयाः । तथा यद्यसुराद्याः स्वकर्मवशान्मानुषादिषु जायेरंस्तथाऽपि तेऽसुराद्या एव विज्ञेया इति योजना ॥ २७ ॥ २८ ॥ एवं रज इति श्लोके हरे रजोगुणबद्धत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ गुणाप्लुत इति । हरेर्नित्यं यतो नियामकत्वेन गुणानां रजआदीनां मध्यगस्तस्मादेव गुणाप्लुत इत्युच्यते न तु रजआदिगुणकार्यसंबंधाद्गुणकार्यसंबंधस्यैवाभावादित्यर्थः । कुतो गुणकार्यसंबंधाभाव इत्यत आह ॥ अनहमिति । तस्य हरेरनहं वेदनादहं वेदनस्यास्वरूपे स्वरूपवेदनस्याभावाद्गुणासंस्पर्शो रजआदिगुणकार्यसंबंधाभावः । अत्रैव श्लोके आत्मनेत्यस्यार्थस्तान्नियंतृतयेति । स हरिरात्मानं स्वं तन्नियंतृतया देवादिदेहनियंतृतयाऽऽत्मानमंतर्यामिणं बहुधाऽकरोदित्यर्थः । देहोपादानमाह ॥ प्रकृतिमिति । बहुधाऽकरोदित्येतदत्रापि संबध्यते । एकस्मिन् लवकाले एकस्यैवैकक्रियां प्रति विरुद्धं कर्तृत्वादिकं कथमित्याशंका प्रमाणेनैव परिहरति ॥ कर्ता चेति । हरिरात्मनः स्वस्य बहुधाभावे स्वयमेव कर्ता च करणं चैव कर्म च भवति । प्रकृतेस्तु बहुधाभावे कर्ता च करणं

चेति योजना । तत्र हेतुमाह ॥ स्वतंत्रत इति ॥ २९ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामेकादशोऽध्यायः ॥ ३–११ ॥ छ ॥

॥ हरिः ॐ ॥ ननु चरमस्तु विशेषाणामित्यादिग्रंथे अतः प्रवक्ष्यामीति पूर्वमतिज्ञातत्व मन्वतरमध्ये न किमपि प्रतीयते । अतः प्रकृतासंगतमिदमुच्यत इत्यतः प्रकृतसंगतिमाह ॥ कालेति । अनेन प्रकृतिजातमन्वंतरकालज्ञापनार्थोऽयं ग्रंथ इत्युक्तं भवति । एवं संगतिमुक्त्वेदानीं चरमस्तु विशेषाणामिति श्लोके विशेषाणां मध्ये चरम इत्युच्यते । स क इति न ज्ञायते । अतः प्रमाणेनैव लक्षणकथनेन तं दर्शयति ॥ मनुष्या इति । देवलोके । विद्यमान इति शेषः । विशेषेणैव दर्शनमपि दर्शनकालेऽपि यस्यांशांशित्वविशेषं द्रष्टुं नैव शक्नुयुस्तामित्यन्वयः । स एव परमाणुर्विज्ञेय इत्यर्थः । तस्मिन्नेव श्लोके नृणामैक्यभ्रमो यत इत्यत्र यतः परमाणोः सकाशान्नृणां मनुष्याणामैक्यभ्रमो भवतीत्यसंगतार्थः प्रतीयते । अतः प्रमाणशेषेण तदर्थमाह ॥ कणादाद्या इति । अनेन नृशब्दः कणादाद्यर्थकः । ऐक्यशब्दो निरंशकत्वार्थक इत्युक्त भवति। अनेकांशयुत इत्यस्यार्थः ॥ अनंतांशयुतत्वेऽपीति । भ्रम इत्यस्यार्थः ॥ भ्रांतिदर्शनादिति । भ्रांतिरूपदर्शनादित्यर्थः । ननु चरमविशेषस्यानंतांशयुतत्वं चेत्तर्हि तदशानामेतदपेक्षया परमाणुत्वात्तदंशानामेव परमाणुत्वं वक्तव्यं । तद्विहायास्यैव कुतः परमाणुत्वमुक्तमित्याशंक्य परिहरति ॥ ततोऽपीति । ततोऽपि चरमविशेषादपि । तथाऽपीति शेषः । तदंशानामित्यनुवर्तते । अनंतत्वाद्विवेकः । कर्तुमशक्य इति शेषः । अतो विवेकार्थं विवेकज्ञानार्थमस्य चरमविशेषस्य परमाणुतोक्तेत्यर्थः । प्रमाणेन व्याख्यातमप्यनेकांशयुत इति पदमनेकांशैरयुतो निरंश इति भ्रांतिनिरासाय स्वयं व्याचष्टे ॥ अनेकांशैरिति । अनेनैवाशयेन सुधायामपि वैशेषिकाधिकरणे परमाणुलक्षणमुक्त । यस्य विभिन्नावयवेषु सत्स्वपि तेषा विभागो न कदाऽपि भवितुमर्हति स परमाणुरितीति । एतल्लक्षण वाक्यस्यायमर्थः । एतत्तात्पर्यानुसारेणास्मिन् लक्षणे स्वर्गस्थैरपि मनुष्यैरित्यभ्याहारेण यस्याणोर्विभिन्नावयवेषु विद्यमानेष्वपि

तेषां विभागोंऽशांशित्वरूपो विशेषः कदाऽपि परमाण्वाख्यविशेषदर्शनकालेऽपि स्वर्गस्थमनुष्यैर्भवितुमनुभवितुं । द्रष्टुमिति यावत् । नार्हति न योग्यो भवति स परमाणुरिति । विभागशब्दस्य भेदपर्यायत्वात्तद्विशेषार्थकत्वं ज्ञेयं । भवितुमित्यस्य धातूनामनेकार्थत्वादुपसर्गाणां द्योतकत्वेन दर्शनरूपानुभवार्थकत्वं ज्ञेयं ॥१॥ सत एवेति श्लोके विद्यमानपदार्थस्याविशेषोविशेषधर्मभूतं न भवति। साधारणधर्मभूतं यत्कैवल्यं केवलत्वं द्रव्यांतरासंभिन्नत्वं स परममहानिति पृथिव्यादिनिष्ठकेवलत्वस्य परममहत्त्वमुच्यत इत्यन्यथा प्रतीत्यप्रतीतिनिरासाय तत्तात्पर्यार्थमाह॥ कालत इति। अत्र परममहत्त्व इत्यनेन भागवते परममहानित्येतद्भावप्रधानत्वेन व्याख्येयमिति सूचितं । नन्वत्र सच्छब्दो यदि विष्ण्वर्थकस्तर्हि स इत्येतावता पूर्तेः पदार्थस्यत्यादिपदपंचकं व्यर्थमेमेत्यतः क्रमेण तत्कृत्यमाह ॥ सच्छब्द इति । इति यतः अतस्तद्व्यावृत्त्यर्थं पदार्थस्येति पदमित्यर्थः । नन्वस्यापि पदार्थत्वात्कथमनेन तद्व्यावृत्तिरित्यतः पदार्थपदं व्याचष्टे ॥ सत्पदस्येति । अत्र सत्पदस्येत्यनेन भागवते सत इति षष्ठ्यंतं पदं पदार्थस्येति समासयुक्तस्य षट्शब्दस्य बुद्ध्या विविक्तस्य विशेषणमिति सूचितं । अर्थशब्दस्य मुख्याभिधेयत्वमर्थ उक्तः । तत्र प्रमाणमाह॥ मुख्येति । नन्वत्र मुख्येत्यनेन वाच्यमित्यनेन चान्यस्याभिधेयत्वमात्रमंगीकृत्य योऽर्थत्वाभाव उक्तः सोऽयुक्तः। घटादिशब्दाभिधेयस्य घटादेरर्थं पटपदार्थः घटपदार्थ इत्याद्यर्थशब्दप्रयोगस्य दृष्टत्वादित्यत आह ॥ अमुख्येष्विति । उपर्युच्चस्थले हिता निहित उपरि हितः। नीचश्च स उपरि हितश्च स तथा। अत्र यथातथाशब्दावध्याहार्यौ । यथा कदाचिन्नीचपुरुषहस्तेन किंचित्कार्यविशेषं कारयितुं तस्य भोजनाद्यर्थमुच्चस्थले उपवेशनं कार्यं तेन तूत्तमपुरुषस्येव नियमेन तथाऽमुख्येषु घटादिशब्दाभिधेयमात्रेषु घटादिषु जलादानादिकार्यार्थं कदाचिदेवार्थशब्दः प्रयुज्यते। न तु मुख्याभिधेयहराविव नियमेन। प्रलये तत्र तस्य प्रयोगाभावात्। तथोत्तमपुरुषस्य नियमेनोच्चस्थलोपवेशनं। तथा जगत्सृष्टिकालादिसर्वकालेऽपि नियमेन हरावर्थशब्दप्रयोग इति भावः।

अथ नीचादुपसर्जनत्वेन नीचादुपपदादुपरि हितः स्थितः । सोपपद इति यावत् । अर्थशब्दोऽमुख्येषु भवेदित्यर्थः । अत्र प्रमाण । मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषत इति सूत्रभाष्योदाहृतस्कांदवचनं । प्लुषति दहतीति प्लुषिरग्निकणस्तनेत्यर्थः। आदिपदेन समो मशकेनेत्यादिवाक्यग्रहणं । अस्तीति यतोऽत उक्तमिति सर्वत्र शेषः पूरणीयः । एवं पदसामर्थ्यमुक्त्वेदानीं भागवतवाक्यं योजयति ॥ परब्रह्मण इत्यादिना । अनेन परब्रह्मणः स्वरूपावस्थितस्य । षष्ठी प्रथमार्थे । स्वरूपेणावस्थितोऽद्यतोंऽप्रविष्टोऽविशेषो जगदावरकत्वरूपविशेषरहितो निरंतरस्तदेकदेशमात्रत्वादिविशेषरहितो यत्कैवल्यं । केवलस्य भावः । यत्सर्वगतं रूप तदेव परममहत्त्ववदिति भागवतवाक्ययोजना सूचिता भवति । स्वोक्तार्थं प्रमाणेनैव द्रढयति ॥ कालकोटीत्यादिना । स्यात्कोटिरस्त्रौ चापाग्रे सख्याभेदकप्रकर्षयोः । मर्यादायां च कोटिः स्यादित्यभिधानात्कोटिर्मर्यादा । अप्रमेयत्वं साकल्येन प्रमातुमशक्यत्वं । तथाशब्दावन्योन्यसमुच्चये । एवशब्दो हरिरित्यनेन संबध्यते । तद्व्यावर्त्यमाह ॥ नान्यस्येति । भागवते सत्पदार्थस्य यत्कैवल्यं तदेव परममहानित्युक्त्याऽडांतःप्रविष्टरूपादिहरिरूपाणां त्रिविधपरममहत्त्वं नास्तीति भ्रांतिं निराकरोति ॥ तस्येति । तस्य । हरेरिति संबंधः । अपि यद्यपि । नन्वेकस्मिन् रूपे एकदैव व्याप्तव्याप्ती कथं युज्येते इत्यत आह॥ परिच्छेद इति । व्यवहारार्थमंडांतःस्थितत्वादिव्यवहारार्थ । एवशब्दोऽचिंत्याद्भुतैश्वर्यादित्यनेन संबध्यते । आनंत्यं तु त्रिलक्षणमित्युक्तं त्रिलक्षणमानंत्यं स्पष्टयति ॥ गुणत इत्यादिना । ननु यद्येवं हरेः सर्वरूपाणां त्रिलक्षणमानंत्यमस्ति तर्ह्यंगुष्ठमात्रः पुरुष इत्यादिश्रुत्यादावुक्तमव्याप्तत्वमयुक्त स्यादित्याशंक्य परिहरति ॥ यद्यपीति । यद्यपि तेषां हरिरूपाणां मध्ये कचिदपि रूपेऽणुमात्रेऽपि भेदकधर्मो न विद्यते तथाप्यैश्वर्ययोगतोऽचिंत्ययोगादणुत्व विद्यते । यस्मादणुत्व विद्यते तद्बुद्ध्यवरोहार्थं तत्तद्योग्यपुरुषस्योपासनोत्पादनार्थमव्याप्तत्वं भण्यते । अणोरणीयानित्यादाविति शेषः । इदानीं भागवते यत्कैवल्यं परममहानित्यनेनोक्तं हरेर्व्याप्तरूपं स्वरूपाव-

स्थितस्येत्यादिविशेषणव्यावृत्तत्वेनोक्तमव्याप्तरूपं च नाम्ना निर्दिशति ॥ यत्तस्येत्यादिना । तस्य मूलरूपस्य शून्यं परिच्छेदत्रयशून्यं ततस्तस्य विभोर्नारायणस्य यद्द्वितीय जगतः स्रष्टृत्वरूपं तद्देशतो मितामित्यन्वयः। मितं देशत इत्येतत्पूर्वत्रोत्तरत्र च संबध्यते। इदं व्यक्त्यभिप्रायेणोक्तं । शक्त्या तु सर्वं सर्वत्र वर्तते । नन्वविशेषत्वाादेविशेषणविशिष्टे केवले भागवतपरिममहत्परिमाणस्यैव दृष्टांतत्वोक्तिरयुक्ता। समावेतौ प्रकृतिश्च पुरुषश्च नित्यौ सर्वगतौ चेत्यादिप्रमाणेन प्रकृतेः केवलभावसमव्याप्तत्वोक्त्या तस्याः परममहत्परिमाणत्वेन तत्परिणामस्यापि दृष्टांतत्वसंभवादित्याशंक्य परिहराति ॥ सर्वगतस्यापीति । अपिशब्दो यद्यपि तथाऽपीत्यर्थे । कालादीत्यादिपदेन कालाद्यभिमानिश्रीरूपं ग्राह्यं । यद्यपि समव्याप्तिरस्ति । तथाऽपि तस्याः कालाभिमानित्वेन दार्ष्टांतिकांतर्भावान्न दृष्टांतत्वं । कालाभिमानिरूपरहितस्यैव दृष्टांतत्वेन विवक्षितत्वादिति भावः । ननु स्वरूपावस्थितस्येत्युक्तजगदावरकत्वस्वभावः केवलभावोऽयुक्तः । असंकुचितसर्वस्य केवलभावस्य सुतरां जगदावरकत्वादित्यतो विवक्षितं जगदावरकत्वमाह ॥ तदन्यस्मिन्निति । चोऽवधारणे । प्रकृतिव्यतिरिक्तजगदावरकत्वस्वरूपावस्थितस्येत्यनेन विवक्षितं तत्प्रकृत्यादिसर्वावरककेवलं नास्तीत्युक्तं युक्तमिति भावः । अथवा । ननु भागवते स्वरूपावस्थितस्येत्यनेन परममहतो हरिरूपस्य यदन्यांतर्गतत्वमुक्तं तदयुक्तं । एवं कालोऽप्यनुमत इत्यनेन कालाभिमानिप्रकृतेः परममहद्धरिरूपदृष्टांतेन परममहत्त्वमुच्यते । तेन हरिरूपस्य प्रकृतेश्च समव्याप्तिरुक्ता भवति । समव्याप्तिस्तु परस्परातर्गतत्वं विना न भवति । अतोऽस्य परममहद्धरिरूपस्य प्रकृत्यंतर्गतत्वेनान्यांतर्गतत्वाभावादित्याशंक्य परिहराति ॥ सर्वगतस्येति । आदिपदेन वक्ष्यमाणानुसारेण वर्णात्मकशब्दो गृहीतः । तेन भागवते कालशब्दोऽन्योपलक्षक इति सूचितं । समव्याप्तावपि प्रकृत्यंतर्गतत्वेऽपि स्वरूपावस्थितस्येत्युक्तं विशेषणं युक्तमिति भावः । तत्र हेतुमाह ॥ दार्ष्टांतिकेति । प्रकृते दार्ष्टांतिकेऽन्तर्भावात्स्वरूपावस्थितस्येत्यनेन दार्ष्टांतिकातिरिक्तान्यांतर्गतत्वस्य विवक्षितत्वात् ।

अन्यथा दृष्टांतदार्ष्टांतिकभाव एव न स्यादिति भावः । स्वोक्तार्थे प्रमाणमाह ॥ **देव्यामिति** । स्थितमपीति संबंधः । ननु प्रकृतिगतस्य हरेरन्यगतत्वं विरुद्धमित्यत आह ॥ **यस्मादिति** । सा लक्ष्मीर्विभोर्हरेरात्मवदात्मना स्वरूपेण तुल्या वर्तते । दार्ष्टांतिकेति यावत् । अनेन दार्ष्टांतिकातिरिक्तांतर्गतत्वाभाव एवान्यगतत्वाभाव इत्युक्तं भवति ॥ २ ॥ एवं कालोऽप्यनुमित इति पदमनुमानेन ज्ञात इत्यन्यथाप्रतीतिनिरासायानूद्य व्याचष्टे ॥ **अनुमित इति** । अत्र शास्त्रपदेनापौरुषेया लोकपदेन पौरुषेया ग्राह्याः । स्वोक्तार्थेऽभिधानं पठति । **अनुमेतीति** । अत्र बुद्ध्या विविच्य ज्ञानपदस्यावृत्तिः कर्तव्या । ज्ञायतेऽनेनेति ज्ञानं शास्त्रं लोकश्च । यथा ज्ञानं शास्त्रलोकावनतिक्रम्य वर्तमानं ज्ञानं । यावंतं कालं परमाणुत्वेनावधारयेत् । देवज्ञो दैवज्ञानशीलः । सर्गाद्यैरुत्पत्तिकालाद्यवच्छेदकैः । तदनंतरमित्यपि तदनंतरकालत्वरूपावच्छेदकेनाप्यनवच्छिन्नः । तथाशब्दः समुच्चये । अपिशब्दः पूर्वपरादिभेद इत्यनेन संबध्यते । अनेन महाप्राज्ञत्वादियुक्तो देवलोकस्थो मानुषो यः कालः । प्रथमा षष्ठ्यर्थे । यस्य कालस्य परमाणुतां भुंक्तेऽवधारयति सः कालः परमाणुः । तथा देवलोकस्थो मानुषो यो यस्य कालस्य सतः परममहतो ब्रह्मणोऽविशेषभुक् उत्पत्तिकालत्वादिविशेषराहित्येन साम्यं भुंक्ते । स कालः परमो महानिति भागवतवाक्ययोजना सूचिता भवति । इदानीं भागवतेऽविशेषभुगित्यत्राविशेषपदेन सत एव पदार्थस्येत्यादीनि पूर्वमुक्तानि दृष्टांतविशेषणानि दार्ष्टांतिककालस्याप्युक्तानीत्याह ॥ **स्वरूपावस्थितस्येत्यादिना** । अत्र सतोऽविशेषभुग्यस्त्विति भागवतवाक्ये । विशेषपदेनेति शेषः । क्रमेण पूर्ववदाकाङ्क्षाक्रमेण । कालो योजनीय इति शेषः । तत्र स्वरूपावस्थितेत्यस्य दृष्टांतव्यतिरिक्तान्यानंतर्गतत्वमर्थो ज्ञातव्यः । अन्यत्समानं । नन्वेवं कालोऽप्यनुमित इत्यस्य विवरणरूपोत्तरश्लोके परमो महानित्यनेन परब्रह्मपरममहत्त्वसदृशं कालस्य यत्परममहत्त्वमुक्तं तदयुक्तं । गुणैर्महत्त्वाभावादित्यतः प्रमाणेनैव तदभिप्रायमाह ॥ **देशत इति** । वस्तुतो ज्ञानानंदादिगुणतो यथा हरेस्त्रिधाऽनंत्यं

तथाऽन्यस्य त्रिधाऽऽनंत्यं नास्तीत्यर्थः। अनेन भागवतोक्तं परममहत्त्वं कालांतर्यामिणो हरेरेव । अन्यस्य तु महत्त्वमात्रमुक्तं भवति। तदेव स्पष्टयति ॥ प्रकृतेरिति। देशकालतो देशकालाभ्यां। आनंत्यमित्यनुवर्तते। अस्या लक्ष्म्या हरेः सामर्थ्य लेशोऽपि सदा नास्तीत्यर्थः। ज्ञानानंदादिगुणेष्विति सप्तमी षष्ठ्यर्थे। सामर्थ्यलेश इत्यस्माद्बुद्ध्या लेशपदं विविच्यात्र संबंधनीयं। तेनापिपदस्य संबंधो ज्ञेयः। नकारस्यात्राप्यन्वयः। तदवरस्तस्या लक्ष्म्या अवरः। ततो वायोः। ततः शेषवींद्रहरेभ्यः। स कालः परमाणुर्वेति भागवतश्लोकं केवलजडकालपरत्वेन यावंतं देवलोकस्था इत्यादिप्रमाणेन व्याख्यायेदानीमेव कालोऽप्यनुमित इत्यारभ्य षड्यामः। सप्त वा नृणामित्यंतभागवतग्रंथे कालादिशब्दः केवलं जडकालतदभिमानिवाची न भवति किंतु तत्तदंतर्यामिहरिवाचीति भावेन प्रवृत्तं संस्थानभुक्त्या भगवानीति भागवतवाक्यं सिंहावलोकनन्यायेन प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अण्वादीनि। अणुशब्देन परमाणुरपि ग्राह्यः। भोक्तृत्वात्। द्रष्टृत्वात्। अनेन भगवान्हरिः संस्थानभुक्त्या परमाण्वादिसंस्थानद्रष्टृत्वेनाव्यक्तसूक्ष्मपरमाण्वादिरूपः परमाण्वादिस्थः परमाण्वादिशब्दवाच्यश्च। तथा अव्यक्तभुक् स्थूलकालभुक्। परममहत्त्वकालभोक्तृत्वात्परममहत्त्वकालरूपः परममहत्कालस्थः परममहत्कालशब्दवाच्यश्चेति भागवतवाक्यं व्याख्यातं भवति। सतो विशेषभुग्यस्त्वित्यर्थं कालांतर्यामिहरिपरत्वेन स्वय व्याचष्टे ॥ सत इत्यादिना। अत्र यः कालः कालांतर्यामी सतो ब्रह्मणोऽविशेषं स्वरूपं भुंक्ते। तदप्यंतर्यामिरूपमपि परममहान्। परममहदादीत्युक्त्या भोग्यात्सच्छब्दवाच्याद्ब्रह्मरूपाद्भोक्तुः कालांतर्यामिरूपस्य भेदभ्रमनिरासायाह ॥ तदेवेति। तदेव सच्छब्दवाच्यमेव ब्रह्म कालांतर्यामिरूपं न तु ततो भिन्नमित्यर्थः। एकस्यैव भोग्यत्वभोक्तृत्वेऽचिंत्यैश्वर्ययोगाद्विशेषणबलाच्च युज्यत इति भावः। ननु स कालः परमाणुर्वेत्यादिनोक्तपरमाण्वादिभोक्तृरूपस्य भेदोऽभेदो वा। आद्येऽण्वादिकालसंस्थानेत्यभेदप्रमाणविरोधः। द्वितीये तत्तन्मात्रभोक्तृत्वोक्त्ययोग इत्याशंका प्रमाणेनैव परि-

हराति ॥ सर्वमिति । सर्वत्र परमाण्वाद्यंतर्गतसर्वरूपेषु । सर्वं परमाण्वादिकं । विशेषाद्भेदप्रातीतिनिधिविशेषात् । शाक्तिव्याक्ति रूपविशेषादिति वाऽर्थः । एकस्य परमाणुमात्रस्य भोक्ता तुल्यं वर्तत इत्येकभोक्तृवत् । विशेषादित्येकं घटकमुक्त । घटकातरं चाह ॥ अचित्यात्मेति ॥ ३–४ ॥ अणुर्द्वौ परमाणू स्यादिति श्लोके त्रसरेणुः खमाकाशमेवानुत्पतन्नगाज्जगामेत्यन्यथा प्रतीतिनिरासायागादित्येतत्पदमनूद्य व्याचष्टे ॥ अगादिति । अनेन इण् गताविति धातो रूपमेतत् । गत्यर्थाना ज्ञानार्थत्वादि-त्युक्तं भवति । ननु परमाण्वादिषु कालावयवेषु विद्यमानमनेकविधत्वं प्रहररूपकालावयवस्यैव कुत इत्यत आह ॥ राशिभेदा द्वति ॥ ५ ॥ राशिभेदान्मेषादिराशिषु रविसंक्रमणभेदात्प्रहरस्य न्यूनाधिकघटिकात्मत्वं भवति । तस्मादतिरेकघटिकात्मकत्वा-त्सप्तत्वेत्यनेकविधत्वमुक्तमित्यर्थः । अत्र वाशब्दः सप्तसंख्याया अधिकसख्यार्थको ज्ञेयः। पूर्वं षड्घटिकाप्रहर इत्यत्र तु यामव्यति-रिक्तकालविशेषो ज्ञेयः। यद्वा । द्वेत्यनुवृत्त्याऽष्टघटिकात्मकप्रहरः। याम एव वृषभादिसंक्रांतिषु सूर्यसंचाराज्ज्ञेयः। सप्तघटिकात्मकया-मस्तु धनुरादिसंक्रांतिषु सूर्यसचाराज्ज्ञेय इति भावः ॥८॥ द्वादशार्धपलोन्मानमिति श्लोको जरद्गवादिवाक्यवत्परस्परानन्विता र्थकः प्रतीयते। अतः प्रमाणेनैव तत्तात्पर्यार्थमाह॥ काकणिकेति। त्रसरेणोस्तु पर्यायो नाम्ना वशी निगद्यते। जलातर्गतैः सूर्यकरैर्वशी विलोक्यते। षड्विंशभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका। तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः। यवोऽष्टसर्षपैः प्रोक्तो गुंजा स्यात्तच्चतुष्टयमिति मागधोक्तसमाख्यानादत्र काकणिकाशब्दस्य यवोऽर्थः। तं विंशांशं कृष्णलेति ब्रूयुः। अत्र च व्यंतुचविककाकचुंची गुंजा च कृष्णलेत्यभिधानात्कृष्णलापदं गुंजार्थक । तैर्विंशांशैः । माषचतुष्टये तु चतुरंगुलिदीर्घे कृते सति चतुरगुलिदीर्घ माषचतुष्टय परिणाहेन स्थौल्येन यावत्स्यात्तावद्द्वारं छिद्रं प्रस्थस्य षोडशपलाशमात्रपरिमितजलसमावेशयोग्यस्य शुभे जले स्थापितस्य पटलस्य चतुरशीत्युत्तरशतत्रयमाषपरिमितस्य ताम्रमयस्य नाडीपात्रस्य विधीयत इत्यर्थः । अत्र गुंजामाषयोः परिमाण काकणिकाचतुष्क

त्विति प्रमाणेनाचार्यैरेवोक्तं । प्रलयप्रस्थयोः परिमाण तु भवेच्छोडशभिर्माषैः सुवर्णैस्तैः पुनः स्मृतः । पलं सुवर्णाश्चत्वारः पंच वाऽपि प्रकीर्तिता इत्यगस्त्योक्तं । तथा करमध्यो हंसपदं सुवर्णं कवलग्रहः । उदंबरश्च पर्यायैः कर्ष एव निगद्यते । स्यात्कर्षाभ्यामर्धफलं शुक्तिरष्टमिका तथा । शुक्तिभ्यां च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका । प्रकुंचिः षोडशीबिल्व पलमेव च कीर्त्यते। पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतिश्च निगद्यते । प्रसृतिभ्यामजलिः स्यात्कुडवोऽर्धशरावकः । अष्टमान च संज्ञेयः कुडवाभ्यां च मानिका । शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः । शरावाभ्यां भवेत्प्रस्थश्चतुःप्रस्थैस्तथाढकमित्यादिमागधोक्त ज्ञातव्यं । अत्र चतुरंगुलिदीर्घैस्त्वित्यारभ्य द्वारं विधीयत इत्यंततात्पर्यवाक्येन चतुर्भिश्चतुरंगुलैः स्वर्णमाषैः कृताच्छिद्रमिति भागवतवाक्यं व्याख्यातं भवति । षड्दलस्येत्यनेन तात्पर्यवाक्येन नाडीपात्रपरिमाणवाचकं द्वादशार्धपलोन्मानमिति भागवतवाक्यं व्याख्यातं । नाडीपात्रे भारतवाक्योक्तोऽन्यो विशेषो द्रष्टव्यः । तदुक्तं । कर्षेणाभ्यधिकैः षड्भिः पलैस्ताम्रस्य भाजनं । त्रिंशदंगुलिविस्तारमुच्छ्रितं चतुरंगुलं । मध्यभाग तथा विद्धं नाडिका घटिका स्मृतेति ॥ नारदीये नाडीपात्रविस्तारोच्छ्रयावुक्तौ । षडंगुलमितोत्सेधं द्वादशांगुलमानन । कुर्यात्कपालवत्ताम्रपात्रं तु दशभिः पलैरिति । प्रस्थस्य शुभ जले इत्यनेन प्रस्थं जलं पिबेदिति भागवतवाक्यं व्याख्यात । शुभे जले इति जलस्य शुभत्वविशेषणं किमर्थमित्यतस्तत्प्रयोजनं दर्शयन् शुभत्वं विवृणोति ॥ भारेति । भारेणाधिक्य यस्योदकस्य तत्तथा । तेन आद्येन चेति संबधः । यद्वा । आद्येनेति तृतीया शनैरित्यर्थः । पूरणं त्विति संबंधः । उत्तरतुशब्दोऽवधारणे । वसंतकाले प्रयागस्येत्यनेन शुभत्वं विवृतं भवति । प्रयागस्योदकालाभे किं कर्तव्यमित्याशंका प्रमाणेनैव परिहरति ॥ निर्मलेनेति । समसुष्णा समोष्णा तेन समोष्णेन । अतिशैत्योष्णेन रहितेत्यर्थः । नित्यं सूर्यकिरणसंबधवारिणा ॥

ततश्चाय श्लोकार्थः ॥ द्वादशार्धपलोन्मानं द्वादशानामर्धं षट् पलानि उत् ऊर्ध्वं कर्षश्च । कर्षसहितषट्पलान्येव मान परिमाणं यस्य नाडीपात्रस्य तत्तथा । चतुरंगुलैश्च चतुरंगुलिदीर्घैश्चतुर्भिः स्वर्णमाषैः कृतच्छिद्र यस्य स तत्तथा । चतुर्माषपरिमितस्वर्णमयस्य चतुरंगुलिदीर्घस्य दंडस्य यावत्स्थौल्यं तावच्छिद्रयुक्त । एतादृशं नाडीपात्रं यावत्काले प्रस्थं जलं पिबेत् । उक्तलक्षणप्रस्थसंख्याके जले छिद्रद्वारेण जलपूर्णं सन्मज्जति तावान्काल एकनाडी ज्ञातव्येति ॥ ९ ॥ यामाश्चत्वार इति श्लोके अहश्चाहश्चाहनीति । द्विवचनेनैवाहर्द्वयार्थको न किंतु स्ववाच्यावाच्याहोरात्रार्थकः । अन्यथा रात्रेः परिमाणं न सिद्ध्येदिति ज्ञापनार्थमुभेत्युक्तमित्याशयवानभिधानं पठति ॥ यत्रोभयोः स शब्दः स्यात्तत्र द्विवचनेऽप्युभे इत्यभिधानमिति । स इति प्रथमा षष्ठ्यर्थे । द्विवचन इत्यस्यावृत्तिः । आवृत्तस्य भावप्रधानो निर्देशः । तादर्थ्ये च सप्तमी । ततश्च यो वाक्ये उभयोर्वाच्यावाच्ययोः । ज्ञापक इति शेषः । स्यात्तत्र वाक्ये द्विवचने विद्यमानेऽपि तस्य शब्दस्य द्विवचने द्वयोर्वाच्यावाच्ययोरर्थयोर्वचने वचनार्थं ज्ञापकत्वार्थमुभे इति शब्दः प्रयुज्यत इत्यर्थः । अनेनोभेऽहःशब्दवाच्यावाच्येऽहनी अहःशब्दज्ञाप्ये अहोरात्रे चत्वारश्चत्वारोऽष्टयामा अष्टयामात्मिकेति भागवतवाक्यं व्याख्यातं ॥ १० ॥ ग्रहर्क्षतारा इति श्लोकेऽनिमिष इत्यस्याक्षिनिमीलनाभावमात्रार्थत्वप्रतीतेर्विवक्षितार्थप्रतीतेश्च तन्निरासाय सिंहावलोकनन्यायेन प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ सर्वदेति । तस्य हरेः । अनेन धातूनामनेकार्थत्वाद्-निपूर्वान्मिषगताविति धातोरिदं रूपं निषेधार्थकं गत्यर्थस्य ज्ञानार्थत्वं गमनार्थत्वं चेत्युक्तं भवति । कालस्थस्येत्यनेन कालस्याप्य मुख्यतो निमिषशब्दार्थत्वं सूचितं ॥ १३ ॥ संवत्सरः परिवत्सर इति श्लोके संवत्सरादिशब्दाना केवलजडकालार्थत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थं दर्शयन् स्वयं वत्सरादिस्वरूपं च दर्शयति ॥ इडावत्सरेत्यादिना । अत्र क्रमो न विवक्षितः । नक्षत्रद्वादशे सप्तविंशतिनक्षत्राणा द्वादशावृत्तिर्यावति काले भवति स तदधिकरणभूतकाल इडावत्सरनामा । तत्र स्थितो

हरिर्मुख्यत इडावत्सरनामेत्यर्थः एवमुत्तरत्र व्याख्येयं । तिथीनां त्रिंशत्तिथीनां । स्थित इत्यनुवर्तते । अनुवत्सरवत्सरयोः स्थितिरूपावयवसाम्येऽपि चांद्रमानतो द्वादशात्मकत्वतिथिषष्ठ्युत्तरशतत्रयात्मकस्वरूपावच्छेदकभेदेन भेदो ज्ञातव्यः । द्वादशांशे द्वादशराशीनामंशे भागरूपे एकस्मिन् राशौ गुरोर्बृहस्पतेरावर्ते आ सम्यग्वर्तने स्थितो यः कालस्तिष्ठति बृहस्पतेरेकराशि स्थितौ यावान्कालो भवति स परिवत्सरस्तत्स्थो हरिश्च तन्नामेत्यर्थः । सूर्यसंबधि सौर सौरद्वादशक यस्मिन्माससमुदाये स तथा तस्मिन् । मासे माससमुदाये द्वादशसूर्यसंक्रांत्यात्मकः कालः संवत्सरनामा तत्स्थो हरिर्मुख्यतस्तन्नामेत्यर्थः । कालावयवात्ःप्रवर्तकत्वेन हरेस्तच्छब्दवाच्यत्वमुक्त्वेदानीमवयवविकलात्ःप्रवर्तकत्वेन तच्छब्दवाच्यत्वमाह ॥ एवमिति । ॥ १४ ॥ यः सृज्यशक्तिमुरुधेति श्लोके पुंसो भ्रमायेत्यत्र भ्रमायेति पदच्छेद भ्रमनिरासायानूद्य तद्व्याचष्टे ॥ अभ्रमायेति । किंचित्स्वोक्तार्थ प्रमाणेनैव स्पष्टयंस्तेनैव प्रमाणेन व्याख्यात किंचित्पदं व्याचष्टे ॥ भूतानामिति ॥ १५ ॥ यावद्दिनामिति श्लोकार्धे चतुर्दशमनून् भुजन् भगवतो दिनं यावद्वर्तत इति केवलजडदिनात्मककालस्यैव भोक्तृत्वमुच्यत इति भ्रांति निरासाय तात्पर्यार्थमाह ॥ दिनस्थ इति । अनेन दिनपदं दिनस्य हरिवाची । अनेन भुंजन्निति पुल्लिंगोपपत्तिरित्युक्तं भवति ॥ २३ ॥ स्वं स्वं कालमिति श्लोके साधिकामित्यकसप्ततेर्विशेषणमुक्तं । तत्राधिकं कियादिति न ज्ञायते । अतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ युगैकेत्यादिना । अत्र युगेति महायुगं ग्राह्यं । भुक्तिरिति भुजि पालनाभ्यवहारयोरिति धातोः स्वस्वमन्वंतरपालनं ग्राह्यं । युगैकसप्ततेरित्यनेनैकस्य मनोर्भुक्तिकालपरिमाणमुक्तं । एकस्यैकस्य परिमाण देवमानेन द्वादशसहस्रवर्षात्मकं । मनुष्यमानेन विंशतिसहस्रोत्तरात्रिचत्वारिंशल्लक्षवर्षात्मक ज्ञेयं । मिलितानां चतुर्दशमनूनामस्य भुक्तिकालस्य संख्यायां कृतायां चतुर्दशमन्वंतरात्मकस्य चतुर्मुखदिनस्य षण्महायुगन्यूनसहस्रमहायुगात्मकं परिमाणं भवति । तच्च चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यत

इति प्रमाणविरुद्धमतो विरोधपरिहाराय साधिकामिति भागवते उक्तं । तद्विवृतमाचार्यैरूर्ध्वं सार्धेत्यनेन । एतन्मनुष्यमानेन ज्ञेयं । तथाऽपि न ब्रह्मदिनपूर्तिः । मनुष्यमानेन त्रिंशतिसहस्रन्यूनत्वादतस्तत्पूर्त्यर्थमुक्तं सहस्रमिति । एतदपि मनुष्यमानेन ज्ञेयं । अत्र मनूनां प्रलयपदेन पालनाभाव एव ग्राह्यः । न त्वन्यः । तस्य तापसे सर्वथाऽसंभवात् । ननु नारायणरूपं तापसे मन्वंतरपालनाभावरूपप्रलयोऽपि न संभवतीति चेत् । सत्यं । नारायणरूपं कृष्ण उपनयनानन्तर वत्सपालनाभाववन्नारायणरूपविशेषतापसे मन्वंतरपालनाभावस्य संभवात् । तत्राद्येषु षण्मनुषु मध्ये प्रथमे प्रथमस्य स्वायंभुवस्य मनोर्द्विसहस्रं द्विशतोत्तरः सहस्र प्रलयः । आद्येष्वाद्यानां तदुत्तरसप्तमनूनां शतानां चतुरुत्तरवत्सराणां सहस्रं पृथक् पृथक् प्रलय इत्यर्थः । तदुत्तरषण्मनूनां शतानां पंचोत्तरं वत्सराणां सहस्रं पृथक् पृथक् प्रलयः । अनेन पृथक् पृथङ्मनोः पालनापालनकालपरिमाणेन विरिंचिदिनपूर्तिरुक्ता भवति । मनूक्तकालपरिमाणमिंद्रेऽप्यतिदिशति ॥ इंद्रादीनामिति । इंद्रो यज्ञनामा हरिः ॥ २४ ॥ तमोमात्रामिति श्लोके कालेनेत्यस्य क्षणलवादिरूपजडकालार्थकत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ब्रह्मणेति ॥२७॥ एवं विधैरिति श्लोकेऽस्येत्यस्य पूर्वप्रकृतहर्यर्थत्वभ्रांतिनिरासाय तत्तात्पर्यार्थं दर्शयंस्तत्र ज्ञापकं च दर्शयति ॥ अस्येति । ब्रह्मणश्चतुर्मुखस्य । त्रैलोक्याद्युगसाहस्रं बहिराब्रह्मणो दिनमित्यनेन पूर्वमुक्तत्वादित्यर्थः । ननु ब्रह्मणो दिनमित्यत्र चतुर्मुखज्ञापकाभावाद्धरिरेवास्तु । ततश्चात्रास्येत्यनेन हरिरेव स्यादित्याशंकां प्रमाणेनैव परिहरति ॥ नायुर्मानामिति । आयुर्मानं संतायुष्ट्वाद्यायुष्यमितिरित्यर्थः ॥ २२ ॥ कालोयमिति श्लोके कालशब्दस्य केवलजडकालार्थत्वभ्रांतिनिरासाय प्रमाणेन कालशब्दार्थं दर्शयन् श्लोकतात्पर्यमाह ॥ यमः काल इत्यादिना । सुदर्शनस्तदभिमानी कामस्तस्य कालस्य । काल इत्यनुवर्तते । तत्कालस्तस्य रुद्रस्य कालस्तस्य चतुर्मुखस्य । सैव दुर्गैव । जगदीशितुर्हरेः प्रभुर्नेत्यर्थः ॥ ३८ ॥ विकारैः षोड-

षड्भिरिति श्लोके षोडशविकारा उच्यंते। ते क न इति ज्ञायते। अतस्तान्प्रमाणेनैव दर्शयति ॥ दशेन्द्रियाणीति। भूतैरथूलत्वेन च युक्तो महान् भूतादि महांस्तस्माद्भूतादि महतः सूक्ष्मभूतरूपभूतादितत्त्वमहत्तत्त्वेभ्यः परेऽव्यंतभिन्ना इत्यर्थः। इद विकाराणां विशेषणं। तस्मिन्नेव श्लोके विशेषादिभिरित्यत्र विशेषशब्दस्यादिशब्दस्य च विवक्षितार्थप्रतीतेः प्रमाणेनैव तमाह ॥ पृथिवी
विशेषणं। तस्मिन्नेव श्लोके विशेषादिभिरित्यत्र विशेषशब्दस्यादिशब्दस्य च विवक्षितार्थप्रतीतेः प्रमाणेनैव तमाह ॥ पृथिवी
मिति। शब्दादीनां बहुत्वत इत्यनेन विशिष्यत इति विशेषः शब्दादिविशेषयुक्त इति विशेषशब्दार्थ उक्तः। दशोत्तर इत्यनेन दशोत्तराधिकैरित्यस्यार्थ उक्तः। अवादय इत्यादिना आदिशब्दार्थ उक्तः। लक्ष्यंतेऽतर्गता इति श्लोकार्धेऽन्ये कोटिशोऽडराशयोऽतर्गता इति हरौ कोटिसंख्याकांडशरीराणां प्रवेश उच्यते। सोऽनुपपन्नः। अंडस्यैकत्वादित्यतोऽतर्गत इत्येतदनूद्य तत्तात्पर्यार्थमाह ॥ अंतर्गता इति। स्वोक्तार्थे प्रमाणं वदंस्तेनैव प्रमाणेन श्लोकार्थं सम्यग्व्याचष्टे ॥ शरीराणामिति। चोऽवधारणे। बहुत्वेनेत्यनेन संबध्यते। अंडानां बहुत्वं तु शरीराणां बहुत्वेनैव। तथाऽतीतानागतैर्ब्रह्मांडैश्च भवेनान्यथेति संबंधः। कुतः। अस्यैवातीतानागतब्रह्मांडबहुत्वस्यैव च प्रति प्रति देवकार्येषु पृथक् पृथग्देवस्य विष्णोः कार्येष्वतीतानागतैस्तथा वर्तमानैर्ब्रह्मांडादिभिर्विष्णुसामर्थ्यतो दर्शनात्। अनेनांतर्गताः शरीराणि शरीररूपाः कोटिशोऽडराशयो यत्र हरौ प्रविष्टा लक्ष्यंते दृश्यंते। तथा कोटिशोऽन्येऽतीतानागताश्चांडराशयो यत्र प्रविष्टा लक्ष्यंत इति भागवतयोजना सूचिता। अन्य इत्यादिकं प्रकारांतरेण प्रमाणेन व्याचष्टे ॥ एकमिति। एकमंडं बहुत्वेन प्रदेशबहुत्वेन प्रत्येक हरेः रोमकूपगं ब्रह्माऽपश्यत्। तथा तेषु ब्रह्मांडेषु पृथक् पृथग्विद्यमानमात्मानमात्मानं चापश्यदित्यर्थः। रोमकूपगमित्यनेन प्रदेशबाहुल्यरूपप्रकारांतरेणाडबाहुल्यमुक्तं। तेन कोटिशोऽन्ये एकब्रह्मांडप्रदेशरूपांडराशयो यत्र हरिरोमकूपेषु प्रविष्टा लक्ष्यंते इति प्रकारांतरेण भागवतयोजनोक्ता। अत्र शरीरेऽडशब्दवृत्तिराकाशादिगुणजन्यत्वयोगेन प्रदेशेषु पद्मप्रवेशे पद्मशब्दवृत्तिवदंडशब्दप्रवृत्तिर्ज्ञेया ॥ ३९–४० ॥ यामाहुरक्षरमिति

इति प्रमाणविरुद्धमतो विरोधपरिहाराय साधिकामिति भागवते उक्तं । तद्विवृतमाचार्यैरूर्ध्व सार्धेत्यनेन । एतन्मनुष्यमानेन ज्ञेयं । तथाऽपि न ब्रह्मदिनपूर्तिः । मनुष्यमानेन त्रिंशतिसहस्रन्यूनत्वादतस्तत्पूर्त्यर्थमुक्तं सहस्रमिति । एतदपि मनुष्यमानेन ज्ञेयं । अत्र मनूना प्रलयपदेन पालनाभाव एव ग्राह्यः । न त्वन्यः । तस्य तापसे सर्वथाऽसंभवात् । ननु नारायणरूपं तापसे मन्वंतरपालनाभावरूपप्रलयोऽपि न सभवतीति चेत् । स.यं । नारायणरूपं कृष्ण उपनयनानन्तरं वत्सपालनाभाववन्नारायणरूपविशेषतापसे मन्वंतरपालनाभावस्य संभवात् । तत्राद्येषु षण्मनुषु मध्ये प्रथमे प्रथमस्य स्वायंभुवस्य मनोर्द्विसहस्रं द्विशतोत्तरः सहस्र प्रलयः । आद्येष्वाद्यानां तदुत्तरसप्तमनूनां शतानां चतुरुत्तरवत्सराणां सहस्रं पृथक् पृथक् प्रलय इत्यर्थः । तदुत्तरषण्मनूनां शतानां पंचोत्तरं वत्सराणा सहस्र पृथक् पृथक् प्रलयः । अनेन पृथक् पृथङ्मनोः पालनापालनकालपरिमाणेन विरिंचिदिनपूर्तिरुक्ता भवति । मनूक्तकालपरिमाणमिंद्रेऽप्यतिदिशति ॥ इंद्रादीनामिति । इंद्रो यज्ञनामा हरिः ॥ २४ ॥ तमोमात्रामिति श्लोके कालेनेत्यस्य क्षणलवादिरूपजडकालार्थकत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ब्रह्मणेति ॥२७॥ एवं विधैरिति श्लोकेऽस्येत्यस्य पूर्वप्रकृतहर्यर्थत्वभ्रांतिनिरासाय तत्तात्पर्यार्थं दर्शयंस्तत्र ज्ञापकं च दर्शयति ॥ अस्येति । ब्रह्मणश्चतुर्मुखस्य । त्रैलोक्याद्युगसाहस्रं बहिराब्रह्मणो दिनमित्यनेन पूर्तमुक्तत्वादित्यर्थः । ननु ब्रह्मणो दिनमित्यत्र चतुर्मुखज्ञापकाभावाद्धरिरेवास्तु । ततश्चात्रास्येत्यनेन हरिरेव स्यादित्याशंकां प्रमाणेनैव परिहरति ॥ नायुर्मानामिति । आयुर्मानं शतायुष्ट्वाद्यायुष्यमितिरित्यर्थः ॥ २२ ॥ कालोयमिति श्लोके कालशब्दस्य केवलजडकालार्थत्वभ्रांतिनिरासाय प्रमाणेन कालशब्दार्थं दर्शयन् श्लोकतात्पर्यमाह ॥ यमः काल इत्यादिना । सुदर्शनस्तदभिमानी कामस्तस्य कालस्य । काल इत्यनुवर्तते । तत्कालस्तस्य रुद्रस्य कालस्तस्य चतुर्मुखस्य । सैव दुर्गैव । जगदीशितुर्हरेः प्रभुर्नेत्यर्थः ॥ ३८ ॥ विकारैः षोड-

इति प्रमाणविरुद्धमतो विरोधपरिहाराय साधिकामिति भागवते उक्तं। तद्विवृतमाचार्यैरूर्ध्वं सार्धेत्यनेन। एतन्मनुष्यमानेन ज्ञेयं। तथाऽपि न ब्रह्मदिनपूर्तिः। मनुष्यमानेन त्रिंशतिसहस्रन्यूनत्वादतस्तत्पूर्त्यर्थमुक्तं सहस्रमिति। एतदपि मनुष्यमानेन ज्ञेयं। अत्र मनूना प्रलयपदेन पालनाभाव एव ग्राह्यः। न त्वन्यः। तस्य तापसे सर्वथाऽसंभवात्। ननु नारायणरूपं तापसे मन्वंतरपालनाभावरूपप्रलयोऽपि न सभवतीति चेत्। सत्यं। नारायणरूपं कृष्ण उपनयनानन्तरं वत्सपालनाभाववन्नारायणरूपविशेषतापसे मन्वंतरपालनाभावस्य संभवात्। तत्राद्येषु षण्मनुषु मध्ये प्रथमे प्रथमस्य स्वायंभुवस्य मनोर्द्विसहस्रं द्विशतोत्तरः सहस्र प्रलयः। आद्येष्वाद्यानां तदुत्तरसप्तमनूनां शतानां चतुरुत्तरवत्सराणां सहस्रं पृथक् पृथक् प्रलय इत्यर्थः। तदुत्तरषण्मनूनां शतानां पंचोत्तरं वत्सराणा सहस्र पृथक् पृथक् प्रलयः। अनेन पृथक् पृथङ्मनोः पालनापालनकालपरिमाणेन विरिंचादिनपूर्तिरुक्ता भवति। मनूक्तकालपरिमाणमिंद्रेऽप्यतिदिशति॥ इंद्रादीनामिति। इंद्रो यज्ञनामा हरिः॥ २४॥ तमोमात्रामिति श्लोके कालेनेत्यस्य क्षणलवादिरूपजडकालार्थकत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह॥ ब्रह्मणेति॥२७॥ एवं विधैरिति श्लोकेऽस्येत्यस्य पूर्वप्रकृतहर्यर्थत्वभ्रांतिनिरासाय तत्तात्पर्यार्थं दर्शयंस्तत्र ज्ञापकं च दर्शयति॥ अस्येति। ब्रह्मणश्चतुर्मुखस्य। त्रैलोक्याद्युगसाहस्रं बहिराब्रह्मणो दिनमित्यनेन पूर्तमुक्तत्वादित्यर्थः। ननु ब्रह्मणो दिनमित्यत्र चतुर्मुखज्ञापकाभावाद्धरिरेवास्तु। ततश्चात्रास्येत्यनेन हरिरेव स्यादित्याशंकां प्रमाणेनैव परिहरति॥ नायुर्मानामिति। आयुर्मानं शतायुष्ट्वाद्यायुष्यमितिरित्यर्थः॥ २२॥ कालोयमिति श्लोके कालशब्दस्य केवलजडकालार्थत्वभ्रांतिनिरासाय प्रमाणेन कालशब्दार्थं दर्शयन् श्लोकतात्पर्यमाह॥ यमः काल इत्यादिना। सुदर्शनस्तदभिमानी कामस्तस्य कालस्य। काल इत्यनुवर्तते। तत्कालस्तस्य रुद्रस्य कालस्तस्य चतुर्मुखस्य। सैव दुर्गैव। जगदीशितुर्हरेः प्रभुर्नेत्यर्थः॥ ३८॥ विकारैः षोड-

त्यागश्चोच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थं दर्शयंस्तेनैव प्रमाणेव त्यक्तवाक्सरस्वत्योरभिमन्यमानं दर्शयति ॥ यां तत्यजेति । मानुषीवाक् मनुष्यवागभिमानिनी । देवीं वाच वागभिमानिनी ॥ ३३ ॥ कदाचिद्ध्यायतुः स्रष्टुरित्यादिनोक्ता वेदादिसृष्टिरेव स वै विश्वसृजामिति इत्यादिश्लोकेषु प्रश्नोत्तराभ्यां प्रपंचिता । तत्र केवलजडसृष्टिरेवोच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अभिमानिन इत्यादिना । शब्दतः शब्दरूपान्वेदाश्चेत्यन्वयः । वाचा मुखचतुष्टयेन सर्वाभिमानिनः सर्वेषां यज्ञादीनामभिमानिनश्चक्षपेऽकल्पयत् । यज्ञादीनित्यत्रादिपदेन भागवतोक्तशस्त्रमिज्यादिक ग्राह्यं । अनेन द्विविधं भारतादिकमित्युक्तं भवति । तथा भागवते इतिहासपुराण चेत्यत्र हरिमुखाच्छ्रुत्वेति शेषः पूरणीय इति चोक्तं भवति । तेन ऋग्यजुःसामाथर्वाख्यानिति भागवतवाक्येऽपि हरिमुखाच्छ्रुत्वेति शेषः पूरणीय इति सूचित भवति ॥ ३४ ॥ ३५ ॥ सावित्रं प्राजापत्यं चेति श्लोकार्धे प्रजापतेश्चतुर्मुखस्य कर्म प्राजापत्यमिति प्रतीतिनिरासाय प्रमाणेनैव तदर्थमाह ॥ प्राजापत्यमिति । एका च सा भार्या चैकभार्या एकभार्यामेवं ऋतुकाल एव गच्छतीति एकभार्यर्तुगामी । यद्वा । एकैव भार्या यस्य स एकभार्यो ऋतुकाल एव भार्या गच्छतीति ऋतुगामी । एकभार्यश्चासौ ऋतुगामी च । तस्य भावस्तत्ता । वार्ता सचयेत्यर्धे वार्तासचय शब्दौ दुर्गमार्थत्वात्प्रमाणेनैव व्याचष्टे ॥ वार्तेति ॥४२॥ वैखानस इति श्लोकार्धे वैखानसादिपदचतुष्टयस्य दुर्गमार्थत्वात्प्रमाणेनैव विवक्षितमर्थमाह ॥ वैखानस इति ॥ ४३ ॥ आन्वीक्षिकीति श्लोकार्धे आन्वीक्षिकीत्रयीशब्दयोरक्षपादशास्त्रवेदत्रयार्थभ्रांतिर्भवति । तथा दंडेन काष्टेन नीतिरिति दंडनीतिशब्दार्थः प्रतीयते । वार्ताशब्दस्य वार्ता संचयेत्यनेनैव पौनरुक्त्यं च प्रतीयते । अतस्तन्निरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ आन्वीक्षिकीत्यादिना । धर्मा वेदत्रयोक्ता धर्मास्त्रयीशब्देन प्रकीर्तिताः । एवमन्वीक्षित्यादिशब्दार्थमुक्त्वेदानी भागवते आन्वीक्षिक्यादिपदैरान्वीक्षिक्यादिभिर्यज्जीवन तदप्युपलक्षणत्वेन ग्राह्य

मित्याशयवानाह ॥ एताभिरिति । ऋग्यजुःसामाथर्वाख्यामित्यादौ ऋगादीनां विरिंचपूर्वादिमुखेभ्यः क्रमेणोत्पत्तिमुक्त्वैवं व्याहृत-यश्चासन्नित्यर्धे प्रणवसहितव्याहृतित्रयस्यैवंशब्देन पूर्वादिमुखेभ्य उत्पत्तिरुच्यते । तेन प्रणवस्योत्तरमुखादुत्पत्तिभ्रमं निराकरोति ॥ प्रणव इति । स्वोक्तार्थे प्रमाणमाह ॥ प्रणव इति ॥४४॥ स्पर्शास्याभवन् जीवा इत्यादि श्लोके स्पर्शानां चतुर्मुखजीवाद्यैक्यमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ स्पर्शास्तस्येति । तस्येति सर्वत्र संबध्यते । तस्य चतुर्मुखस्य स्पर्शाः कादयो मावसाना वर्णाः । स्वरा अकारादय औकारांताः । ऊष्माणः शषसहाः । अंतस्था यरलवाः । अनेन भागवते स्पर्शादीना जीवादिजत्वेन जीवादिनामवत्त्वमेव न तु जीवादिस्वरूपत्वमित्युक्तं । तत्र प्रमाणमाह ॥ यस्मादिति ॥४६॥ शब्दब्रह्मेति श्लोकार्धे विरिंचस्य शब्दब्रह्मणा वेदेनैक्यं चोच्यते । तथा व्यक्ताव्यक्तात्मनः स्पृष्टास्पृष्टस्वरूपपदार्थस्वरूपस्येति स्पृष्टास्पृष्टपदार्थैक्यं चोच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ शब्दब्रह्मात्मकमित्यादिना । अनेन बृहजातिजीवकमलासनशब्दराशि-ष्विति धातोः शब्दानां ब्रह्मणि राशावात्मा स्वरूपं प्रतिपाद्यत्वेन यस्य विरिंचस्य स तथा तस्येति । तथा व्यक्ताव्यक्तयोर्ब्रह्मांड महत्तत्त्वयोरात्मा व्याप्तस्तस्येति । चशब्दाद्ब्रह्मा व्यक्ताव्यक्तात्मक इति व्यक्ताव्यक्तात्मकपदयोर्विग्रहः सूचितो भवति ॥४७॥ नन्व भिध्यायतः सर्गं दशपुत्राः प्रजज्ञिरे इत्यारभ्य मनसो देहतश्चेदं जज्ञे विश्वकृतो जगदित्यंत ग्रंथेनोक्ताया मरीच्या दिसृष्टेस्तथा दक्षादेर्जायमानसृष्टेर्विस्तृतत्वे सति कथं ऋषीणां भूरिवीर्याणामित्यनेन तत्सृष्टेरविस्तृतत्वमुच्यत इत्यतस्तदभिप्रायमाह ॥ ऋषीणामिति । पुरुषसिंह इत्यादौ पुरुषशब्दः श्रेष्ठार्थको दृष्टस्तेनात्र सिंहशब्दः श्रेष्ठार्थकः । भावप्रधानो निर्देशो विस्तृतत्वा र्थकः । ततश्चाभिध्यायत इत्यनेन पूर्वनेनाविस्तृतत्वं प्रति सिंहावलोकनं । पश्चात्तनस्य विस्तृतत्वावलोकनं निमित्त भवतीत्यर्थः । उक्तार्थे प्रमाणमाह ॥ यत्रेति । यत्र येष्वर्थेषु मध्ये पश्चात्तनोऽर्थः श्रेष्ठो विस्तृतस्तत्र व्यत्ययेन तस्य पश्चात्तनस्य सिंहावलोकनं

त्यागश्चोच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थं दर्शयंस्तेनैव प्रमाणेव त्यक्तवाक्सरस्वत्योरभिमन्यमानं दर्शयति ॥ यां तत्यजेति । मानुषीवाक् मनुष्यवागभिमानिनी । देवीं वाच वागभिमानिनी ॥ ३३ ॥ कदाचिद्ध्यायतुः स्रष्टुरित्यादि नोक्ता वेदादिसृष्टिरेव स वै विश्वसृजामिति इत्यादिश्लोकेषु प्रश्नोत्तराभ्यां प्रपंचिता । तत्र केवलजडसृष्टिरेवोच्यत इति भ्रांति निरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अभिमानिन इत्यादिना । शब्दतः शब्दरूपान्वेदाश्चेत्यन्वयः । वाचा मुखचतुष्टयेन सर्वाभिमानिनः सर्वेषां यज्ञादीनामभिमानिनश्चक्रपेऽकल्पयत् । यज्ञादीनित्यत्रादिपदेन भागवतोक्तशस्त्रमिज्यादिक ग्राह्यं । अनेन द्विविधं भारतादिकमित्युक्तं भवति । तथा भागवते इतिहासपुराण चेत्यत्र हरिमुखाच्छ्रुत्वेति शेषः पूरणीय इति चोक्तं भवति । तेन ऋग्यजुःसामाथर्वाख्यानिति भागवतवाक्येऽपि हरिमुखाच्छ्रुत्वेति शेषः पूरणीय इति सूचित भवति ॥ ३४ ॥ ३५ ॥ सावित्रं प्राजापत्यं चेति श्लोकार्धे प्रजापतेश्चतुर्मुखस्य कर्म प्राजापत्यमिति प्रतीतिनिरासाय प्रमाणेनैव तदर्थमाह ॥ प्राजापत्यमिति । एका च सा भार्या चैकभार्या एकभार्यामेवं ऋतुकाल एव गच्छतीति एकभार्यार्तगामी । यद्वा । एकैव भार्या यस्य स एकभार्यो ऋतुकाल एव भार्यां गच्छतीति ऋतुगामी । एकभार्यश्चासौ ऋतुगामी च । तस्य भावस्तत्ता । वार्ता सचयेत्यर्धे वार्तासचय शब्दौ दुर्गमार्थत्वात्प्रमाणेनैव व्याचष्टे ॥ वार्तेति ॥४२॥ वैखानस इति श्लोकार्धे वैखानसादिपदचतुष्टयस्य दुर्गमार्थत्वात्प्रमाणे नैव विवक्षितमर्थमाह ॥ वैखानस इति ॥ ४३ ॥ आन्वीक्षिकीति श्लोकार्धे आन्वीक्षिकीत्रयीशब्दयोरक्षपादशास्त्रवेदत्रयार्थ-भ्रांतिर्भवति । तथा दण्डेन काष्टेन नीतिरिति दंडनीतिशब्दार्थः प्रतीयते । वार्ताशब्दस्य वार्ता संचयेत्यनेनैव पौनरुक्त्यं च प्रतीयते । अतस्तन्निरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ आन्वीक्षिकीत्यादिना । धर्मा वेदत्रयोक्ता धर्मास्त्रयीशब्देन प्रकीर्तिताः । एवमन्वीक्षित्यादिशब्दार्थमुक्त्वेदानी भागवते आन्वीक्षिक्यादिपदैरान्वीक्षिक्यादिभिर्यज्जीवन तदप्युपलक्षणत्वेन ग्राह्य

त्वांगीकारे बाह्यविरोधमुक्त्वेदानीं तच्छ्लोकस्थपदेनापि विरोधमाह ॥ दुष्टानामिति । यदि वेदव्यासेनोक्तमज्ञानमूलकं स्यात्तर्हि दुष्टमोहकमिदं भवत्वितीच्छया वेदव्यासस्य तदुक्तिर्न स्यात् । विप्रलंभको हि परमोहनेच्छया वाक्यं प्रयुंक्ते । विप्रलंभकस्तु यथावस्थितार्थं ज्ञात्वैव तद्विपरीतार्थवाक्यप्रयोक्ता लोके दृष्टः ।' तथा च दुष्टानां मोहनार्थायेत्युक्तमयुक्तं स्यात् । न चैवं । अतश्चा-विवेकेनेत्यस्याज्ञानामर्थो न भवतीति भावः ॥ ३३–३४ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां चतुर्दशोऽध्यायः ॥ ३–१४ ॥ छ ॥

॥ हरिः ॐ ॥ यस्या न विद्या चरितमिति श्लोके निरस्तसाम्यातिशयत्वादिविष्णुलिंगाद्विष्णोरेव पिशाचचर्याचरण मुच्यते इति भ्रांतिनिरासाय ब्रह्मादयो यत्कृतसेतुपाला इत्युत्तरः श्लोकः प्रवृत्तस्तस्य तात्पर्यं प्रमाणेनैव दर्शयति ॥ पिशाचचर्यामिति । गर्भिणीवधनोदार्थं गर्भिण्या वधेन जातपापपरिहारार्थं । विष्णवाज्ञैवेत्यनेनाज्ञाकरी तस्य पिशाचचर्येति भागवत वाक्यं व्याख्यातं । अहो विष्णुर्विडंबकृदित्यनेन अहो विभूम्नश्चरितं विडंबनमिति भागवतवाक्य व्याख्यातं । अनेन योऽयं निरस्तसाम्यातिशयः सता गतिर्हरिः सः पिशाचचर्यामचरत् रुद्रमचारयत् । कुतो यतस्तस्य रुद्रस्य पिशाचर्या तस्य विष्णोराज्ञाकरीति पिशाचचर्यामचरदित्युक्तार्थं प्रत्यज्ञाकरी तस्य पिशाचर्येत्यस्य हेतुत्वमचरदित्यस्यातणीन णिजर्थत्वं । तथा न यस्य लोके स्वजनः परो वेत्यारभ्य अहो विभूम्नश्चरितं विडंबनमित्यंत श्लोकजातस्य केवलभगवत्प्रतिपादकत्व सूचितं ॥ २८ ॥ वयं भगवतेति श्लोक दितेहिरण्यकशिपुहिरण्याक्षाख्यस्वपुत्रयोर्भगवद्धस्तवधेच्छाकन्याऽर्थाद्धरिहस्तहतस्य भक्तस्या भक्तस्य चोत्तमलोकप्राप्तिर्भवतीति प्रतीयत । सा च बहुतरप्रमाणविरुद्धेत्यतः प्रमाणनैव तत्तात्पर्यार्थमाह ॥ विष्णुहस्तेति । लोक उत्तमलोकः । अन्यस्याभक्तस्य । अनेन तात्पर्यवाक्येन श्रुत्वा भागवतं पौत्रमिति भागवतश्लोक उक्ततात्पर्यार्थो भवति । ननु यदि भक्तस्यैव लोको नाभक्तस्य तर्हि वेदव्यासेन तत्तथैव विवरेन कुतो नोक्तमित्यत आह ॥ तथाऽपीति ।

कचिद्ग्रंथेऽसुरमोहाय न विविक्तं विविक्तं चेत्यर्थः । न केवलमन्यस्य लोकाभाव एव किंतु तमश्च भवतीत्याशयवास्तत्र वाक्यमुदाहरति । हिरण्यकशिपुश्चेति । ननु हिरण्यकशिपुश्चापीति श्लोकस्यैव विवक्षुरत्यगात्मनोरित्युत्तरार्धे पुत्रसामर्थ्येनाभक्तस्यापि तमोऽतिक्रांतरूपसद्गतेरुक्तत्वात्कथमन्यस्य न लोक इत्युच्यत इत्यतः प्रमाणेनैव तदभिप्रायमाह ॥ स्वतः सद्गतीति । हेतुता । सद्गति प्रतीति शेषः । ननु केय योगेत्यत आह ॥ योग्यतेति ॥५०॥ इति श्रीभागवततात्पर्यटिप्पण्यां पंचदशोऽध्यायः ॥३–१५॥ छ ॥

॥ हरिः ॐ ॥ ये नित्यमिति श्लोकेऽनिमित्तेन कारणराहित्येनेत्यन्यथाप्रतीतिनिरासाय तत्पदमनूद्य व्याचष्टे ॥ अनिमित्तेनेति । अनेन अकारवाच्यहरिरेव निमित्तमुद्देश्यो यस्य धर्मस्येति विग्रहो सूचितो भवति ॥ १४ ॥ ननु मुक्तस्थानवैकुंठे खडितधीत्वलिंगेनामुक्तानां वैमानिकाना स्थितिर्वैमानिकाः सललना इत्यनेन कथमुच्यत इत्याशंका प्रमाणेनैव परिहरस्तेनैव प्रमाणेन जयविजययोर्वक्ष्यमाणे सनकादिनिवारणे कारणं च दर्शयति ॥ मुक्ताश्चैवेति । एवशब्दो द्वेधेत्यनेन संबध्यते । अमुक्तानां भ्रम इत्यनेन जयविजययोरमुक्तत्वेन सनकादिविषयभ्रम एव तन्निवारणे कारणमिति सूचयति । न मुक्तानां कचिद्भवेदिति प्रमाणोक्तेर्थे एतद्भागवतस्य वाक्य ज्ञापकमाह । रजो रजोगुणकार्यं ॥ १७ ॥ मुक्तस्थानवैकुंठे पारावतान्यभृतसारसचक्रवाकेत्यादिभागवतोक्ततिर्यगादयोऽमुक्ता एव संति न मुक्ता इति भ्रांतिं प्रमाणेनैव परिहरति ॥ तिरश्चीना इति ॥ १८ ॥ मंदारकुंदकुरबेति श्लोके मदारादीनि सुमनसः पुष्पाणि तुलसिकाभरणेन तस्यास्तुलसिकाया गंधेऽर्चिते सति यस्मिन् गंधे तपो बहु मानयंतीत्यन्वयार्थभ्रांतिनिरासायापेक्षिताध्याहारेण विवक्षितार्थान्वयावाह ॥ भक्तैरिति । तुलिसिकाभरणेनेत्यस्यार्थः ॥ भगवतेति । तेन तुलसिकाभारणं यस्येति भगवतः स तथा तेनेति विग्रहः सूचितो भवति ॥ १९ ॥ यन्न व्रजंत्यघेनि श्लोकेऽघभिदो हरे रचनानां जगत्सर्जनादिकर्मणामनुवादो येषां ते यं वैकुंठं न व्रजंतीति हरिचरित्रं गृणतां वैकुंठप्राप्तिरुच्यते । सा बहु

प्रमाणबाधितेत्याशंकां परिच्छेदेन परिहरति ॥ अरत्वनेति ॥ २३ ॥ येऽभ्यर्थितामपीति श्लोके यत्र यस्यां नृगतौ सहधर्मं धर्मेण सह वर्तमानं तत्त्वविषयं ज्ञानं नो न भवति तां नृगतिं ये प्रपन्नास्तेऽमुष्य मायया संमोहिता भगवत आराधनं न वितरंतीत्यन्वयभ्रांतिनिरासाय यथावदन्वयमाह ॥ ये नृगतिमिति । एवमन्वयमुक्त्वा तात्पर्यार्थमाह ॥ धर्मज्ञानेति ॥ २४ ॥ वक्त्रस्रुवेति श्लोकार्धे वक्त्ररूपया स्रुवेत्यर्थभ्रमनिरासाय तस्य विवक्षितमर्थमाह ॥ वक्त्रस्थयेति । अनेन वक्त्रे विद्यमाना स्रुरित्युत्तरपदलोपी समासः सहार्थे तृतीयेत्युक्तं भवति ॥ २८ ॥ वेत्रेणचास्खलयतेति श्लोकार्धे भगवत्प्रतिकूलशीलावित्यनेन जयविजययोर्भगवद्विरुद्धस्वभावत्वमुच्यते । तदसत् । तथात्वे तयोरसुरत्वेन हरिद्वारपालकत्वासंभवात्प्रमाणविरुद्धत्वाच्चेत्यतः प्रमाणेनैव तदभिप्रायमाह ॥ जयस्येति । ब्रह्मशापतः कदाचित्प्रातिकूल्यमित्यन्वयः । अत्र कृष्णावतारपर्यंतमित्यनेन जयविजययोर्हरिप्राप्तिप्रातिकूल्यं बहुकालावस्थितत्वेनैव शीलत्वं भागवते उक्तं न तु स्वरूपत्वेनेति सूचितं भवति ॥३०॥ तस्मिन्प्रशांतेति श्लोकार्धे आत्मवत्कुहकयोरात्मा मना विद्यते यस्मिंस्तदात्मवत्कुहकं ययोस्तौ तथा तयोर्वा युवयोः कः परिशंकनीय इत्यन्वयार्थभ्रांतिनिरासाय विवक्षितान्वयार्थावाह ॥ युवयोरिति । अनेन कुहकयोर्वा युवयोरात्मवज्जीववच्चवज्जीवे यथा युवयोर्जीवयोर्विषमस्वभाव इदं मित्रमयं शत्रुरिति विरुद्धस्वभावत्वं तथा गतविग्रहे गतवैरे तस्मिन्प्रशांतपुरुषे प्रकृष्टसुखरूपे पूर्णषड्गुणे हरौ विषये शत्रुत्वेन भयप्रदत्वेन शंकनीयः कोऽस्ति न कोऽपीति भागवतवाक्य व्याख्यातं । ततश्च किमित्यतस्तदभिप्रायमाह ॥ तस्मादिति । यस्माद्विष्णोर्भयप्रदः शत्रुः सर्वथा नास्ति तस्मात्तच्छंकया युवाभ्यां क्रियमाणोऽस्मन्निषेधो व्यर्थ इत्यर्थः ॥ ३२ ॥ न ह्यंतरं भवतीति श्लोके समस्तकुक्षिस्वरूपे इह भगवत्यन्तर नास्तीत्यन्यथाप्रतीतिनिरासायापेक्षिताध्याहारेण तत्तात्पर्यार्थमाह ॥ समस्तेति । तस्मिन्नेव श्लोके नभासि नभ इवात्मनि परमात्मन्यात्मानं जीवं पश्यंति परमैक्येन पश्यंतीत्यन्यथाप्रतीतिनिरासाय तथा यत्र

युवयोः सुरलिंगिनोः किमित्युत्तरार्धस्य प्रकृतानन्वितत्वभ्रांतिनिरासाय चान्वयतात्पर्यार्थावाह ॥ अस्मिन्नित्यादिना । यत्रेत्यस्यार्थः ॥ अस्मिंल्लोक इति । अस्मिंल्लोके तत्स्थं भगवद्रूप बहिष्ठैक्येन बहिस्स्थितभगवद्रूपेणैक्येन पश्यंति धीरास्तत्र तास्मिंल्लोके प्रत्युदरमंतस्थे उदर मुदरं प्रतीति प्रत्युदरं सर्वोदराणि तत्स्थे हरौ । अनेनोदरणेति भेद उदरभेदोऽस्यास्तीति निमित्तत्वेनेत्युदरभेदि उदरभेदि च तद्भयं चेति विग्रहः सूचितः । युवाभ्यामित्यनेन भागवते युवयोरिति षष्ठी तृतीयार्थ इत्युक्तं भवति । एवमन्वयार्थमुक्त्वेदानीं तदभिप्राय माह ॥ सर्वांतर्यामित्वेनेति । नन्वावाभ्यां हरौ भयमस्तीति भावः कुत इति भवद्भिः कस्माज्ज्ञातमिति जयविजयशंका परिहाराय भागवते यतोऽस्येत्युक्तं तदभिप्रायमाह ॥ अन्यथेति । अनेन यतोऽस्य भगवद्दर्शनस्य निवारणं कृतमिति तद्वाक्यं व्याख्यातं भवति । स्वोक्तार्थे प्रमाणमाह ॥ सर्वोदरगतामिति । चस्त्वर्थः । मृतानामित्यनेन संबध्यते ॥ ततश्चायं श्लोकार्थः ॥ समस्तकुक्षौ स्थिते इह भगवत्यंतरं भेदो न ह्यस्ति । मास्तु भेदस्ततः किमित्यत आह ॥ आत्मानमिति । धीरा नभसि व्याप्ता‑ काशे नभो घटादिपरिच्छिन्नाकाशमिव यत्र यस्मिंल्लोके आत्मानं सर्वोदरांतस्थं हरिमात्मनि व्याप्ते बहिष्ठे हरौ तदैक्येन पश्यंति तत्र तास्मिंल्लोके सुरलिंगिनोर्युवयोः सुरलिंगवद्भ्यां युवाभ्यामुदरभेदिभयमुदरे सर्वोदरगतहरौ भेदि भेदनिमित्तकं किं किमर्थं व्युत्पा दितं । सर्वांतर्नियामकत्वेन कस्मादपि भयरहितस्यास्य हरेरस्माद्भयमस्तीति भावो व्यर्थः कृतः । इद भवद्भिः कस्माज्ज्ञात मित्यत आह ॥ यतोऽस्येति । यतः कारणाद्भगवद्दर्शनार्थं भागवतानां नोऽस्य हरिदर्शनस्य निवारणं कृतं । अन्यथा किमिति युवाभ्यां निवारणं क्रियेतातो ज्ञायते हरेर्भयमस्तीति भावो युवाभ्यां कृत इति ॥ ३३ ॥ ननु लोकानित इति श्लोकार्धे यत्र लोकेषु इमे त्रयो यूयं हरे रिपवो भवथ तांल्लोकान्व्रजतमिति द्वयोर्जयविजययोस्त्रित्वं कथमुच्यत इत्यतस्तत्र निमित्तत्वेन यत्रेति भागवतपदं व्याचष्टे ॥ त्रय इति । निमित्तसप्तमीयं । अनेन प्रत्येकं जयस्य

विजयस्य च देहत्रयं निमित्तीकृत्य भागवते त्रयो रिपव इत्युक्तं न तु द्वयोर्मिलित्वा त्रित्वाभिप्रायेणेति सूचित । तथा लोकशब्दो देहार्थक इति च सूचितं । तथा यत्र यद्देहत्रितयं निमित्तीकृत्यास्य हरेस्त्रयो रिपवो युवां भवतस्तांल्लोकान्देहान्व्रजतामिति भागवतवाक्यं योजितं भवति ॥ ३४ ॥ भूयानघाद्वीति श्लोकेऽशेषं सुरहेलनं सुराणां सनकादीनां हेलनमपराधं यो दंडो हरेतेति सनकाद्यपराधमात्रपरिहारको दंड इति प्रतीयते सोऽनुपपन्नः । तथात्वेऽपिपदं व्यर्थं स्यादित्यतस्तद्व्याचष्टे ॥ सुरेति । सुरहेलनस्य ब्रह्माद्यन्यसुरहेलनस्यापि । मावोनुतापकलयेति तस्यैवोत्तरार्धे व्रजतोर्नो मोहो मा भवेदिति भूमावुत्पन्नयोः स्वाशयोर्मोहाभावः प्रार्थ्यत इत्यन्यथाप्रतीतिनिरासाय यथावद्व्याचष्टे ॥ अत्रेति। भागवतस्थेहशब्दार्थोऽत्रेति । वैकुंठ इत्यर्थः ॥३६॥ हंसश्रियोरिति श्लोकार्धे शशिकेसरशीकरांबुमित्यत्र चंद्रस्य केसरा उच्यंते । तदयुक्तं । न हि चंद्रस्य किञ्जल्कापरपर्यायकेसराः संतीत्यतोऽनूद्य तस्य विवक्षितमर्थमाह ॥ केसरा इति ॥ ३८ ॥ विद्युत्क्षिपन्मकरेति श्लोके मणिमत्किरीटं कौस्तुभेन युक्तामिति हरेर्विशेषणद्वयमुक्तं । तत्र किरीटकौस्तुभशब्दयोः केवलजडकिरीटाद्यर्थत्वभ्रांतिनिरासाय प्रमाणेनैव तदभिमानिनावाह ॥ कौस्तुभ इति। ब्रह्मणश्चतुर्मुखस्य रूपमभिमन्यमानं । चूडामणिश्च चूडामण्यभिमानिनी । चूडामणिः शिरोरत्नमित्यभिधानाच्छिरोरत्नवाचिना चूडामणिपदेन मणिमत्किरीटं गृह्यते ॥४१॥ अत्रोपसृष्टमिति श्लोकार्धे स्वानां धिया विरचितं कल्पितमुत्पादितं वेति सनकादिदृष्टहरिरूपस्य कल्पितत्वादिकमुच्यते। तत्तु प्रमाणबाधितमित्यतः प्रमाणेनैव तदर्थमाह॥ अविद्यमानेति। पूर्वसिद्धेष्वतीतार्थेषु स्मृतिस्तु स्मृतिरेवोक्ता न तु रचनशब्दोक्तेत्यर्थः ॥४२॥ अंतर्गत इति श्लोकार्धेऽक्षरजुषामपीत्यपिशब्दस्य समुच्चयार्थत्वप्रतीतिनिरासाय तथाऽक्षरं जुषंति प्रीणयंतीत्यर्थप्रतीतिनिरासाय च तदनूद्य व्याचष्टे॥ अक्षरेति।अनेनाक्षरजुषामपि यदा संक्षोभं चकार तदाऽन्येषां संक्षोभं चकारेति किमुवक्तव्यमित्यपिशब्दः कैमुत्यार्थकः। तथा जुषप्रीतिसेवनयोरिति धातोरत्र सेवार्थको जुषशब्द इति सूचितं भवति ॥ ४३ ॥

नात्यंतिकं विगणयंतीति श्लोके ये त्वदंघ्रिशरणा भवतः कथाया रसज्ञाः कुशलास्तेषु पुरुषास्तवांतिकमपि प्रसादं न विगणयंतीत्युक्त्याऽऽत्यंतिकप्रसादापेक्षया हरिकथाश्रवणस्योत्तमत्वमुच्यत इति भाति । तदयुक्तं । कर्मणा त्वधमः प्रोक्त इत्यादिप्रमाणेन कथा श्रवणादिजन्यप्रसादस्य मध्यमत्वोक्तेस्तद्विरोधादित्यतः प्रमाणोदाहरणपूर्वकं तदभिप्रायमाह ॥ भक्तिज्ञानेति । चोऽवधारणे । यो भक्तिज्ञानपरिपाकात्किंचित्पूर्वमेवमुच्यते तत्र तस्मिन्पुरुषे आनंदः पूर्णतां न व्रजेदिति ब्रह्मतर्के यत उक्तमतस्तेषां मोक्षेच्छूनां परिपाकतः पूर्वं ब्रह्मदृष्ट्या मुक्तिप्राप्तेर्मोक्षेच्छुभ्योऽनपेक्षाणामानंदोद्रेको भवतीत्यर्थः । अनेन नात्रात्यंतिकप्रसादशब्देन परिपक्वैकांतभक्तिज्ञानजात्यंतिकप्रसादो विवक्षितः किं त्वपरिपक्वभक्तिज्ञानजमोक्षसाधनजात्यंतिकप्रसाद एव विवक्षितः । तथा हरिकथाश्रवणादिजप्रसादमात्रस्योत्तमत्वं न विवक्षितं किं तु त्वदंघ्रिशरणादित्यनेन सूचितपरिपक्वैकांतभक्तिज्ञानजात्यंतिकप्रसादस्यैवोत्तमत्वं विवक्षितं । पूर्णानंदसाधनस्यापूर्णानंदसाधनादुत्तमत्वस्य युक्तत्वादित्युक्तं भवति । भक्तिज्ञानपरिपाकादिति पूर्वप्रमाणस्यार्थिकेऽर्थे स्पष्टं प्रमाणमाह ॥ मुमुक्षोरिति । सुखी अधिकसुखीत्यर्थः ॥ ४८ ॥ कामं व्रजेम इति श्लोके सनकादिभिर्निरयदुःखं प्रार्थ्यत इति भाति । तदयुक्तं । देवानां निरयो नास्ति तमश्चापि कथंचनेत्यादिप्रमाणविरोधादित्यतः प्रमाणेनैव तदभिप्रायमाह ॥ यावदिति । तत्र दुःखावस्थाया ॥ ४९ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां षोडशोऽध्यायः ॥ ३-१६ ॥ छ ॥

॥ हरिः ॐ ॥ तद्वः प्रसादयाम इति श्लोके ब्रह्म ब्राह्मणकुलं मे परं दैवमित्युक्त्या ब्राह्मणस्य हर्युत्तमत्वं वास्तवमिति भाति । तथा सोऽहं भवद्भ्य इति श्लोकार्धे विप्ररूपसनकादिभ्यः कीर्तिगुणलाभोक्त्या हरिकीर्तेः कादाचित्कत्वं प्रतीयते । तदुभयं प्रमाणविरुद्धमित्यतः प्रमाणेनैव तदभिप्रायमाह ॥ सर्वोत्तमोऽपीति । तुशब्दो मोहनायेति वक्ष्यमाणस्यानुकर्षणार्थः । लोकानां मोहनाय विप्रादेः पूजनाय च विप्रादेः सकाशात्स्वस्यावमत्वं । कचिद्वक्तीति शेषः । ननु मोहनाद्यर्थमिदमिति कुत

इत्यतस्तत्र हेतुः ॥ सर्वोत्तम इति । तथा मोहनाद्यर्थमेव कचित्ततो विप्रादिभ्यो गुणलब्धिं कीर्त्यादिगुणलाभं । तस्यति शेषः । ब्रूते । तत्र हेतुः ॥ नित्यपूर्णेति । अन्ये कचिद्ब्रूयुस्तत्तदुक्तेर्हेयुक्तेरनुसारत एवेत्यर्थः ॥ ६ ॥ यत्सेवया चरणेति श्लोके येषां विप्राणां सेवा यत्सेवेत्येकपदत्वभ्रांतिनिरासायापेक्षिताध्याहारेण तस्य विवक्षितान्वयार्थोवाह ॥ विप्राणामिति । यद्यस्मात्कारणात् । ननु स्यादिदं भागवतवाक्यस्य मोहनाद्यर्थत्ववर्णनं युक्तं यदि हरेः सर्वोत्तमत्वादिकं प्रामाणिकं स्यात् । न चैवं । प्रत्युत प्रत्यक्षसिद्धजननमरणादिदोषित्वेनासर्वोत्तमत्वादेरेव सिद्धत्वादित्याशंकां प्रमाणेनैव परिहरति ॥ अनुक्ता इति । चशब्दस्तु शब्दाववधारणे । विष्णोर्गुणाः सर्वोत्तमत्वादयोऽनुक्ता नैव किंतूक्ता एव । तथा दोषा नैवोक्ताः । शास्त्र इति शेषः । अत्रोक्तानुक्तशब्दग्रहणेन शास्त्रैकसमधिगम्ये हरौ शास्त्रेण तदनुकूलप्रमाणांतरेण वा गुणदोषसिद्धिर्वक्तव्या । तत्र हरौ गुण एव सर्वोत्तम सर्वदोषव्यपेतं मय्यनंतगुणेऽनंत इत्यादिशास्त्रे उक्ता न तु दोषाः । प्रत्युत निरनिष्टो निरवद्यः । एष आत्माऽपहतपाप्मेत्यादि शास्त्रे दोषाभाव एवोक्त इत्युक्तं भवति। ननु रामकृष्णाद्यात्मके हरौ जन्मादिदोषदर्शनस्य का गतिरित्यत आह ॥ अज्ञानादिति। अनेन दोषज्ञानस्याज्ञानमूलत्वेन शास्त्रमूलत्वाभावादयथार्थत्वं गुणज्ञानस्य शास्त्रमूलत्वाद्यथार्थत्वमित्युक्तं भवति ॥७॥ एषां बिभर्म्यहमिति श्लोकमारभ्य ये ब्राह्मणान्मयीत्यंत श्लोकेषु येषां विप्राणाममलांघ्रिरजोऽहं किरीटे बिभर्मि यदर्हणांभः सह चंद्रललामलोकांश्चंद्रललामो रुद्रस्तत्सहितलोकान्सद्यः पुनाति ये ब्राह्मणानर्चयतः संबोधयंति तैरहमवोपाहृत इत्यादिना विप्राणां रुद्रादिभ्यः पूज्यत्वं तेनैवार्थादतिप्रियत्वादिकमुच्यते। तत्तु प्रमाणबाधितमित्यतः प्रमाणेनैव तदभिप्रायं दर्शयंस्तेनैव प्रमाणेनैव तदभिप्रायं दर्शयंस्तेनैव प्रमाणेन प्रसंगाद्ग्रंथांतरस्याप्यभिप्रायमाह ॥ विप्राणां चेत्यादिना । अन्येषां प्रह्लादादीनां । ब्रह्मणः शंकरस्यापि सकाशात्प्रियतामिति संबंधः । अत्ययुक्तं च विप्रचरणरेणुसेवया हरेः सद्यः क्षताखिलमलत्वादिकं च । विमोहयन्दैत्यादीनिति शेषः ॥८–१०॥

अथ तस्योशतीमिति श्लोकार्धे देवीमित्यस्य क्रीडादिगुणविशिष्टामिति प्रतीयते । तदयुक्तं । जडस्य तदसंभवादित्यतस्तदनूद्य व्याकुर्वन् ऋषिकुल्यामित्येतदपि ऋषिकुलोत्पन्नत्वार्थभ्रांतिनिरासायानूद्य व्याचष्टे ॥ देवीमिति ॥ १३ ॥ ते योगमाययेति श्लोकार्धे परमेष्ठीमहोदयस्य योगमायारव्यत्वशब्देन सर्वसामर्थ्यारव्यत्वमुच्यत इति भ्रांतिनिरासाय समारव्यारूप प्रमाणमाह ॥ तद्भ्रूविजृंभ इति । तद्भ्रूविजृंभस्तद्भ्रूविजृंभारव्यामित्यर्थः । अनेनात्र योगमायापदेन तद्भ्रूविजृंभो ग्राह्यः । पारमेष्ठ्यमहोदय इति पदेन चतुर्मुखधिष्ण्यं ग्राह्यमित्युक्तं भवति ॥ १५ ॥ धर्मस्य परम इति श्लोकार्धे धर्मस्य गुह्यो गुह संवरण इति धातोः संवरणीय आच्छाद्य इत्यन्यथाप्रतीतिनिरासायापक्षिताध्याहारेण गुह्यपदं व्याचष्टे ॥ धर्मस्यापीति । आदिपदेन दुर्ज्ञेय इति व्यारव्यानेन च धर्मशब्दो धारकत्वेन धर्माभिमानिमुख्यवायुवाचक इति सूचितं । तेनान्येषा दुर्ज्ञेय इति किमुवक्तव्यमित्यापिशब्द कैमुत्यार्थक इति सूचितं ॥ १८ ॥ धन्यार्पितांघ्रीति श्लोकार्धे मधुव्रतपतेरित्यस्य मधु चैत्रव्रतं येषा ते तथा तेषां स्वामिन इत्य न्यथाप्रतीतिनिरासायानूद्य तत्तात्पर्यार्थमाह ॥ मधुव्रतेति । स्ववाक्यस्य वैदिकत्वज्ञापनाय पत्युरिति वक्तव्ये पतेरिति भागवत पदानुवादः कृतः । अनेन मधुसारं व्रजंति गृह्णंतीति मधुव्रतास्तेषा पत्युरिति विग्रहस्तथा व्रज गताविति धातोः कर्तरि क्तप्रत्यये धातोरंतलोपे च व्रत इति शब्दनिष्पत्तिश्च सूचिता भवति । एव पदार्थमुक्त्वेदानीं धन्यार्पितांघ्रितुलसीमधुव्रतपतेर्लोकं यथा कामयते तथा नवदामधाम्नो लोकं कामयेत्यन्यथाऽन्वयार्थप्रतीतिनिरासायापेक्षिताध्याहारेण तस्य श्लोकस्य विवक्षितान्वयार्थावाह ॥ अंघ्रिस्थेति । अंघ्रिस्थतुलसीलोकमित्यनेन राजदंतादिगणस्थत्वादंघ्र्योरर्पिताऽर्पितांघ्रिरर्पितांघ्रिश्च सा तुलसी चेति विग्रहस्तथा तुलसीति प्रथमा सुपां सुपो भवंतीति वार्तिकवचनात् षष्ठ्यर्थ इत्युक्तं भवति । लोकपदस्य भुवनार्थत्वभ्रांतिनिरासाय स्थानमिति व्यारव्यातं । इवशब्दस्य यथास्थितान्वयस्यासगतत्वादध्याहृतेनान्वयः प्रदर्शितः । तत्र समारव्यारूप प्रमाणमाह ॥ लब्ध्वाऽपीति । यस्तां

विविक्तेति श्लोकार्धे यो हरिस्ता विभूतिपदवाच्यां श्रिय नात्याद्रियदिति हरेर्लक्ष्म्यामतिप्रीत्यभाव उच्यते । सोऽनुपपन्नः। लक्ष्म्या ब्रह्मादिभ्योऽतिशयेन हरिप्रियत्वप्रतिपादकबहुप्रमाणबाधितत्वादित्याशंकां परमभागवतप्रसग इति भागवतस्थपदव्याख्यानेनैव परिहरति ॥ परमेति । तस्यां लक्ष्म्यां । अनेन भागवतेषु परमा परमभागवः। लक्ष्मीस्तस्या प्रकर्षेण सगः स्नेहा यस्येति विग्रहः सूचितः । तथा नात्याद्रियदित्यनेन कामनिमित्तकात्यादरो निषिध्यत इति सूचित । नन्वेव व्याख्यान कुत इत्यतो लक्ष्म्यां हरिप्रित्वादयो गुणा ब्रह्मादिप्रियेभ्योऽधिकाः संतीत्याशयवान् स्वोक्तार्थे प्रमाणमाह ॥ हरिभक्तिरित्यादि । अधिकारे संसृतौ । अत्रैकपदोक्तानां गुणसाम्यं ज्ञेयं । वासवादीना तथा भिन्नपदोक्ताना च यथाक्रमं गुणा ज्ञेयाः । भूमौ। अवतार इति शेषः । कारणतो वरशापरूपात् । चस्त्वर्थः । भूमावित्यनेन संबध्यते । अपिपद देहस्य लक्षणमित्यनेन सबध्यते । प्रियो देहलक्षण नित्यं स्यादित्यन्वयः । उक्ताः सामान्यतो वेदेषु । अनुक्ता विशेषत इत्यर्थः । ततः श्रियः सकाशादधिकगुणा इत्यनुवर्तते । ततश्च धन्यार्पितांघ्रीति श्लोकस्यायमर्थः । नवदामधाम्नो नवानां नूतनाना दाम्नं । धाम्न आश्रयस्य । दामोदरस्येति यावत् । अनवद्यधाम्न इति क्वचिद्भागवतपाठः । मधुव्रतपतेः सारग्राहिस्वामिनो हरेर्धन्यार्पितांघ्रि तुलसी धन्यैः पुरुषरंघ्र्यारर्पिता धन्यार्पितांघ्रिः । धन्यार्पितांघ्रिश्च सा तुलसी च । यद्वा । धन्येति भिन्नं पदं विभूतेर्विशेषणं । तुलसीति प्रथमा षष्ठ्यर्थे । हर्यंघ्रिस्थ तुलस्या लोकं स्थानमुरसिस्थापि स्पर्धयेव कामयाना धन्या धनाद्यैश्वर्याभिमानिनी विभूतिर्लक्ष्मीर्य हरिमनुवेलमुपयाति नित्य हरिसमीपे तिष्ठति तां विविक्तचरितैरनुवर्तमानामपि यां हरिर्नात्याद्रियत् तत्कामात्तस्यामत्यादरवान्नाभूत्कितु परमभागवतप्रसंगो भागवतेषु भगवद्भक्तेषु परमा उत्तमा परमभागवता तस्या प्रकृष्टः सगः स्नेहा यस्य स तथा । परमभागवतत्वेनैव तस्यामत्यादरवानिति । अत्रत्ययच्छब्दस्य स त्वं द्विजानुपथमित्युत्तरवाक्यस्थतच्छब्देनान्वयो ज्ञेयः ॥ २१ ॥ धर्मस्य ते भगवत इति श्लोकार्धे

॥ ३७ ॥

धर्मस्य ते तवेति सामानाधिकरण्येन हरेर्जडधर्मतदभिमानिभ्यामैक्यभ्रांतिनिरासाय प्रमाणेनैव धर्मपद हरा निर्वक्ति ॥ धारणादिति । एवं धर्मपद व्याख्यायेदानीं त्रिभिः पद्भिः पादैरिति पच्छब्दस्य चरणार्थत्वभ्रांतिनिरासाय प्रमाणेनैव पच्छब्दार्थं दर्शयन् श्लोकतात्पर्यार्थमाह ॥ **अनंतासनेत्यादिना** । त्रिभिः । रूपैरिति शेषः । उत्तमाना स्वरूप तु पादशब्दन भण्यत इति प्रमाणात् अत्र नूनं भूतमित्यस्यार्थः ॥ **रक्षां करोतीति** । वरदया तनुवेत्यस्यार्थः ॥ **भगवान् कपिल इति** । सत्त्वेनेत्यस्यार्थः ॥ **सत्त्ववर्धनादिति** । तदभिघातिरजस्तमश्चेत्यस्यार्थः ॥ **असत्त्वोऽपि रजश्चैव तमश्चापीति** । अपिद्वय यस्मात्तस्मादित्यर्थे । अपिः समुच्चये हेतौ गर्हाया च प्रयुज्यत इत्यभिधानात् । रजश्च तमश्च यस्मादसत्त्वे सत्त्वकायरक्षाविरोधिनी तस्माद्रजस्तमसी । तु विशेषेण निःस्यैव रक्षां करोतीत्यन्वयः । वरदशब्दस्य कपिलार्थत्वमुक्त । तत्राभिधानं पठति ॥ **कपिल इति** । सत्त्वेनेति तृतीयया सत्यगुणस्य मुख्यकारणत्वभ्राति वरदया तनुवेत्यस्य रक्षा करोति भगवान् कपिल इत्युक्तमर्थमेव हेतूकृत्य परिहरति ॥ **अत इति** । अतः कपिलस्य मुख्यकारणत्वात् । ननु भागवते वरदयेति तनोर्विशेषणमुक्तं । तेन कपिलः कथं गृह्यते । तथात्वे कपिलस्य शरीरविशेषणत्वेनाप्राधान्यं स्यादित्यत आह ॥ **कपिल इति** । अनेनात्र वरदयेत्यनेनैव कपिलो न गृह्यते किंतु वरदया तनुवेति पदद्वयेनापि । अतो न कश्चिद्दोष इत्युक्त भवति ॥ २२ ॥ **न त्वं द्विजोत्तमेति** श्लोकार्धे आत्मगोपमात्मनस्तव गोपो रक्षणं न द्विजोत्तमकुले न तत्तयेति द्विजकुलस्य हरिरक्षकत्वं प्रतीयते । तच्च यदि त्वं द्विजोत्तमकुलं न गोप्ता तर्हि नंक्षत्येवेत्यनेन विरुद्धं बहुप्रमाणविरुद्ध चेत्याशंका तद्विग्रहप्रदर्शनेन परिहरति ॥ **आत्मैवेति** । आत्मा परमात्मत्वमेव ॥ २२ ॥ **तत्ते नाभीष्टमिवेति** श्लोकार्धे तत् शिवमार्गनाशनं ते तवानभीष्टमिव न तु वस्तुतो अनभीष्ट किन्त्वभीष्टमेवेति प्रतीयते । तदयुक्तं । यदा यदा हि धर्मस्य ग्लानिर्भवति भारतेत्यादिबहुप्रमाणविरोधादित्यतः कैमुत्यदर्शकप्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **असुरा इति** ।

असुरा अपि यदा लोकवल्लोकस्य यथा दुःखजनकत्वेनाप्रियास्तथा हरेर्दुःखजनकत्वेन नाप्रियास्तदा शिवमार्गविनाशो हरेर्दुःखजनकत्वेनाप्रियो न भवंतीति किमु वक्तव्यं । असुरा दुःखजनकत्वेनाप्रियाः कुतो न स्युरित्यत उक्तं ॥ नित्यानंदादिति । हरेर्नित्यानंदपूर्णत्वे दुःखस्यातिदूरोत्सारितत्वादिति भावः । अनेनैव शिरस्केनानभीष्टपदेन यः शिवमार्गविनाशस्याप्रियत्वाभाव उक्तः स हरेर्दुःखजनकत्वनिमित्ताप्रियत्वाभावाभिप्रायेणैव न तु वस्तुतः प्रियत्वाभावाभिप्रायेणेत्युक्तं भवति । तथा देवादीनां हरिप्रियत्वं हरिसुखजनकत्वेन नेति चोक्तं भवति । ननु तर्हि श्रुत्यादौ हरेरिदं प्रियमिदमप्रियमित्याद्युक्तिः किंनिमित्तेत्यत आह ॥ निषिध्येति । निषेध्यबुद्धेर्विषयं विषयः उपलक्षणमेतत् । अनिषेध्यबुद्धिविषयः प्रियमित्यपि ग्राह्यं । उदाहृतप्रमाणे प्रकृतोपयोगं स्पष्टयति ॥ तस्मादिति । तस्माद्दुःखजनकत्वेनानभीष्टनिषेधकप्रमाणस्य सत्त्वादनभीष्टमिवेत्युक्तं युक्तमित्यर्थः ॥२४॥ एतौ सुरेतरगतिमिति श्लोके एतौ जयविजयौ सुरेतरगतिं सुरेतरेषां दैत्यानां गतिं गतिसाधनं शरीरं सद्यः प्राप्य तत्र देहे सरभेण मयि कोपेन सम्यग्भृतो यः समाधिश्चित्तैकाग्रता तेनानुबद्धौ युक्तौ योगौ भक्तियोगौ ययास्तौ तथोक्तौ । हरौ कोपयुक्तभक्तियुक्तौ संतौ भूयो मम सकाशमुपयास्यत इति कोपयुक्तभक्तेर्भगवत्सामीप्यप्राप्तिरूपमोक्षसाधनत्वमुच्यते । तच्च केवलभक्तेरेव तत्साधनत्वप्रतिपादकप्रमाणेन तथा कोपस्य तमःसाधनत्वप्रमाणेन च विरुद्धमित्यतः प्रमाणनैव तत्तात्पर्यार्थमाह ॥ अंतर्भक्ता इति । अनेन स्वाभाविककोपस्यैव तमःसाधनत्वादस्य कोपस्यास्वाभाविकत्वादियं भक्तिः केवलैवेति न कश्चिद्विरोध इत्युक्तं भवति ॥ २६ ॥ प्रतिजग्मुः प्रमुदिता इति श्लोकार्धे वैष्णवीमित्यस्य विष्णुभार्यार्थत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ स्वरूपेति ॥ २८ ॥ मयि संरंभेति श्लोके मयि संरभो द्वेषस्तद्युक्तेन योगेन भक्तियोगेन ब्रह्महेलनं निस्तीर्येति द्वेषसहितभक्तेः सनकाद्यवज्ञाजनितपापं मोक्षसाधनत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणमुदाहृत्य तात्पर्यार्थमाह ॥ अंतर्भक्ता इति । बहिः क्रुद्धा बहिर्वैरा इत्यनेन संरंभशब्द-

उभयार्थक इति सूचितं । द्वेष आवेशकान्गत इत्युक्तस्यैव विवरण ॥ ब्रह्मघ्ना असुरा इत्यादि । ये ब्रह्मघ्ना विष्णोः पार्षदतां जयविजयाविष्टत्वं बल्यादींश्च बलिचक्रवर्त्याद्याविष्टत्वं च गतास्ते यतोऽसुरास्तमो हरेर्द्वेषं कृत्वा तमो गता इत्यन्वयः । काश्यपाद्यसुरव्यावृत्त्यर्थं ब्रह्मजा इत्युक्तं । तस्मात्प्रमाणवाक्ये भक्तेरेव पापभूतत्वसाधनत्वस्य द्वेषस्य तमःसाधनत्वस्य चोक्तत्वात्संरंभोऽल्पभाविफल एव । अल्पानामसुराणां भावि भविष्यत्तम एव फल यस्मात्संरंभात्स तथोक्तस्तादृश एव कथ्यते न तु पूतत्वहेतुः । योग एव भक्तियोग एव ब्रह्महेलननिस्तारकः कथ्यत इत्यर्थः ॥३६॥ इति श्रीभागवततात्पर्यटिप्पण्या सप्तदशोऽध्यायः ॥३-१७॥

॥ हरिः ॐ ॥ ववौ वायुरिति श्लोके फट्काराराववानित्यत्र फडितिशब्दवानित्यर्थभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ फट्कारश्चेति । ये चान्ये शब्दास्तादृशाः फट्कारादिशब्दसदृशास्तेऽप्यनुकारशब्दा मता इत्यर्थः । अनेनैवाभिधानवाक्यशेषेण सृगाला अपि टकारैरिति भागवतश्लोकस्थटंकारशब्दोऽपि व्याख्यात इत्याशयवानाह ॥ टंकारोऽपीति । सृगाला इति श्लोक एव सृगालशब्दस्य शिवशब्देन गतार्थत्वभ्रांति निवारयति ॥ सृगालानामिति । ननु सृगलाना पुंस्त्वं कस्माज्ज्ञातव्यमित्यतः स्वरभेदाज्ज्ञातव्यमित्यभिप्रेत्य प्रमाणेनैव तत्स्वरभेदमाह ॥ स्वरस्तत्रेति । नाशस्तत्र सृगालानामिति क्वचित्पाठः । तत्पाठे सृगालादिस्वरस्यानिष्टहेतुत्वं प्रमाणेन दर्शयतीति संगतिर्द्रष्टव्या । तथा स्वरपद सप्तम्यत द्रष्टव्य । ये चान्ये तादृशा मता इत्यभिधानशेषेणैव खात्काररभसा मता इत्यत्र खात्काररशब्दोऽनुकारशब्द एवेत्यभिप्रेत्याह ॥ खात्कारोऽपीति । ॥ ५-९-११ ॥ स वै तिरोहितानिति श्लोके दैत्यराट् स्वेन महासामर्थ्येन तिरोहितान्सेंद्रान्देवगणान् दृष्ट्वेत्युक्त्या दैत्यस्य स्वाभाविकबलाधिक्येनैव देवादिजेतृत्वभ्रांतिं प्रमाणेनैव परिहरति ॥ न देवानामिनि । ननु वरतो विना कोऽपि देवादीनां विजेता न तथा वरतो विना कोऽपि बलेन विद्यया वा देवादीना समश्च नेत्युक्त्या सर्वेषा वरत एव देवादिसाम्यं तद्विजेतृत्वं च

स तु स्वभावत इति द्योतितं भवति । तच्चु प्रमाणबाधितमित्यत आह ॥ तत्पतीनिति । तेषा देवादीना पतीनित्यर्थः । वरतोऽपि यदैत्यादीनां देवादिसाम्यादिकं तन्न सदेत्यभिप्रेत्याह ॥ वरोऽपीति । अपिरवधारणे । यावच्छरीरमित्यनेन संबध्यते । यच्छरीरावच्छिन्नाय वरो दत्तस्तच्छरीरं यावत्तिष्ठति तावत्पर्यंतमेव स वरः । तादृशो देवसाम्यादिहेतुर्न त्वन्यदेहगेहगेऽन्यदेह प्राप्ते सति पूर्ववरो न साम्यादिहेतुर्भवतीत्यर्थः ॥ २३ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामष्टादशोऽध्यायः ॥ ३–१८ ॥ छ ॥

॥ हरिः ॐ ॥ विलक्ष्य दैत्यमिति श्लोकार्थे सहस्रणीरित्यस्य सहस्रजनान्नयतीत्यन्यथार्थप्रतीतेर्विवक्षितार्थमाह ॥ अनेकेति । अनेनानेककल्पस्थजनार्थकसहस्रशब्दोपपदात् नी प्रापण इति धातोः कर्तरि क्विपि नस्य णत्वे च शब्दरूपमेतन्निष्पन्नमित्युक्तं भवति ॥ २१ ॥ तयोः स्पृध इति श्लोके स्निग्धगदाहतांगयोरित्यत्र हरिदैत्ययोर्गदाहतत्वोक्त्या साम्यं प्रतीयते । तथा क्षतस्रवेत्यनेन हरेः क्षतवत्त्वं प्रतीयते । तथैव ते देवदेवानामित्यादिभागवतश्लोके हरिणा चतुर्मुखोक्त्यैव हिरण्याक्षस्वरूपं ज्ञात ततः पूर्वं न ज्ञातमिति च प्रतीयतेऽतः सिंहावलोकनन्यायेन प्रमाणेनैव तत्तात्पर्यार्थं दर्शयति ॥ अक्षत इत्यादिना । अपि यद्यपि हरिः सर्वरूपेष्वनंतगुणादिनाऽपरिमितोऽत एवाक्षतत्वादिमांश्च भवति तथाऽप्यसुरमोहाय क्षतादिमानिव प्रकाशयेत् । आत्मानमिति शेषः । तथा ब्रह्माद्याश्च तन्मतेर्हेरिबुद्धिरनुसारितयैव ब्रूयुः कुर्युश्चेत्यर्थः । सः विष्णुः ॥ १९–२२ ॥ एषा घारतरेति श्लोकार्धे संयाया लोकसंवट्करीति विशेषणमुक्तं । तद्दुर्गमार्थत्वात्प्रमाणेनैव व्याकुर्वस्तेनैव प्रमाणेन स्थलातरस्थादरपदं च व्याचष्टे ॥ आदरमिति । तुशब्दद्वयं शब्दद्वयविशेषार्थवत्त्वे वर्तते ॥ २६ ॥ नन्वधुनैवेति श्लोकार्धेऽभिजिन्नामयोग उच्यते । तदसत् । न हि विष्कंभादियोगेष्वभिजिन्नामकयोगोऽस्तीत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ मध्यान्ह इति । आषाढोत्तर उत्तराषाढानक्षत्रस्योत्तरार्धः । विषुवं मेषतुले ॥ २७ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामेकोनविंशोऽध्यायः ॥ ३–१९ ॥ छ ॥

॥ हरिः ॐ ॥ गदायामपविद्धायामिति श्लोके विभुर्हरिस्तद्धर्मं स चासौ धर्मश्च तद्धर्मस्तं सायुधेन निरायुधस्य बाधो न कर्तव्येति धर्मं मानयामासेत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ धर्मं इति । सतां येनोपकारः स्यात्तत्सत्यमिति गीयत इति प्रमाणात्सत्य सज्जनोपकारकोऽर्थो धर्मं इति प्रोक्तः । चस्त्वर्थविशेषे वर्तते । हरेर्विशेषेण प्रिया भक्त्यादिरर्थो धर्म इति प्रोक्त इत्यर्थः । अनेन गदायामपविद्धायां हाहाकारे विनिर्गते सति तत्तास्मिन्काले विभुः सुनाभं धर्मं सत्यं दैत्यायुधादिनाशक्त्वेन सज्जनोपकारकं मानयामास मेनेऽस्मरदैच्छच्चेति भागवतवाक्यं व्याख्यात । तस्मिन्नेव श्लोके सुनाभं चास्मरद्विभुरित्यत्र सुदर्शनचक्रं विना हरिर्दैत्यं हंतुमशक्तः संश्चक्रमस्मरादिति भ्रातिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ यथेच्छयेति । अनत शक्तितो यथेच्छयैव सर्वं कर्तुं शक्तिस्तथा देहतो मनसोऽपि वा सर्वं कर्तुं । अपि यद्यपि शक्तस्तथाऽप्येष शस्त्राद्यादानं हरेर्लीलयैव हरिलीलयैव चक्राद्यादानं न त्वशक्त्येति भावः ॥ ५ ॥ इति श्रीभागवततात्पर्यटिप्पण्या विंशोऽध्यायः ॥ ३–२० ॥ छ ॥

॥ हरिः ॐ ॥ ननु मैत्रेयेण प्रजापतिपतिः सृष्ट्वेत्यादिना विदुरपृष्टस्योत्तरमनुक्त्वा पूर्वोक्तैव महत्तत्त्वादिसृष्टिः पुनः किमर्थमुच्यत इत्यतः प्रमाणेनैव तदभिप्रायमाह ॥ सृष्टाविति । यतो देवाना तारतम्यं सृष्टौ लये स्फुटं ज्ञायते यतश्च तारतम्यपरिज्ञान एव महातात्पर्यमिष्यते । शास्त्रस्येति शेषः । अतस्तत्तु तदेव बहुश उक्तमत्रेत्यर्थः । ननु तारतम्यपरिज्ञान एवेत्ययुक्तं । शास्त्रे देवस्वरूपादेरप्युच्यमानत्वादित्यत आह ॥ अन्यच्चेति । चस्त्वर्थः । एतस्य तारतम्यस्य प्रकाशमित्यर्थः ॥ १० ॥ दैवेन दुर्वितर्क्येणेत्यादि भागवतश्लोके केवलजडमहदादिरुच्यत इति भ्रांतिं । तथा सृष्टिलयाभ्या देवानां तारतम्यं स्फुटं ज्ञायत इत्ययुक्तं । कचित्सृष्टौ ब्रह्मादेः कचिद्रुद्रादेः प्रथमोत्पत्तेरुक्तत्वादित्याशकां प्रमाणेनैव परिहरति ॥ महत इत्यादिना । तुः समुच्चय । एवमभिमानिपाठक्रमेण सृष्टौ क्रमस्तथा व्यत्ययश्च व्यत्ययेन सृष्टिश्च सूक्ष्मस्थूलादिभेदतः सूक्ष्मसृष्टावुत्तमावरक्रमेण सृष्टिः स्थूलसृष्टावा-

दिपदेनातिस्थूलसृष्टौ च व्यत्ययेन सृष्टिस्तत्र क्रमसृष्टानामेव सृष्टौ संसारे ज्ञानादौ गुणे मुक्तिस्थे ज्ञानादौ गुणे चायं क्रम इदं तारतम्यं नियमेनास्त्येवेत्यर्थः ॥१२-१३॥ सोशयिष्टाधिसलिल इति श्लोकार्धे निरात्मक इत्यस्यात्मरहित इत्यर्थभ्रांतिनिरासायानूद्यार्थं माह ॥ निरात्मक इति। विद्यमानेऽप्यव्यक्ते भावशब्दप्रयोगदर्शनादिति भावः ॥ १५ ॥ लोकसंस्थामिति श्लोकार्धे स्वया स्वकीयया सस्थया स्थित्येत्यन्यथाप्रतीतिनिरासाय तदनूद्य व्याचष्टे ॥ संस्थयेति ॥ १७ ॥ देवस्तानाहेति श्लोकार्धे देव श्चतुर्मुखः संविग्नो भययुक्तः सन् मा मां मा जक्षत किंतु रक्षतेति तान् यक्षादीन् प्रत्याहेत्यनेनार्थाच्चतुर्मुखस्य यक्षादिभ्योऽसमर्थत्वा दिकमायाति। तच्च प्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ जानन्नपीति। जानन्नपि समर्थोऽपि ब्रह्मा कचिदज्ञ वच्चाप्यशक्तवत्कर्मकरणं हरेः प्रियं ज्ञात्वा तथैव कर्माणि करोतीत्यर्थः॥ २१ ॥ देवताः प्रभयेति श्लोके विरिंचस्य स्वाभाविक प्रभारूपतनुत्याग उच्यत इति भ्रांतिनिरासाय प्रमाणेन तत्तात्पर्यार्थमाह ॥ व्यसृजदिति। तच्च शरीरमहरादित्वं देवादिदैवत च प्रापेत्यन्वयः। अनेनैव विससर्जात्मनः कायमिति पूर्वश्लोकस्य तथा विमुच्यात्मतनु घोरामित्यारभ्य तेभ्यः सोऽत्यज्यदेहमित्यंतो-त्तरश्लोकाना च तात्पर्य उक्तो भवति ॥२२॥ ऊर्जस्वंतंमन्यमान इति श्लोकार्धे ऊर्जशब्दस्य दुर्गमार्थत्वात्प्रमाणेनैव विवक्षितार्थं माह ॥ ऊर्जामिति ॥४२॥ तान् ये पुरा सृष्ट्वा इति श्लोके पुरा सृष्टा ये सर्पादयस्त तान्मनून् दृष्ट्वा सुकृतं कृतामिति प्रजापतिं प्रशंसुरिति पुरासृष्टपदेन सर्पादय उच्यत इति भ्रांतिनिरासाय तत्सम्यग्व्याचष्टे॥ ये पुरेति। स्वोक्तार्थे प्रमाणमाह॥ दृष्ट्वा त्विति। ॥५०॥ तपसा विद्यायुक्त इति श्लोके हृषीकेशश्चतुर्मुखो ऋषीन्ससर्जेति विरिंचस्य हृषीकेशशब्दमुख्यार्थत्वभ्रांतिनिरासाय प्रमाणो दाहरणपूर्वकं यथावद्व्याचष्टे॥ यत्रापीत्यादिना। यत्र तु ग्रंथे हरेर्नाम तदन्यत्रापि हरेरन्यत्रापि प्रयुज्यते तत्तेन नाम्ना तत्र ग्रंथे आतरहरेस्तदंतस्थहरेर्गृहीतिर्भवेत्। परममुख्यवृत्त्येति शेषः। नान्यथेत्यर्थः। ननु हरेः शब्दपरममुख्यार्थत्वं कुत इत्यतो निमित्तं

॥ हरिः ॐ ॥ गदायामपविद्धायामिति श्लोके विभुर्हरिस्तद्धर्मं स चासौ धर्मश्च तद्धर्मस्तं सायुधेन निरायुधस्य बाधो न कर्तव्येति धर्मं मानयामासेत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ धर्म इति । सतां येनोपकारः स्यात्तत्सत्यमिति गीयत इति प्रमाणात्सत्य सज्जनोपकारकोऽर्थो धर्म इति प्रोक्तः । चस्त्वर्थविशेषे वर्तते । हरेर्विशेषेण प्रिया भक्त्यादिरर्थो धर्म इति प्रोक्त इत्यर्थः । अनेन गदायामपविद्धायां हाहाकारे विनिर्गते सति तत्तस्मिन्काले विभुः सुनाभं धर्म सत्यं दैत्यायुधादिनाशकत्वेन सज्जनोपकारकं मानयामास मेनेऽस्मरद्दैच्छच्चेति भागवतवाक्यं व्याख्यात । तस्मिन्नेव श्लोके सुनाभं चास्मरद्विभुरित्यत्र सुदर्शनचक्रं विना हरिर्दैत्यं हंतुमशक्तः संभ्रमक्रमस्मरादिति भ्रातिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ यथेच्छयेति । अनत शक्तितो यथेच्छयैव सर्वं कर्तुं शक्तिस्तथा देहतो मनसोऽपि वा सर्वं कर्तुं । अपि यद्यपि शक्तस्तथाऽप्येष शस्त्राद्यादानं हरेर्लीलयैव हरिलीलयैव चक्राद्यादानं न त्वशक्त्येति भावः ॥ ५ ॥ इति श्रीभागवततात्पर्यटिप्पण्या विंशोऽध्यायः ॥ ३–२० ॥ छ ॥

॥ हरिः ॐ ॥ ननु मैत्रेयेण प्रजापतिपतिः सृष्ट्वेत्यादिना विदुरपृष्टस्योत्तरमनुक्त्वा पूर्वोक्तैव महत्तत्त्वादिसृष्टिः पुनः किमर्थमुच्यत इत्यतः प्रमाणेनैव तदभिप्रायमाह ॥ सृष्टाविति । यतो देवाना तारतम्यं सृष्टौ लये स्फुटं ज्ञायते यतश्च तारतम्यपरिज्ञान एव महातात्पर्यमिष्यते । शास्त्रस्येति शेषः । अतस्तत्तु तदेव बहुश उक्तमत्रेत्यर्थः । ननु तारतम्यपरिज्ञान एवेत्ययुक्तं । शास्त्रे देवस्वरूपादेरप्युच्यमानत्वादित्यत आह ॥ अन्यच्चेति । चस्त्वर्थः । एतस्य तारतम्यस्य प्रकाशमित्यर्थः ॥ १० ॥ दैवेन दुर्वितर्क्येणेत्यादि भागवतश्लोके केवलजडमहदादिरुच्यत इति भ्रांतिं । तथा सृष्टिलयाभ्या देवानां तारतम्यं स्फुटं ज्ञायत इत्ययुक्तं । क्वचित्सृष्टौ ब्रह्मादेः क्वचिद्रुद्रादेः प्रथमोत्पत्तेरुक्तत्वादित्याशका प्रमाणेनैव परिहरति ॥ महत इत्यादिना । तुः समुच्चय । एवमभिमानिपाठक्रमेण सृष्टौ क्रमस्तथा व्यत्ययश्च व्यत्ययेन सृष्टिश्च सूक्ष्मस्थूलादिभेदतः सूक्ष्मसृष्टावुत्तमावरक्रमेण सृष्टिः स्थूलसृष्टावा-

हस्तपादादिकेशा न्यपतन् एवं हरिदेहकेशा यज्ञस्य साधनभूताः कुशकाशा आसन्निति हरिस्वरूपभूतरोम्णां यज्ञादिसाधनकुशात्मकत्वमुच्यते । तच्च प्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ज्ञानानंदेति । प्रयोगे तु यज्ञस्य प्रयोगार्थमेवाभवन्नित्यन्वयः । ज्ञानानंदस्वरूपेभ्य इत्यनेन राणि रमणरूपाणि च तान्युत्तमानि चोत्कृष्टज्ञानरूपाणि चेति रोमाणीति रोमपदस्य विग्रहः सूचितः । ननु यदि वराहरोमभ्यः कुशादयो जातास्तर्हि भागवते त एवासन्नित्युक्तिः कथमित्यतः स्वय तदनूद्य व्याचष्टे॥ त एवेति । अनेन प्रथमा पंचम्यर्थ इत्युक्तं भवति । तत्कुत इत्यतो ज्ञापकमाह ॥ ॥ सप्तास्विति ॥ २९–३० ॥ अयातयामास्तस्येति श्लोकार्धे अयातयामा इत्यस्य न यातो गतो यामः प्रहरोऽन्हचतुर्थांशो येषां ते तथेत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तद्व्याकुर्वन्नयाततयामशब्दं व्याचष्टे ॥ गतसारमिति ॥ ३५ ॥ शारीरमानसादिव्या इति श्लोकार्धे पर्यास इत्यस्य विषयपर्यासार्थत्वभ्रातिनिरासाय तदनूद्य व्याचष्टे ॥ पर्यास इति । अवस्थानेऽपीत्यनेन भागवते ये चेति चशब्दोऽप्यर्थः । पर्यास इत्यनेनापि संबध्यते इत्युक्तं भवति ॥ ३७ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां त्रयोविंशोऽध्यायः ॥ ३–२३ ॥ छ ॥

॥ हरिः ॐ ॥ द्वाःसुविद्रुमदेहल्येति श्लोके देहली पदस्याप्रतिपत्त्यादिनिरासायार्थमाह ॥ देहलीति । द्वारे बंधो यस्य स तथा । द्वारे बंधितं गृहमित्यर्थः ॥ १८ ॥ हंसपारावतव्रातैरिति श्लोके कृत्रिमानित्यस्य जन्यत्वमात्रार्थत्वप्रतीतिनिरासाय तदनूद्य यथावद्व्याचष्टे ॥ कृत्रिमानिति ॥२०॥ यथाऽऽदर्शे स्वमिति श्लोकार्धे आदर्शपदस्य लोहमयदर्पणार्थत्वभ्रांतिनिरासायानुवादपूर्वकं विवक्षितमर्थमाह ॥ आदर्श इति । अनेन दृशि धातोर्लिट्यित्यययेनाभ्यासलोपो गुणश्चेत्युक्तं भवति ॥ ३० ॥ बभ्राज उत्कचकेति श्लोकार्धे उद्गुणपानवीच्य इत्यस्य विवक्षितार्थाप्रतीतेरनुवादपूर्वकं विवक्षितमर्थमाह ॥ उद्गुणेति । उत्तमस्य हरेरमृतं मोक्षसाधनध्यानादिकं तज्जन्यवीचिसुखं तथा युक्त इत्यर्थः । वीचिः स्वल्पे तरंगे स्यादवकाशे सुखेऽपि

चेति विश्वकोशाभिधानादत्र वीचीशब्दः सुखवाची । यद्वा । उत्तमामृतं स्वर्गाद्यपेक्षयोत्तमामृत वैकुंठादि तत्र वीचीसुखतुल्यसुखयुक्त इत्यर्थः । अनेन उद्गुणा मनोवृत्तिसुखाद्यपेक्षयोत्तमगुणाः स्वरूपानंदादयस्तेषां पानं भागो येन ध्यानादिना तत्तथा तज्जन्यसुखयुक्त इति वा उद्गुणानां पानं यस्मिन्मोक्षे स तथा तत्रत्यसुखतुल्यसुखयुक्त इति वा भागवतवाक्यं व्याख्यातं ॥ ३८ ॥ न व्याबुध्यत तामिति श्लोकार्धे आपीच्येनेति कर्दमस्य विशेषणमुक्तं । तद्दुर्गमार्थत्वात्प्रमाणेनैव व्याचष्टे ॥ प्राप्तेति ॥ ४५ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां चतुर्विंशोऽध्यायः ॥ ३–२४ ॥ छ ॥

॥ हरिः ॐ ॥ निर्वेदवादिनीमिति श्लोके शालिनीमित्यस्य शोभमानामित्यर्थप्रतीतिनिरासाय भार्यार्थत्वमभिप्रेत्य तत्राभिधान पठति ॥ मालिनीति ॥ १ ॥ तस्यां बहुतिथे इति श्लोके भगवास्तस्यां देवहूत्यां कार्दमं वीर्यमापन्नो जज्ञ इति हरेः शुक्लशोणितविकारदेहोत्पत्तिरुच्यते । सा न जायते म्रियते वा कदाचिदित्यादिप्रमाणबाधितेत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ नावतारेष्वित्यादिना । काले उदेतीत्यन्वयः । यथाऽग्निर्दारुणो जातो दार्वेवाश्रितस्तद्विहाय कदाऽपि न तिष्ठति तथा हरिरिति हरेरग्निदृष्टांतेनान्याधारत्वभ्रांतिर्भवति । तच्च स्वे महिम्नीत्यादिश्रुत्यादिबाधितमित्यतो दृष्टांतस्य विनियोगमाह ॥ अग्निरिवेति । मातृपदेन देवहूतिं विनाऽनवस्थानं प्रतिषेधति ॥ ६ ॥ भगवंतं परमिति श्लोकार्धेऽशेन सत्त्वेन प्रकृत्यंशभूतेन सत्त्वगुणेनेत्यन्यथाप्रतीतिनिरासाय सत्त्वशब्दार्थं प्रमाणेनैव दर्शयति ॥ महागुणेति । अनेन सत्त्वेन महागुणाभिपूर्णत्वेन युक्तेनांशेनेति शेषपूरणेन भागवतवाक्यं व्याख्येयमिति सूचितं ॥ १० ॥ तत्त्वसंख्यानविज्ञप्त्यै इति श्लोकार्धे तत्त्वानां संख्यानं संख्यातस्य विज्ञप्त्या इत्यन्यथाप्रतीतिनिरासाय तथा ज्ञानविज्ञानयोगेनेति श्लोके योगशब्दस्य संबंधार्थत्वप्रतीतिनिरासाय च प्रमाणेनैव संख्यानयोगशब्दयोर्विवक्षितार्थमाह ॥ सम्यग्ज्ञानमिति । तदर्थस्तत्सम्यग्ज्ञानमेवार्थः प्रयोजनं

फलं यस्य स तथा सम्यग्ज्ञानसाधनमित्यर्थः । अनेन सम्यक् ख्यानं ज्ञानं यस्य परब्रह्मणस्तत्संख्यान । तत्त्वमनारोपितं च तत्सख्यानं च तत्त्वसंख्यानं परं ब्रह्म तस्य विज्ञप्त्यै इति भागवतवाक्यं तथा ज्ञानविज्ञानाभ्या युक्तो योगो ज्ञानविज्ञानयाग इति भागवतवाक्यं च व्याख्यात भवति ॥ १७ ॥ स चावतीर्णमिति श्लोकार्धे त्रियुग युगत्रयात्मकमिति भ्रांतिनिरासाय प्रमाणेनैव तदर्थमाह ॥ युगत्रय इति ॥ २६ ॥ तान्येव तेऽभिरूपाणीति श्लोके यानि यानि तव रूपाणि ते तव रोचंते तान्येव स्वजनानामभिरूपाण्यनुकूलानीत्यन्यथाऽन्वयार्थप्रतीतिनिरासाय श्लोकस्य यथावदन्वयार्थावाह ॥ यानि यानीति । ब्रह्मादिरूपाणि चतुर्मुखादिरूपाण्यभिव्यक्त्यर्थमाविर्भावार्थं ते तवाभिरूपाण्यनुकूलानीत्यन्वयः । स्वोक्तार्थे प्रमाणमाह ॥ व्यक्त इति ॥ ३१ ॥ परं प्रधानमिति श्लोकार्धे त्रिवृतमिति हरेर्विशेषणमुक्त । तस्य त्रिभिः प्राकृतसत्त्वादिगुणैर्युक्तमित्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव विवक्षितार्थमाह ॥ वेदैरिति । तुरवधारणे । वेदैर्वृतत्वादित्यनेन सबध्यते । तेन प्राकृत सत्त्वादिगुणवृतत्व व्यावर्तयति ॥ ३३ ॥ मया प्रोक्तं हीति श्लोकार्धे सत्यो यथार्थो यो लौकिको लोके विद्यमानः पदार्थस्तत्र प्रमाणमुक्तमित्ययथार्थप्रतीतिनिरासाय तदनूद्य यथावद्व्याचष्टे ॥ सत्येति । अनेन लुक् प्रकाशन इति धातुबलेन लोकशब्द ज्ञानार्थत्वेन व्याख्याय तत्रैवाभिधान च पठति ॥ आभास इति ॥ ३५ ॥ विश्वमेतद्धीति श्लोके मुनिर्यद्यात्मान जीवं तदतिरिक्तमेतद्विश्वं चेश्वरमीश्वरात्मकं शास्त्रेण विज्ञाय ज्ञातमनोवाक्यो भवेत्तर्हि न ख्यात्युपप्लव एतदैक्यादिज्ञानेन दुःखाद्युपद्रवान्न भवतीति जीवेश्वराभेदज्ञानस्य मोक्षसाधनत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय श्लोकं सम्यग्व्याचष्टे ॥ विश्वमित्यादिना । भागवतस्थहिशब्दयोरर्थः ॥ यतोऽत्र इति । अनेन हि यस्माद्विश्वमेतद्देतादृशमनित्यमसारं भवति तर्हि तस्मात्कारणादात्मानं विश्वं व्याप्तं परमात्मानमीश्वरमाचिंत्यैश्वर्यादिमंतं शास्त्रेण विज्ञाय ज्ञातमनोवाक्यो विश्वोपरतमनोवाक्यवृत्तिः सन् ख्यात्युपप्लववान्न भवतीति

भागवतवाक्य व्याख्यात ॥ ४० ॥ निरहंकृतिरिति श्लोके स्वदृगित्यत्र स्वशब्दो जीववाचीति भ्रांतिनिरासाय प्रमाणेनैव तदर्थमाह ॥ अनन्येति । तस्मिन्नेव श्लोके प्रत्यग्र इत्यस्याग्रमग्रं प्रतीतिप्रत्यग्रमित्यन्यथाप्रतीतिनिरासाय विवक्षितमर्थमाह ॥ प्रत्यय इति । अनेन प्रत्यग्ररूपे बिंबरूपे हरौ रतिर्यस्येति विग्रहः सूचितः ॥ ४५ ॥ नन्वात्मानं सर्वभूतेष्विति श्लोके सर्वभूतस्थस्य सर्वभूताधारस्य च हरिरूपात्मत्वमुच्यते । तदयुक्त । भूताधाररूपस्य व्याप्तत्वेनात्मसभवेऽपि भूतस्य रूपस्यात्माभावाच्चद्रूपस्य परिच्छिन्नत्वादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ भूतसर्ग इति । भूतस्थमित्यतः परमितिशब्दोऽध्याहार्यः । इति द्विरूपवान्हरिः पूर्ण एवेत्यन्वयः । अतः पूर्णत्वात् । तं द्विरूपं हरिं । पूर्णत्वमेव विवृणोति ॥ सदैवेति । आत्ता व्याप्ताः पूर्ण गुणा यस्मिन्स तथा । अनेनात्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते । असंपूर्णाः परे यस्मादित्यादिप्रमाणमत्रास्तीति सूचितं ॥ ४६ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां पंचविंशोऽध्यायः ॥ ३-२५ ॥ छ ॥

॥ हरिः ॐ ॥ तं त्वागताहं शरणमिति श्लोके प्रकृतेर्जडप्रकृतेः पुरुषस्य जीवस्य जिज्ञासया ज्ञातुमिच्छयाऽहं तं त्वां शरणं गतेति जडप्रकृतेर्यस्यकस्यचिज्जीवस्य ज्ञानार्थं देवहूत्याः कपिलशरणागतिरुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ नारायण इत्यादिना । कामपदमिंद्रोपलक्षक । मन्वाद्या इत्याद्यपदेन प्रवाहादयो ग्राह्याः । भास्करादय इत्यादिपदेन यमादयो ग्राह्याः । पुरुषाख्याभिशब्दिताः पुरुषेत्याख्यया नाम्नाभिशब्दिताः प्रतिपादिता इत्यर्थः । अनेन नारायणादिप्रतिपादकोत्तरग्रंथस्य देवहूत्यजिज्ञासितोक्तित्वं परिहृतं ॥ ११ ॥ योग आध्यात्मिक इति श्लोके आत्मान देहमधिकृत्य वर्तमानमिंद्रियादिकमध्यात्मं तत्र विद्यमानो योगः संबंध इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ परमात्मादिकमिति । देहे यत्परमात्मादिकं तदध्यात्ममीरितामित्यन्वयः । अनेनाध्यात्मं परमात्मादिकं तद्विषयत्वेन तत्संबंध्याध्यात्मिकमिति भागव

तपदं व्याख्यातं। तच्छ्लोकस्यैवोत्तरार्धे यत्र निःश्रेयसे दुःखस्य सुखस्य चात्यन्तोपरतिरिति सर्वसुखाभावो योगफलत्वेनाभ्यत। स प्रमाणबाधित इत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह॥ सुखमिति॥१२॥अहं ममाभिमानेति श्लोके यदाऽऽत्मनो अदुःखमसुखं भवति तदा पुरुषोऽविकार्यात्मानं परिपश्यतीति मनसि दुःखसुखाभावसाम्यभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह॥ बाह्य इति ॥१६॥ तदा पुरुष इति श्लोके केवलनिरंतरमखंडितपदानां क्रमेणात्यंतार्थत्वनित्यत्वच्छेदरहितार्थत्वभ्रांतिनिरासाय प्रमाणेनैव विवक्षितमर्थमाह ॥ अभेदादित्यादिना। गुणदेहेंद्रियादभेदाच्च निरंतर उदाहृत इति संबंधः। एतादृशोऽहमेकः पुराऽनादिकालतोऽत इत्यर्थः। सदा मत इति क्वचित्पाठः ॥ १७ ॥ परिपश्यत्युदासीनमिति श्लोकार्धे हतौजसं प्रकृतिं च परिपश्यतीति सामान्यतः प्रकृतिशब्दवाच्यस्य हतौजस्त्वमुच्यते। तेन प्रकृतिशब्दवाच्यानां लक्ष्म्यादीनां हतौजस्त्वं प्राप्तमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ बंधशक्तिरिति। बधे शक्तिर्यस्याः सा तथा। स्वविकारगुणत्रयेण जीवबंधिका जडप्रकृतिः ॥ १८ ॥ मय्यनन्येनेति श्लोकार्धे ये मय्यनन्येन जीवादन्यत्वेन यो भावो ध्यानं तेन निमित्तेन भक्तिं स्नेहं कुर्वंति ते साधव इति जीवेश्वरैक्यज्ञानिनः साधुत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ यादृशीति। मय्युद्रेकादुत्कर्षाद्यादृशी भक्तिः स्यादित्यन्वयः ॥ २२ ॥ तपंति विविधानिति श्लोकार्धे ऐकात्म्यगतचेतस ऐकात्म्ये आत्मैक्ये गतं चेतं येषां त इति जीवैक्यज्ञानिनां साधुत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेन तद्विवक्षितमर्थमाह ॥ एक इति। आत्मशब्दार्थः ॥ पूर्ण इति। अनेनैकश्चासावात्मा पूर्णश्चैका.मा। तद्वशत्वेन तत्संबंध्यैकात्म्यमिति विग्रहः सूचितो भवति ॥ २३ ॥ विदित्वार्थं कापिल इति श्लोके कपिलो यत्र यस्यां तन्वाऽभिजातस्तस्या मातुरर्थं विदित्वेति कपिलनारायणस्य शरीरोत्पत्तिरुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ शुक्लेनेति। स्वतनुवैव स्वरूपभूतचिदानंदात्मकशरीरेणेव ॥ ३१ ॥ देवानां गुणलिं-

गानामिति श्लोकार्धे आनुश्राविककर्मणामित्यस्य दुर्गमार्थत्वात्प्रमाणेनैव विवक्षितमर्थमाह ॥ **आनुश्राविकेति** । श्रुत्युक्त कर्मजात । **सत्त्व एवैक मनस** इति श्लोकार्धे सत्त्वशब्दस्य प्राकृतसत्त्वगुणार्थत्वभ्रांतिनिरासाय प्रमाणेनैव तद्व्याचष्टे ॥ **सदा सर्वेति** ॥३२॥ **अनिमित्ता भगवतीति** श्लोकार्धे भगवती भगवद्विषया भक्तिः सिद्धेर्मोक्षाद्गरीयसीति हरिभक्तेर्मोक्षादाधिक्यमुच्यते । तदनुपपन्नं । सुखरूपस्य मोक्षस्यानन्यार्थत्वात् । भक्तेषु मोक्षार्थत्वात् । अनन्यार्थान्यार्थयोरनन्यार्थस्यैवाधिक्यादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **अपूर्णभक्तेरिति** । अपूर्णभक्तेरपक्वभक्तेः । तादृशमुक्तेरपरिपक्वभक्तिजमुक्तेः । पूर्णा परिपक्वा ॥३३॥ **नैकात्म्यतामिति** श्लोके केचि न्मत्पादसेवाभिरता मे ममैकात्म्यतां मुख्यात्मत्वं न स्पृहयंतीति विरुद्धमुच्यत इत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **नेच्छंतीति** । येषामनि- मित्ता भगवद्भक्तिस्ते फलत्वेन सायुज्यमपि नेच्छंति किमुतान्यत् । भक्तिसतुष्टो हरिर्यदि सायुज्य ददाति तर्हि तद्धरेराज्ञात्वेनैव गृण्हते न फलत्वेन त्वैतादृशानां तु मुक्तौ पुनः सुखाधिक्यं भविष्यतीत्यर्थः ॥ ३४ ॥ **येषामहं प्रिय** इति श्लोकार्धेऽह येषामात्मा स्वरूपमित्यन्यथाप्रतीतिनिरासाय स्वयमात्मशब्दं व्याचष्टे ॥ **आदानादीति** ॥ ३८ ॥ इति श्रीभागवततात्पर्यटिप्पण्या षड्विंशोऽध्यायः ॥ ३-२६ ॥ छ ॥

॥ हरिः ॐ ॥ **न जातो न म्रियेतात्मेति** श्लोके स आत्मा जीवः स्वरूपतो न जातो न म्रियेत किंतु देहाद्युपाधिभि र्निमित्तैरात्तधर्मो देहधर्मोत्पत्त्यादिमानिति सर्वस्यापि श्लोकस्य जीवपरत्वभ्रांतिनिरासाय न जातो न म्रियेतात्मा स हीत्येतावद्भा गवतवाक्य परमात्मपरत्वेन व्याकुर्वन् हिशब्दं चानूद्य व्याचष्टे ॥ **स परम इति** । हिशब्दार्थः ॥ **इति प्रसिद्धमिति** । न जायते म्रियते वा कदाचित्यादौ । इत्याहेति शेषः । एव हिशब्देन हरेर्जन्माद्यभावस्य श्रुत्यादिप्रसिद्धत्वमुक्त्वेदानीं कैमुत्येनापि हरेर्जन्माद्यभावं प्रतिपादयन् देहाद्युपाधिभिर्निमित्तैरित्यादिभागवतवाक्यं व्याचष्टे ॥ **देहादीति** । आत्ता व्याप्तास्तद्धर्मास्तस्य देहस्यो

त्पत्त्यादिधर्मा येन जीवेन स तथा। तादृशो जीवोऽपि यदा भ्रांत्यैव जायते म्रियते च न तु स्वभावतस्तदा सर्वज्ञत्वादिवैलक्षण्य-युक्तोऽत एव भ्रांतिरहित ईश्वरो न जायते न म्रियत इति किमु वक्तव्यमित्यर्थः। ननु जीवस्य जन्मादिहेतुर्भ्रांतिः केत्यत उक्तं भ्रांतित्वादिति। देहात्मत्वस्य देहे आत्मत्वस्यात्मत्वज्ञानस्य देहे आत्मत्वज्ञानमेव जीवस्य जन्मादिहेतुर्भ्रांतिरिति भावः। इद तु भागवतस्थस्वप्नशब्दतात्पर्यार्थकथनं ज्ञेयं। अनेन जीवस्य स्वरूपतोत्पत्त्यभावेऽपि देहात्मत्वभ्रांत्या देहोत्पत्त्याद्यस्ति। ईश्वरस्य तु देहोत्पत्त्यादिकमपि नास्ति। देहात्मत्वभ्रांत्यभावादित्युक्त भवति। स्वप्नवद्भ्रांत्या भ्रांतित्वाद्देहात्मत्वस्येति तात्पर्यवाक्येन जीवोऽपि यथा स्वप्ने तदीक्षिता। तस्य बुद्धौ प्राकृतस्य देहात्मत्वस्येक्षिता द्रष्टा। तद्विषयकभ्रांतिमानिति यावत्। तथा जाग्रत्यपि देहात्मत्वभ्रांतिमानिति भागवतवाक्यं व्याख्यातं भवति। स्वोक्तार्थे प्रमाणमाह॥ परस्येति। यतो यदा जीवस्यापि जन्ममृत्यादिसंगतिर्भ्रांत्या तदा परस्य सर्वोत्कृष्टस्य स्वतंत्रस्य हरेर्जन्ममृत्याद्याः पुनः किं स्युर्नैव स्युरित्यर्थः॥ ४॥ यदृच्छयैवेति श्लोकार्धे उपगतां प्राप्तामित्यर्थप्रतीति निरासाय तदनूद्य व्याचष्टे॥ उपगतामिति॥ ५॥ विलोक्य मुमुह इति श्लोकार्धे स हरिः प्रकृतिं विलोक्य मुमुहे मोहं प्रापेति हरेरज्ञानं प्रतीयते। तच्च प्रमाणबाधितमित्यतो यथावद्व्याचष्टे॥ मुमुह इति। ननु कारयितरि कर्तृशब्दः कुत्र दृष्ट इत्यतः प्रयोगद्वयं दर्शयति॥ तदेतादिति। तदेतन्मे विजानीहि यथाऽहं मंदधीर्हरे। सुखं बुद्ध्येय दुर्बोधं येषां भवदनुग्रहात्। कृत्वा विवाहं तु कुरुप्रवीरा इत्यत्र यथा कारयितरि कर्तृपदप्रयोगस्तथेत्यर्थः। नन्वस्त्वेवं प्रयोगस्तथाऽपि स्वायत्ते शब्दप्रयोगे सति वेदव्यासेनैवम् प्रयोगः किमर्थ कृत इत्यतः प्रमाणेनैव प्रयोजन दर्शयस्तेनैव प्रमाणेन प्रयोगांतर च दर्शयति॥ यत्रेति। अतीव स्वतंत्रो यत्र यस्मिन्नर्थे कारयिता तत्र कर्तृताप्रयोग इत्यर्थः। अतीवेति पराधीनस्वतंत्रत्वनिवृत्त्यर्थं। अनेन स्वातंत्र्यज्ञापनमेव प्रयोजनमुक्तं। ब्रह्म परं ब्रह्म॥ ६॥ स एव प्रकृतिं सूक्ष्मामिति लक्ष्म्या हरिसमीपस्थत्वमुक्तं। तत्किं कदाचिदुत सदेति

जिज्ञासायां सदैवेत्यभिमेत्य सिंहावलोकनन्यायेन हरेर्लक्ष्मी विना स्थित्यभावे प्रमाणमाह ॥ लये वेति । प्रकृत्या लक्ष्म्या ॥५॥ एवं पराभिध्यानेनेति श्लोके पुमान् पराभिध्यानेन परस्परहरेर्ध्यानेनात्मानि कर्तृत्वं मन्यत इति विरुद्धमुच्यते । न हि हरिध्यानिनः स्वस्मिन्कर्तृत्वाभिमानो युज्यत इत्यतः पराभिध्यानपदमनूद्य व्याकुर्वन्केषांचित्पदानामन्वयं दर्शयति ॥ एवं परेति ॥ ७ ॥ तदस्य संसृतिरिति श्लोकार्धेऽस्य जीवस्य तत्कृत तेन कर्तृत्वाभिमानेन कृतं पारतंत्र्यं भवतीति जीवस्य यावत्कर्तृत्वाभिमानो वर्तते तावत्पर्यंतमेव पारतंत्र्यमस्ति । ज्ञानात्तन्निवृत्तौ पारतंत्र्यमपि निवर्तत इति भाति । तच्च सर्वमुक्ताधिपो ब्रह्मेत्यादिनिरवकाशप्रमाणबाधितामित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ विष्णोरिति । जीवस्य विष्ण्वादीनां तंत्रताऽधीनता नित्या । यत्तस्य जीवस्यान्यतंत्रत्वं विष्ण्वादिभ्योऽन्यस्य प्रकृत्यादेस्तंत्रत्वं तदेव ज्ञानादिनिवर्तत इत्यर्थः । भवत्यकर्तुरीशस्येत्यर्धेऽकर्तुरीशस्य पारतंत्र्यं भवतीति भ्रांतिनिरासायापेक्षिताध्याहारेण तस्यान्वयमाह ॥ अकर्तुरिति । ननु सर्वकर्तुरीशस्याकर्तृत्वं कथमुच्यत इत्याशंकां प्रमाणेनैव परिहरति ॥ अक्लिष्टत्वादिति । क्लेशेन कर्तृत्वाभावादित्यर्थः । अकार्यत्वात्कर्तुमशक्यत्वात् । अनेन न विद्यते कर्ता यस्येति विग्रहः सूचितः । ननु हरेः सर्वथाऽकर्तृत्वमेव किं न स्यात् । तथा हरेः कर्ता चान्यः किं न स्यादित्याशंकां प्रमाणेनैव परिहरति ॥ एष कर्तेति । एषो हरिर्यतो जगत्प्रभुर्जगत्प्रभवत्युत्पद्यते येनेति विग्रहाज्जगदुत्पादकस्ततः कर्ता । यतश्च केनापि न क्रियतेऽतोऽकरणमकर्तेत्यर्थः । अनेन हरेः सर्वथाऽकर्तृतायाः प्रमाणविरोधः सूचितः ॥ ८ ॥ कार्यकारणकर्तृत्व इति श्लोके कार्यकारणानां कर्तृत्वे प्रकृतिं जडप्रकृतिं कारणं विदुः प्रकृतेः पर विलक्षणं पुरुषं जीवं कारणमाहुरिति जडकार्यकारणानां कर्तृत्वं तथा तत्कर्तृत्वं प्रति जडप्रकृतेः कारणत्वं तथा जीवस्यैव भोक्तृत्वे कारणत्वं चोच्यत इति । तदयुक्तं । जडस्योपादानादिगोचरज्ञानादिमत्त्वरूपकर्तृत्वाभावात् । केवलजडप्रकृतेः कर्तृत्वं प्रति कारणत्वस्य तथा परतंत्रजीवस्य भोक्तृत्वं प्रति

कारणस्य चासंभवादित्यतो नात्र जडं विवक्षितमिति भावेन प्रमाणेनैव तत्तात्पर्यार्थमाह॥ ब्रह्मादिभिरिति। सर्गकरी सर्गकारिणी। प्रकृतिशब्दार्थः॥ श्रीरिति। ब्रह्मादिभिः सर्गकरी ब्रह्मादिहस्तेन सर्गं कारयतीत्यनेन कार्यकारणानां कर्तारो ब्रह्मादयः कार्यकारणकर्तारस्तेषा भावस्तत्वं तस्मिन्निति भागवतपदविग्रहः सूचितो भवति। सुखदुःखप्रदो विष्णुरित्यनेन तथा भोक्तृत्वं सुखदुःखानां करोत्येको हरिः स्वयमित्यनेन च प्रकृतेः परमुत्तमं पुरुषं विष्णुं सुखदुःखानां कारणं विदुः। सुखदुःखानां भोक्तृत्वे च कारण विदुरिति भागवतवाक्य व्याख्यातं भवति। ननु विष्णुरव सुखदुःखप्रद इत्युक्तं। ब्रह्मादीनामपि दैत्यादिदुःखप्रदत्वस्य प्रमाणसिद्धत्वादित्यत आह॥ कर्तृत्वमिति। अन्येषा ब्रह्मादीनां तदाज्ञया हर्याज्ञया। जीवे मानुषादिजीवे। भोक्तृत्वमात्रेति मात्रपदेन सुखदुःखप्रदत्वादिकं व्यावर्तयति। कुत्रचिदन्यत्र कस्मिंश्चिदपि केवलजडे भोक्तृत्वहेतुत्वं नास्तीत्यर्थः। भागवतस्य प्रकृतिपुरुषोक्तयोर्लक्ष्मीनारायणयोः प्रमाणेन यत्कारणत्वमुक्त तत्रैव प्रमाणांतरसंवादमाह॥ प्रकृतिरिति। अनादी अनस्य मुख्यप्राणस्य आदी कारणेत्यर्थः। अत्रानपदस्य कार्यकारणाद्युपलक्षकत्वेन वा कैमुत्येन वा सर्वकार्यकारणादिकारणत्वमर्थो ज्ञातव्यः॥९॥ यत्तत्त्रिगुणमिति श्लोके यदव्यक्त सदसदात्मकं तदेव प्रकृतिमाहुरिति प्रकृतेः सद्रूपत्वमत्यन्तासद्रूपत्वं चोच्यते। तच्च परस्परविरुद्ध चत्यतः प्रमाणेनैव तद्व्याचष्टे॥ व्यक्तेति। यव्यक्ताव्यक्तात्मक तदेव सदसदात्मकं विंद्यात्। अत्र व्यक्ताव्यक्तात्मकमित्यस्य सदसदात्मकमित्यस्य च व्यक्तात्मकमव्यक्तात्मकं व्यक्ताव्यक्तात्मकं चेति सदात्मकमसदात्मकं चेति चार्थो ज्ञातव्यः। अव्यक्तादित्रयं दर्शयति॥ असर्गेत्यादिना। असर्गा असिसृक्षुः केवला व्यक्ता अव्यक्तैव सिसृक्षुः असर्गा उभयात्मिका व्यक्ताव्यक्तात्मिकेत्यर्थः। तस्मिन्नेव श्लोके प्रधान प्रकृति प्राहुरविशेषमिति प्रकृतेः प्राधान्यमविशेषत्वं चोक्तं। तच्च प्राधान्य निरवधिकमित्यविशेषत्व तु निर्धर्मिकत्वमिति च भ्रांतिनिरासाय प्रधानाविशेषपदयोरर्थमाह॥ कार्यंत इति। कार्चिद्विष्णुसश्रयेति पाठः। अत्रैव श्लोके विशेषवदिति प्रकृति-

विशेषणमुक्तं । तस्य धर्मयुक्तार्थत्वभ्रांतिनिरासाय प्रमाणेनैवार्थमाह ॥ विशेष इति ॥१९॥ ननु मनोबुद्धिरिति श्लोकेऽतरात्मनोऽतःकरणस्य मनोबुद्धिरहंकारश्चित्तमिति चतुर्धा भेदो लक्ष्यत इत्युक्तं । तदयुक्तं । मनश्चित्तपदयोरेकार्थत्वेन चतुष्ट्वासंभवादित्यतः प्रमाणेनैव मनआदिपदानामर्थभेदमाह ॥ बुद्धिरिति । यदतःकरणमध्यवसानाय भवति तद्बुद्धिरुच्यत इति योजना । एवमुत्तरत्रापि यदंतःकरणं तदित्युच्यत इति पदाध्याहारेण योजना द्रष्टव्या । अभिमानः । कारणमिति शेषः । तुर्विशेषे ॥ १५ ॥ एतावानेव संख्यात इति श्लोके सगुणस्य गुणयुक्तस्य ब्रह्मणः परब्रह्मणः इत्यर्थभ्रांतिस्तथा एतच्चतुर्विंशतिगुण प्राधानिकमित्यत्र चतुर्विंशतितत्त्वाना प्रधाननामकलक्ष्म्यभिन्नत्वभ्रांतिश्च भवति । अतः प्रमाणेनैव ता भ्रांतिं निवारयति ॥ हरिस्त्विति । अनेन सत्त्वगुणस्येत्यत्र गुणपदेन सत्त्वगुणा विवक्षितास्तत्साहित्यं नाम तदभिमानित्वं विवक्षितमित्युक्तं भवति । तदंगजानि तत्त्वानीत्यनेन प्राधानिकं प्रधानाभिधलक्ष्म्यंगजातमिति भागवतपदं व्याख्यातं भवति ॥ १६ ॥ प्रभावं पौरुषमिति श्लोके यः कालः पंचविंशकः तं काल पौरुषं पुरुषस्थितप्रभावं सामर्थ्यमाहुरिति कालस्य जीवस्थसामर्थ्याभेदभ्रांतिनिरासायाग्रे व्याकरिष्यन्नादौ पौरुषपदस्थपुरुषपदं प्रमाणेनैव व्याकुर्वन् कालपदं च तेनैव प्रमाणेन व्याकरोति ॥ पुरुष इति । इदानीं पौरुषं प्रभावमित्येतदनूद्य व्याचष्टे ॥ पौरुषमिति । प्रकर्षेण भावमिति प्रभावपदवाच्यार्थः । व्याप्तरूपमिति तात्पर्यार्थः । भागवतस्थैक इत्यस्य केचिदज्ञानिन इत्यर्थभ्रांतितिनिरासाय विवक्षितमर्थमाह ॥ एक इति ॥ १७ ॥ दैवात्क्षुभितेति श्लोके दैवं दिष्टं भागधेयमित्याभिधानाद्दैवाद्भाग्याददृष्टादिति दैवशब्दस्य भाग्यार्थत्वभ्रांतिनिरासाय प्रमाणेनैव दैवपदमनूद्य व्याकुर्वन् सर्वश्लोकतात्पर्यार्थं चाह ॥ प्रकृतेरिति । दैवमित्यनुवादो नारायणमिति व्याख्यानं । प्रकृतौ महत इति तात्पर्यश्लोकार्धेन स्वस्यामित्यारभ्य हिरण्मयमित्यंतभागवतवाक्यतात्पर्यार्थ उक्तो भवति ॥ २० ॥ यदाहुरिति श्लोकार्धे यद्वासुदेवाख्यं तदेव महदा-

त्मकमिति वासुदेवाख्यहरेर्महत्तत्त्वाभिमानित्वमुच्यते । तथा संकर्षणाख्यं पुरुषमिति श्लोकार्धे संकर्षणाख्यं पुरुषं भूतेंद्रियमनोमयं प्रचक्षते इति मयटस्तादात्म्यार्थत्वेन संकर्षणाख्यहरेर्भूतेंद्रियमनोरूपाहंकाराभिमानित्वमुच्यते । तथा वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत। यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरमिति श्लोकेन मनस्तत्त्वस्यानिरुद्धाख्यहर्यभिन्नत्वमुच्यते । तत्सर्वं निरवकाशभेदप्रमाणबाधितमित्यतः प्रमाणेनैव तच्छ्लोकजातस्य तात्पर्यार्थमाह ॥ तदेव वासुदेवाख्यमित्यादिना । अत्र सूक्ष्माहंकारस्थूलाहंकारपदग्रहणेन प्रद्युम्नाख्यहरेरहंकारनियामकत्वप्रतिपादकग्रंथविरोधः परिहृतः । अनेनात्मशब्दस्य स्वामित्वमर्थो मयटः प्राधान्यमर्थ उक्तो भवति । तथा यद्यस्य मनस्तत्त्वस्य नियामकमनिरुद्धाख्यं हरिरूपं विदुरिति भागवतवाक्यं च व्याख्यातं । महत्तत्त्वादेर्नियामकं हरिरूपमुक्त्वेदानीमभिमानिदेवानाह ॥ महत्तत्त्वादीति । जीवा अभिमानिनोऽगजाः । प्रद्युम्नः । सूक्ष्मस्थूलविभेदेन । अहंकारस्येति शेषः । भगवद्रूपानिरुद्धव्याप्त्यर्थं कामजेति विशेषणमुक्तं ॥ २२–२७ ॥ ननु विश्वमात्मगतमिति श्लोके कूटस्थपदेन हरेर्निर्विकारत्वमुक्त्वा यथा वृक्षांकुरो वृक्षस्योपादानकारणं तथा जगदंकुर उपादानकारणमिति जगदंकुरपदेन तद्विरुद्धविकारित्वं कथमुच्यत इत्यतः प्रमाणेनैव जगदंकुरपदार्थं वदन् श्लोकार्थं च तेनैव प्रमाणेनाह ॥ अंक इति । महांतं महत्तत्वाभिमानिनं । अनेन जगदंके रमयतीति जगदंकुर इति विग्रहः सूचितः । यद्वासुदेवाख्यं हरिरूप तन्महदात्मकं महत्तत्त्वस्यात्मकं नियामकमिति प्रमाणेन व्याख्याय तदेव वाक्यं प्रकारांतरेण स्वयं व्याचष्टे ॥ यद्वासुदेवाख्यमिति । महदात्मकमहत्तत्त्वद्वारा महत्तत्त्वोपादानकं । अनेन पूर्वं प्रमाणेन व्याख्यानपक्षे चित्तं ज्ञानात्मकमिति चित्तपद वासुदेवविशेषणमिति सूचितं ॥ २१ ॥ यत्तत्सत्त्वगुणमिति श्लोकार्धे वासुदेवस्य सत्त्वगुणत्वादिविशेषणान्युक्तानि । तत्र सत्त्वगुणमित्यस्य प्रकृतिविकारसत्त्वगुणस्वरूपार्थत्वभ्रांतिनिरासाय प्रमाणेनैव सत्त्वशब्दार्थमाह ॥ सत्त्वशब्देनेति । अनेन सत्त्वं पूर्णानंदादिगुणो यस्य

त्तथेति भागवतपदविग्रहः सूचितः । यदाहुर्वासुदेवाख्यमित्यस्य स्वकृतव्याख्यानांतरे प्रमाणमाह ॥ महत्तत्त्वेति । ननु सत्त्वशब्देन तूच्यत इति प्रमाणेन यत्तत्सत्त्वगुणं स्वच्छमित्याद्युक्तसत्त्वगुणत्वादिविशेषणानि वासुदेवस्यैवेति सूचित । तत्कुतः । तत्रोक्तचित्तस्यैव किं न स्युरिति चेन्न । तथात्वे स्वच्छत्वमविकारित्वं कथमित्यतस्तत्प्रमाणेन घटयति ॥ स्तिमितेति । स्तिमितोदकवद्विद्यमानस्य सज्जनचित्तस्याल्पविक्रियैर्वा विकारोऽविकारपदार्थो न तु सर्वथा विकाराभाव इत्यर्थः ॥ २२ ॥ स्वच्छत्वमविकारित्वमिति श्लोके स्वच्छत्वमविकारित्वं शांतत्वमिति वृत्तिभिर्मनोवृत्तिभिश्चेतसो लक्षणं प्रोक्तमिति स्वच्छत्वादीनां मनोविकारित्वमुच्यत इति भ्रांतिनिरासायाभिधानेन वृत्तिशब्दार्थमुक्त्वा वृत्तिभिर्लक्षणं प्रोक्तमिति भागवतवाक्यं स्वय व्याचष्टे ॥ वृत्तिः स्वभाव इत्यादिना । अनेन इति वृत्तिभिः स्वभावैः स्वाभाविकैर्धर्मैरिति भागवतवाक्यं व्याख्यात भवति ॥ २३ ॥ महत्तत्त्वाद्विकुर्वाणादिति श्लोके क्रियाशक्तिरहंकार इत्यहंकाराभिमानिरुद्रस्य क्रियाशक्तिमात्रोक्त्या ज्ञानशक्तिर्नास्तीति भाति । तदयुक्तं । तारकब्रह्मोपदेष्टृत्वेन ज्ञानशक्तेः प्रमाणसिद्धत्वादित्यतः प्रमाणेनैव तदभिप्रायमाह ॥ ज्ञानप्रधान इति । महान् महत्तत्त्वाभिमानी ब्रह्मज्ञानप्रधानो ज्ञानेन प्रधानोऽधिकः । अहंकारस्तदभिमानी रुद्रः । अनेन भागवते रुद्रस्य केवलक्रियाशक्त्युक्तिश्च चतुर्मुखज्ञानापेक्षयाऽल्पज्ञानत्वाभिप्रायेणैव न तु ज्ञानशक्त्यभावाभिप्रायेण । रुद्रे क्रियाशक्त्यपेक्षयाऽधिकज्ञानशक्तेः प्रमाणसिद्धत्वादित्युक्तं भवति ॥२४॥ वैकारिकोऽधिदैवमिति श्लोकार्थे वैकारिको वैकारिकाहंकारतत्त्वमाधिदैवं दैवमधिकृत्य वर्तमानमित्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तदर्थमाह ॥ देवतेति । देवताभिरधिकृतमाधिष्ठितं देवताशरीरमित्यर्थः । अनेन देवा एव दैवतानि तैरधिकृतमाधिदैवमिंद्रियाभिमानिदेवशरीरामिति भागवतपदस्य विग्रहः सूचितो भवति । ननु यद्याधिदैवपदेनेंद्रियाभिमानिदेवशरीर गृहीत तर्हि वैकारिकाहंकारस्य देवताशरीरं प्रति हेतुत्वाद्धेतौ पंचमी वक्तव्या । तां विहाय प्रथमा कथमुक्तेत्यत आह ॥ वैकारिक इति ।

आदिपदेन तैजसस्तामसस्त्विवत्यस्य ग्रहणं। ननु स्वायत्ते शब्दप्रयोगे सति किमर्थमेवं प्रयोग इत्यतः प्रमाणेनैव प्रयोजनं दर्शयति ॥ सप्तस्विति। यत्स्वातंत्र्यं विवक्षितं तत्र स्वातंत्र्येर्थे सप्तसु प्रथमा भवतीत्यर्थः। अनेन जडविवक्षयोपादानोपादेययोरभेदाद्वैकारिकस्योपादानत्वरूपस्वातंत्र्यज्ञापनार्थमयमभेदव्यपदेशः। चेतनविवक्षायां यदधीना यस्य सत्ता तत्तदित्येव भण्यत इति वचनात्स्वावरनियामकत्वरूपस्वातंत्र्यज्ञापनार्थमेवं प्रयोग इत्युक्तं भवति ॥ २६ ॥ कर्तृत्वं करणत्वं चेति श्लोकार्धे कर्तृत्वादिकमहंकारस्योच्यते। तत्त्वेकस्यैवाहंकाररूपस्येति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ मनोरूपेणेति। ननु मनआदेरेव कर्तृत्वादिकं कुतो वैपरीत्यं किं न स्यादित्यतः प्रमाणेनैव तदुपपादयति ॥ यत इति। यतो जीवस्याहंभावः स्वतंत्रकर्तृत्वभ्रमो मनसि वर्तते तदुपादानकर्तृत्वात्। यतश्च स्वभावकर्तुः स्वतंत्रो भावो हरिस्तेन तत्प्रेरणया कर्तुर्जीवस्य तत्तत्र स्वतंत्रकर्तृत्वभ्रमे तत्तु तदेव मन आसन्नोपाधि आसन्नं सन्निहितं। साक्षादिति यावत्। उपाधिः करणं भवति तस्मान्मनः कर्तृ स्मृतमित्यर्थः। अनेनास्वतंत्रकर्तरि जीवे स्वतंत्रकर्तृत्वभ्रमं प्रति मनस एवोपादानत्वं नान्यस्येत्यतो मनस एव कर्तृत्वमित्युक्त भवति। यतः कर्मज्ञाने प्रति कारणता। इंद्रियस्येति शेषः। तत इंद्रियं कारणमित्यर्थः। पुनः पुनः प्रतिक्षणमित्यर्थः। शांत घोर विमूढेत्यर्धे शांतत्वादिकमेकस्यैवाहंकारस्योच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तद्व्याकुर्वन्नत्रोक्ताहंकारपदस्य केवलजडार्थत्वभ्रांतिं च तच्छेषेण परिहरति ॥ शांतरूपेति। देवपिता देवदेहजनकः शातरूपः शांतत्वं रूपयति निरूपयति जनयतीत्यर्थः। करणसृक् अप्रियजनको घोरो घोरत्वहेतुर्वैकारिकतैजसयोर्यावतो ज्ञानस्य जनकत्वं तावतो ज्ञानस्य प्रकाशादजनकत्वाद्भूतपिता भूतजनको मूढः स्मृत इत्यर्थः ॥ २८ ॥ तैजसात्तु विकुर्वाणादिति श्लोके द्रव्यस्फुरणविज्ञानं द्रव्यस्फुरणरूपं विज्ञानमित्यन्यथाप्रतीतिनिरासाय तत्पदं व्याचष्टे ॥ द्रव्यस्फुरण इति। द्रव्यस्फुरणे सतीति शेषः। द्रव्यस्फुरणविज्ञानमित्यस्य स्वोक्तार्थे प्रमाण वदंस्तेनैव प्रमाणेन

संशयोऽथ विपर्यास इति श्लोकस्याप्यप्रतीतिविमतीतिनिरासाय तात्पर्यार्थमाह ॥ **सामान्यमित्यादिना**। अनेन द्रव्यस्फुरणविज्ञानं द्रव्यस्फुरणविज्ञानकारणं बुद्धितत्त्वं तैजसादभूदिति भागवतवाक्यं व्याख्यातं ॥३१॥ ननु संशयोऽथ विपर्यास इति भागवत श्लोके यत्संशयादेर्बुद्धिलक्षणत्वमुक्तं। तदयुक्तं। अचलः संशयो बुद्धेरिति प्रमाणेन संशयादेर्बुद्धिकार्यत्वस्योक्तत्वात्कार्यस्य तत्कारणलक्षणत्वे प्रमाणाभावादित्यतः कार्यस्यापि कारणलक्षणत्वे प्रमाणमाह ॥ **येनेति**। लक्षण हि लक्ष्यस्य सजातीयविजातीयव्यावृत्तत्व बुद्धिजनको धर्मः । कार्यं च तादृशं भवति । यथाऽऽकाशादेः शब्दादिकार्यं। तल्लक्षणं तु किंचिद्यावद्द्रव्यभावि किंचिदयावद्द्रव्यभावीति द्विविधं । तत्र कार्यरूपं लक्षणमयावद्द्रव्यभावीत्याशयेनोक्तं तत्स्वरूपमित्यादि । तेन लक्षणं वृत्तितः पृथगिति भागवतवाक्यं वृत्तितस्तसेः सार्वविभक्तिकत्वात्प्रथमार्थे तसिर्वर्तते धर्मिणा सहैवेति वृत्तिस्वाभाविकं यावद्द्रव्यभावि लक्षण पृथगयावद्द्रव्यभावि लक्षण चेति व्याख्यातं भवति ॥ ३२ ॥ **प्राणस्य हीति** श्लोकार्धे मुख्यामुख्यन्यायेन प्राणस्य मुख्यप्राणस्येति भ्रांतिं सयुक्तिकप्रमाणेनैव परिहरति ॥ **प्रधानेति** । प्रधानवायुरिति श्लोकार्धे नास्यां सूक्ष्मसृष्टावुत्पन्नस्य प्रधानवायोस्तदानीमनुत्पन्नकर्मेंद्रियाणामभिमानित्वाभावात्तेन कर्तृत्वं न संभवति । न च कर्मेंद्रियोत्पत्त्यनंतरं रूपांतरेणापि प्रधानवायोरभिमानित्वमिति वाच्य। तत्र प्रमाणाभावादिति युक्तिरुक्ता भवति । तर्ह्यय प्राणः क इत्यत आह ॥ **स्वज इति** । स्वमाकाशो जायते यस्मात्सः स्वजः-शब्दः इत्यर्थः । स्पर्शः स्पर्शाभिमान्यपानः । आद्यपदेन रूपाद्यभिमानिव्यानादयो ग्राह्याः । एते स्वजादयस्तत्सुताः प्रधानवायोः सुताः स्मृता इत्यर्थः । एव तदाविष्टा इत्यादेर्मुख्यप्राणेनाविष्टा इत्यादिव्याख्यान द्रष्टव्यं ॥ ३३ ॥ **अर्थाश्रयत्वमिति** श्लोकार्धे शब्दस्य घटाद्यर्थाधारत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय स्वय तस्य तात्पर्यमाह ॥ **अर्थेति** । अनेन भागवतप्रसगाद्वर्णात्मकशब्दस्येदं लक्षणमुक्तमिति सूचितं । तस्मिन्नेवार्धे द्रष्टुर्लिंगत्वमित्यस्य द्रष्टुर्लिंगत्वं व्याप्तिबलेनार्थगमकत्वमित्यर्थभ्रांतिं प्रमाणेनैव

निराकुर्वन्नर्थाश्रयत्वमित्यस्य स्वोक्तार्थं च तेनैव दृढयति ॥ शब्दैनैवेति । अनेनात्र लिंगपदं ज्ञापकत्वार्थकं न तु व्याप्तिबलेन ज्ञापकत्वार्थकमित्युक्तं भवति । तन्मात्रत्वं च नभसो नभसः शब्दतन्मात्रात् । वायोश्च स्पर्शतन्मात्रादित्यादिषु श्लोकेषु शब्दस्पर्शादेरा काशवाय्वादितन्मात्रत्वमुच्यते । यत्र यथैकस्य शब्दस्यैवाकाशतन्मात्रत्वं तथैकस्य स्पर्शस्यैव वायुतन्मात्रत्वं । एकस्य रूपस्यैव तेजस्त न्मात्रत्वमित्यादि भ्रांतिं पूर्वोदाहृतप्रमाणशेषेणैव परिहरति॥स्पर्शादीति। स्पर्शाद्यभावात्स्पर्शादीनामाकाशोपादानकारणत्वाभावाच्छब्द स्यैवाकाशोपादानकारणत्वाच्छब्द एव नभसस्तन्मात्रेति कीर्त्यते । स्पर्शादयश्च शब्दाच्छब्दश्च तन्मात्राः । वाय्वादीनामिति शेषः । तत्कथमित्यतस्तद्विविच्य दर्शयति ॥ इतर इति । पंचसु भूतेषु मध्ये पूर्वसंस्थिते नियमेन पूर्वकालभाविनि भूते आकाशादौ स्थितो यो गुण उपादानीभूतशब्दादिः स एव प्रत्येकमितरेतरास्मिन् पश्चाद्भाविनि कार्यभूतेऽप्येक उपादानीभूतस्तिष्ठतीत्यर्थः । पूर्वसंस्थितेरिति क्वचित्पाठः । तत्र नियतपूर्ववृत्तित्वाद्भूते कारणरूपे आकाशादावित्यर्थः । अत एव नभसः शब्दतन्मात्रादित्यादिना शब्दादीनां वाय्वाद्युपादानत्वमाह भगवान् बादरायणः । अत्र प्रत्येकमिति पदेनाकाशस्य शब्द एवोपादानं । वायोः शब्दस्पर्शौ द्वौ गुणा वुपादानं । तेजसो रूपसहितास्त्रयः । जलस्य रससहिताश्चत्वारः । पृथिव्या गंधसहिताः पंचगुणा उपादानमिति सूचितं । अत एव पृथिव्यां पंचापि गुणा उपलभ्यते । अर्थाश्रयत्वं शब्दस्येत्यनेनार्था आश्रयत्वं यस्य शब्दस्येत्युक्तं । तस्यैव शब्दस्य तन्मात्रत्व च नभस इत्यनेनाकाशतन्मात्रत्वमुच्यत इति भ्रांतिं प्रमाणेनैव परिहरति ॥ शब्द इति । आकाशसंभव आकाशस्य संभव उत्पत्तिर्यस्मा द्वनिरूपशब्दात्स तथति विग्रहः । न चाकाशसूक्ष्मरूपस्यैवाकाशोपादानत्वस्य प्रमाणसिद्धत्वाद्धरिराकाशोपादानत्वमुक्तं तदयुक्तमित्यत आह ॥ आकाश एवेति । तुर्विशेषेण व्यज्यमान उपचित इत्यर्थः ॥३५॥ नभसः शब्देति श्लोकार्थे शब्दस्य तन्मात्रं शब्दतन्मात्र गुणस्तस्मान्नभस इत्याकाशस्यैव शब्दसूक्ष्मावस्थात्वमुच्यत इति भ्रांतिनिरासाय तत्पदमनूद्य व्याचष्टे ॥ नभस इति । शब्दमात्रं

गुणो यस्याकाशस्य तत्तथा तस्मादिति विग्रहः । ननु शब्दादेराकाशादितन्मात्रत्वं नाम किमित्यतः प्रमाणेनैव दर्शयंस्तेनैव प्रमाणेन नभसः शब्दतन्मात्रादित्यस्य स्वकृतव्याख्यानं च दृढयति ॥ शब्दादय इति । न केवलं स्पर्शादय एव सूक्ष्मावस्थाः किंतु शब्दादयोऽपीत्यपिसंबंधः । स्पर्शादयोऽपीति क्वचित्पाठः । तत्रादिपदेन शब्दादयो ग्राह्याः । तन्मात्रशब्दार्थः ॥ सूक्ष्मावस्थेति । अनेन तन्माति निर्मात्युत्पादयतीति तन्मात्रं शब्दस्तन्मात्रमुपादानरूपा सूक्ष्मावस्था यस्याकाशस्य तत्तथेति शब्दतन्मात्रपदस्य विग्रहः सूचितः । एवं स्पर्शतन्मात्रादिपदानामपि विग्रहो ज्ञातव्यः । शब्दमात्रादभूदस्मादित्यादि श्लोकेषु श्रोत्रादींद्रियाणां भूतकार्यत्वमुच्यते । तदयुक्तं । तैजसानींद्रियाण्येवेति तैजसाहंकारकार्यत्वप्रतिपादकव्यवहितपूर्वोदाहृतभागवतवाक्यविरुद्धत्वादित्याशंकां प्रमाणेनैव परिहरति ॥ सूक्ष्मेंद्रियाणीति । पुनर्ब्रह्मशरीरत उपचीयंत इति संबंधः ॥ ३७ ॥ चालनं व्यूहनमिति श्लोके प्राप्तिर्वायोः कर्माभिलक्षणमिति प्राप्तेर्वायुस्वरूपलक्षणत्वमुच्यते । तदयुक्तं । तथात्वे वायुरेव प्राप्तिः स्यात् । न चैवमित्याशंकां प्रमाणेनैव परिहरति ॥ प्राप्नोतीति । उत्तरत्र प्रधानवायुरित्यनेन संबध्यते । तथशब्दो यस्मादित्यर्थे । स्वातंत्र्यात्स्वत इति प्रोक्त इति वचनात्स्वः स्वतंत्राद्धरेरेव सामर्थ्येनैव वायुर्यस्मात्सर्वं प्राप्नोतीत्यतो भूतपति भूताभिमानिनं वायुं प्राप्तिरिति प्राहुरित्यन्वयः । ननु प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः सर्वेंद्रियाणामात्मत्वं भूतवायोर्लक्षणमुच्यते । तदयुक्तं । तथात्वे भूतवायोः सकाशात्प्रधानवायोर्नीचता स्यादित्याशंकां प्रमाणशेषेणैव परिहरति ॥ प्रधानवायुरिति । अन्येषु भूतवाग्वादिषु तद्गुणाः प्रधानवायुगुणाः सर्वप्राप्त्यादयस्तेषु भूतवाय्वादिषु । अस्य प्रधानवायोस्तत्कृता भूतवायोः प्राप्त्याद्युक्तिकृता । तस्मिन्नेव श्लोके वायोः कर्माभिलक्षणमित्यत्र कर्मणः क्रियाया अभिलक्षणमिति कर्मपदस्य क्रियार्थत्वभ्रांतिनिरासाय प्रमाणेनैवार्थमाह ॥ स्वरूपमपीति ॥३९॥ द्रव्याकृतित्वमिति श्लोकार्धे गुणता गुणरूपत्वं व्यक्तिसंस्थात्वं घटादिस्वरूपव्यक्तिसंस्थारूपमित्यर्थभ्रांतिनिरासाय तयोः शब्दयोरर्थमाह ॥

व्यक्तीति । व्यक्तित्वेनाभिव्यक्तिरूपेण गुणशब्दप्रकाशत्वं गुणशब्दवाच्यप्रकाशरूपत्व । ननु तर्हि तेजस्त्वमित्यनेन पुनरुक्तिरि त्यतोऽभिधानेनार्थभेदमाह ॥ तेजस्त्वमिति । गुणशब्दस्य प्रकाशार्थत्वेभिधानं पठति ॥ आलोक इति ॥४१॥ क्लेदनं पिंडन मिति श्लोके भाणनाप्यायनौंदनमित्यत्रौंदनपदस्यार्थाप्रतीतेरभिधानेनैवार्थमाह ॥ उंदनमिति । तापापनोद इत्यर्थे अपां भूयस्त्वं लक्षणमुक्तं । तद्घटयितुमाह ॥ पृथिवीति । देह इति समुदायैकवचनं । पार्थिवाप्यतैजसदेहेषु विद्यमानानां पृथिव्यादि भागानां मेलनेन गणनायामपां भागाः पृथिव्यग्निभागापेक्षयाऽधिका भवंति । एतद्विस्तारो ब्रह्मसूत्रभाष्यद्वितीयाध्यायचतुर्थपादांते द्रष्टव्यः ॥ ४५ ॥ भावनं ब्रह्मण इति श्लोकार्धे भावनमुत्पत्तिरित्यर्थभ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ भावनमिति । अनेन भावयत्युत्पादयतीति भावनशब्दव्युत्पत्तिः सूचिता । तस्मिन्नेवार्धे ब्रह्मणः स्थानमित्यनेन पृथिव्याश्चतुर्मुखस्थानत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव निमित्तं दर्शयंस्तद्व्याचष्टे ॥ ब्रह्मस्थानमिति । शरीरे पृथिव्यात्मके । अनेन ब्रह्मणः परब्रह्मणः स्थानमभिव्यक्तिस्थानमिति भागवतपदं व्याख्यातं भवति । तस्मिन्नेवार्धे सद्विशेषणमित्यस्य सतो विशेषणमित्यर्थभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ सदिति । अनेन विशेषणं विशेषस्तेन सद्व्यक्तमित्यर्थ उक्तो भवति । सच्छब्दस्य व्यक्तार्थत्वे प्रमाणमाह ॥ असदिति । सर्वसत्त्वगुणोद्भेद इत्यर्धे सर्वसत्त्वगुणोद्भेद इत्यस्य सर्वप्राणिनां गुणानामुद्भेद उद्गतो भेदो भेदाभाव इत्यन्यथा-प्रतीतिनिरासाय तदनूद्य यथावद्व्याचष्टे ॥ सर्वसत्त्वेति । अनेनोद्भेदशब्दोऽभिव्यक्त्यर्थकः । सर्वेति गुणविशेषण । तथा शरी रस्य पार्थिवत्वात्तत्रोऽभिव्यक्तगुणाः पृथिव्यामेवाभिव्यक्ता भवंत्यतः सर्वसत्त्वगुणोद्भेदः पृथिव्या लक्षणं युक्तमिति चोक्तं भवति । भावनं ब्रह्मणः स्थानमिति श्लोकोक्तं पृथिवीलक्षणद्वयं प्रमाणस्ववचनाभ्यां शरीरे उपपादितं । तेनेदं शरीरं केवलपृथिव्या त्मकमिति भ्रांतिं प्रमाणेनैव परिहरति ॥ शरीरमित्यादिना । पुनः प्रत्येकमित्यनेन तैजसाप्यशरीरमप्येवं पंचभूतात्मकं ज्ञात-

व्यामिति सूचितं । तत्राप्यशरीरं पार्थिवानींद्रियाण्योदर्यं तेजः । ततः तैजसं शरीरमौदकानींद्रियाण्यौदर्यं पार्थिवं । आकाशवायू सर्वत्र समानौ । एवं पार्थिवादिदेहत्रये पांचभौतिकत्वं ज्ञातव्यं ॥ ४८ ॥ ततस्तेनानुविद्धेभ्य इति श्लोकेऽसौ विराट् यस्मादंड-मुदतिष्ठत्तदचेतनमंडं तेनानुविद्धेभ्यस्तत्त्वेभ्य उत्थितमुत्पन्नमिति तत्त्वोत्पन्नाडाद्विराज उत्पत्तिरुच्यते । तत्र विराडिति वीनां पक्षिणां राजा गरुड इत्यर्थभ्रांतिनिरासाय प्रमाणेनैव विराट्पदं व्याकुर्वन्यस्मादुदतिष्ठदसौ विराडिति भागवतपदं ब्रह्मांडपदव्याख्यानरूप मित्यभिप्रेत्य तेनैव प्रमाणेन ब्रह्मांडपदं च निर्वक्ति ॥ अचेतनादिति । प्रकाशनादित्यनेन विशेषेण राजते प्रकाशत इति विराट्पदस्य विग्रहः सूचितः ॥ ५४ ॥ पादौ च निरभिद्येतामिति श्लोकार्धे ततो हरिरिति हरेः पादाभिमानित्वमुच्यते । तदयुक्तं । अभिमानित्वं पराधीननियामकत्वं । न च मुक्तेष्वतिव्याप्तिरिति वाच्यं । तेषामपि लक्ष्यत्वात् । अभिमानित्वात्यंताभावा-नधिकरणत्वस्य लक्ष्यतावच्छेदकत्वात् । न हि तद्धरावस्ति । तत्रापराधीनत्वस्य प्रमाणासिद्धत्वादित्यतः प्रमाणेनैव तत्तात्पर्यार्थ-माह ॥ यज्ञनामेति । पूर्णामलात्मन इत्यत्र पूर्णेत्यमलात्मत्वोपपादनार्थं । मलेति पराधीनत्वं । आत्मेति नियामकत्वमुच्यते । पराधीनत्वरूपमलयुक्तश्चासावात्मा च स्वामी नियामकश्च मलात्मा मलात्मा न भवतीत्यमलात्मा तस्येत्यर्थः ॥ ६१ ॥ ननु विष्णु-गत्यैव चरणौ नोदतिष्ठत्ततो विराडित्यत्र विष्णुप्रवेशेन विराजोऽनुत्थानमुक्त्वा चित्तेन हृदयं चैत्य इत्यत्र चित्ताभिमानिप्रवेशेन विराज उत्थानमुच्यते । तदसत् । तथात्वे चैत्यापेक्षया विष्णोर्दुर्बलत्वं विष्ण्वपेक्षया चैत्यस्य प्रबलत्वं स्यादित्यतो नात्र चैत्य पदेन केवलं चित्ताभिमानी गृह्यते किंतु विष्णुरपि । नन्वेवं चेच्चित्तं चैत्यस्ततोऽभवदित्युक्तब्रह्मचित्तजत्वानुपपत्तिरिति वाच्यं । ततः स्वेच्छयाऽभिव्यक्तत्वेन तदुपपत्तेरित्याशयवान् प्रमाणेनैव हरेश्चैत्यशब्दार्थत्वं ब्रह्मजत्वं चाह ॥ चैत्योऽपीति । न केवलं चित्ता-भिमानी चैत्यः किं त्वंतर्यामी चित्ताभिमान्यंतर्यामी विष्णुरपि चैत्यश्चैत्यशब्दवाच्य इत्यर्थः । ननु पादाभिमानियज्ञातस्यहरिरूपस्य

चिच्चाभिमान्यंतस्थहरिरूपस्य चैत्याच्चेन रूपेणोत्थानमकृत्वा चैत्यरूपेणोत्थानं किमर्थमकारीत्याशंकां प्रमाणेनैव परिहरति ॥ यज्ञांतस्थ इति । तत्स्थश्चित्ताभिमानिस्थः ॥६४–७०॥ बुद्ध्या ब्रह्मापीति श्लोकार्धे ब्रह्मा चतुर्मुख इति भ्रांतिनिरासाय ब्रह्मपदं व्याचष्टे ॥ ब्रह्मेति । उक्तार्थे श्रुतिमाह ॥ यस्मिन्निति । यस्मिन् राजनि ब्रह्मा बृहस्पतिः पूर्वः पुरोहित एति प्राप्नोति तस्मै राज्ञे विशः प्रजाः स्वयमेवानमंतीत्यन्वयः । श्रुतिरपि भागवतसदृशीत्यतः स्पष्टमभिधानमाह ॥ बृहस्पतिरिति ॥ ७२ ॥ चित्तेन हृदयमिति श्लोके चैत्यश्चित्ताभिमानी ब्रह्मा यदा हृदयं प्राविशदिति चतुर्मुखस्य स्वदेहप्रवेशोक्त्या तस्यैव स्वदेहाद्बहिर्निर्गमः सिद्ध्यति। बहिर्निर्गमे च सति नोदतिष्ठत्तदा विराडित्युक्तं चतुर्मुखस्य प्रसुप्तत्वं विरुद्धमित्याशंकां प्रमाणेनैव परिहरति ॥ अंशेन सुप्त इत्यादिना । देवा रुद्रादयः । त्रीन् विष्णुब्रह्मवायून् । एकसंस्था एकस्मिन् ब्रह्मदेहे विद्यमानास्तेषां विष्ण्वादित्रयाणां । ननु विष्णोर्ब्रह्मसाम्यत्वं प्राप्तमित्यत आह ॥ विशेषेणेति । चित्तेन हृदयं चैत्य इति श्लोकार्धे चैत्यक्षेत्रज्ञपदयोः सामानाधिकरण्येनैकार्थत्वभ्रांतिनिरासाय प्रमाणशेषेणैवार्थभेदमाह ॥ चित्तेति । प्राणो वायुरित्यनेन प्राणेंद्रियमनोधिय इति भागवतवाक्यस्थ प्राणशब्दो व्याख्यातः ॥ ७३ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां सप्तविंशोऽध्यायः ॥ ३–२७ ॥ छ ॥

॥ हरिः ॐ ॥ प्रबुद्धथ स्वप्नेति श्लोकार्धे स्वप्नसुप्तिभ्यामित्यस्य प्रसिद्धस्वप्नसुप्त्यवस्थार्थत्वभ्रांतिनिरासाय प्रमाणेनैवार्थमाह ॥ अज्ञानमिति ॥ ५ ॥ निवृत्तबुद्ध्यवस्थान इति श्लोकार्धे निवृत्तं बुद्धेरवस्थानं स्थितिर्यस्मिन्निति बुद्धिराहित्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय बुद्ध्यवस्थानपदं व्याचष्टे ॥ बुद्धेरिति ॥ ११ ॥ मुक्तलिंग इति श्लोकार्धेऽसतीत्यस्याविद्यमानार्थत्वभ्रांतिनिरासाय विवक्षितमर्थमाह ॥ असतीति ॥ १२ ॥ एवं त्रिवृदहंकार इति श्लोके सूर्यप्रतिबिंबदृष्टांतेन भूतेंद्रियादीनामहंकारादिप्रतिबिंबत्वं तत्प्रदर्शकत्वं चोच्यते । तत्केवलं जडस्यैवोच्यत इति भ्रांतिस्तथा सदाभासेन सत्यदृगित्यत्र

सदाभाससत्यदृक्पदयोः प्रकृतोपयुक्तार्थश्च न ज्ञायते । अतो भ्रांत्यादिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ शेषस्येत्यादिना । अत्र ब्रह्मण इत्यनेन सदाभास इत्यस्यार्थः परब्रह्मण इत्यनेन सदादृगित्यस्यार्थ उक्तो भवति । प्रदर्शिनः प्रदर्शकाः ॥ १४ ॥ भूतसूक्ष्मेंद्रियमन इत्यादिश्लोकद्वये इहासति प्रलये भूतसूक्ष्मेंद्रियमनोबुद्ध्यादिषु निद्रया लीनेषु सत्सु यस्तत्र विनिद्रः स द्रष्टा सदांतःकरणे नष्टे सति नष्टचित्त आतुर इवानष्टोऽपि मृषा नष्टवदात्मानं मन्यमान आस्त इत्येकान्वयेन परमात्मैव प्रतिपाद्यत इति भ्रांतिं पृथगन्वयप्रदर्शनेन परिहराति ॥ यो विनिद्र इति । अनेन भूतसूक्ष्मेंद्रियमन इति पूर्वश्लोको हरिपरः । मन्यमान-स्तदात्मानमिति द्वितीयश्लोको जीवपर इत्युक्तं भवति ॥ १५ ॥ १६ ॥ साहंकारस्येति श्लोकार्धेऽहंकारसहितस्य द्रव्यस्या-काशादेर्योऽनुग्रहोऽनुकूलग्रहणं तदेव तस्यावस्थानमित्यन्यथाप्रतीतिनिरासायापेक्षिताध्याहारेण तस्य विवक्षितमर्थमाह ॥ साहंकार मिति । स्वकृतव्याख्याने प्रमाणमाह ॥ नित्यदृगिति । नित्यदृक् परमात्माऽसावित्यनेन भूतसूक्ष्मेंद्रियमन इत्यादेर्जानाति जीवः संज्ञेन इत्यनेन मन्यमान इत्यादेः स्वकृतव्याख्यानं प्रमापितं भवति । शेषेण साहंकारस्येत्यस्य स्वकृतव्याख्यान प्रमापितं ॥ १७ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामष्टाविंशोऽध्यायः ॥ ३–२८ ॥ छ ॥

॥ हरिः ॐ ॥ योगस्य लक्षणमिति श्लोकार्धे सबीजस्य बीजसहितस्य योगस्येत्युक्तार्थान्निर्बीजयोगोऽन्यो वर्तत इति सिद्ध्यति । सः कः बीजं च किमिति जिज्ञासायां प्रमाणेनैव तद्द्वयं दर्शयति ॥ स बीज इति ॥ १ ॥ वैकुंठलीलेति श्लोकार्धे आत्मन स्वस्य समाधानं सम्यगाधानं स्थापनमित्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तदर्थमाह ॥ समाधिरिति । अनेनाभिध्यानमित्यनेन पुनरुक्तिः परिहृता । तस्य प्रयत्नेन मनःसंस्थितिरूपत्वात् ॥ ६ ॥ तस्मिंल्लब्धपदमिति श्लोके चित्तं सर्वावयवस्थिति विलोक्य भगवत एकत्र एकस्मिन्नंगे संयुज्यादिति यत्सर्वावयवस्मरणशक्तेन मनसैकावयवस्मरणविधानं तदयुक्तं । न हि महाकार्यकरण-

समर्थ मत्यल्पकार्यकरणविधानं युज्यत इत्यतो वाक्यभेदेनापेक्षिताध्याहारेण तं योजयति ॥ सर्वस्मरणेति । अत्रैतच्छ्लोक व्यवहितपूर्वश्लोकोक्तं हेतुत्वेनाह ॥ यावदिति । सव्याख्याव्याख्याने स्पष्टं प्रमाणमाह ॥ सर्वमिति ॥ २० ॥ मालां मधु व्रतेति श्लोकार्थेऽस्य हरेः कंठे चैत्यस्य तत्त्वममलं मणिं ध्यायेदिति चैत्यतत्त्वस्य हरिकंठमणित्वमुच्यते। तत्र चैत्यपदस्य पूर्वोक्तार्थं स्मारयंस्तद्वाक्यं व्याचष्टे ॥ ब्रह्मेति । तन्नियमाचैत्यनियामकत्वाद्धरिश्चैत्यनामेत्यर्थः ॥ २७ ॥ यच्छ्रीनिकेतमिति श्लोकार्थे श्रीनिकेतनमित्यनेन लक्ष्म्याश्रयत्वमुक्त्वा पुनः स्वया भूत्या श्रिया युक्तमिति लक्ष्म्या युक्तत्वमुच्यतेऽतः पुनरुक्तिरिति चेन्न । अत्र श्रीभूतिशब्दयोर्भिन्नार्थत्वादित्याशयवान् प्रमाणेनैव तदर्थमाह ॥ साक्षादिति । हरे रूपमित्यनेन स्वया भूत्येत्येतत्स्वरूपभू तया श्रियेति व्याख्यातं । इंदिरा तु तदाश्रयादित्यनेन श्रीनिकेतनमित्येतत् श्रियः हरिस्वरूपश्रीभिन्नाया इंदिराया निकेतमाश्रय इति व्याख्यातं भवति ॥ २९ ॥ ध्यायेत्स्वहृदिति श्लोकार्थेऽर्पितमनाः पुरुषो विष्णो रूपं पृथक् जीवभेदेन न दिदृक्षेतपश्येदि त्यन्यथाप्रतीतिनिरासाय तदनूद्य व्याचष्टे ॥ न पृथगिति । अनेन हरिरूपं हरेः पृथङ्न पश्यत्किंतु हरिमेव पश्येदिति भागवत वाक्यं व्याख्यातं भवति ॥ ३२ ॥ औत्कंठ्यबाष्पेति श्लोकार्थे चित्तबडिशमित्येतद्दुर्गमार्थत्वाद्व्याचष्टे ॥ चित्तेति । बडिश पदस्यार्थः ॥ वियोग इति । तस्याप्यर्थः ॥ ध्यानानंतरसमाधिरिति । अनेन चित्ते बडिशं वियोगो योगाभावो ध्याना नंतरसमाध्यभावस्तं वियुंक्ते वियुक्तं करोति समाधिं करोतीति भागवतवाक्य व्याख्यातं भवति ॥ ३३ ॥ मुक्ताश्रयं यर्हीति श्लोकार्थे मनो मुक्ताश्रयं मुक्तः ससारान्मुक्त आश्रयो यस्येति भ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ मुक्तेति । मन इति विशेष्यस्योक्त त्वात्स्वचित्तमिति पुनर्विशेष्याभिधानं व्यर्थमित्यतस्तदपि विशेषणमिति भावेन तदनूद्य व्याकुर्वन्निर्वाणमृच्छति नाप्नोतीति भ्रांति निरासाय तदप्यनूद्य व्याकुर्वंश्चित्तमित्यनेनान्वयं च दर्शयति ॥ स्वचित्तमिति । अनेन स्वस्वरूपभूता चिच्चैतन्यं तत्र तं

ततामीति स्वचित्तपदस्य विग्रहः सूचितः। स्वचित्तशब्दस्यैव तात्पर्यार्थः ॥ स्वचिदभिमानेनेति । निर्वाणमृच्छतीत्यस्यार्थः ॥ शरीराभिमानं जहातीति ॥ ३४ ॥ हेतुत्वमप्यसतीति श्लोकार्धेऽसति कर्तरि दुःखयोर्हेतुत्वमपि नास्तीत्यविद्यमाने कर्तरि यो हेतुत्वनिषेध उच्यते सोऽनुपपन्नः । अप्राप्तस्य निषेधाभावात् । न ह्यसति हेतुत्वप्राप्तिरस्तीत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ असत्कर्तेति । अनेनासति दोषयुक्तेति भागवतस्थमसत्पदं व्याख्यातं भवति । अस्मिन्नेव श्लोकार्धे दुःखयोरिति द्विवचनांतपदेन दुःखद्वयोक्तिः प्रकृतेत्यंतासंगता । अवश्यव्यक्तव्यसुखानुक्तिरप्ययुक्तेत्याशंकां प्रमाणेनैव परिहरति । दुर्दुःखमिति । अनेन दुश्च दुःख च दु'खे तयोरिति भागवतस्थदुःखपदविग्रहः सूचितः ॥ ३५ ॥ सर्वभूतेषु चेति श्लोके भूतेष्वात्मानं परमात्मानमनन्य-भावेन नान्योऽनन्यस्तस्य भावो धर्मोऽनन्यत्वमिति यावत् । तेन भूतैक्येन भूतेषु तदात्मतां परमात्म्यैक्यं चेक्षतेति हरेर्भूताना च परमात्मैक्यमुच्यते । तच्च प्रमाणबाधितमित्यतोऽनन्यभावेति तदात्मेति च पदमनूद्य यथावद्व्याचष्टे ॥ अनन्येति । अनेन भूतां तर्यामिभूताधारहरिरूपाणामधिष्ठानभेदेन भेदप्रसक्तावनेनाभेद उच्यत इत्युक्त भवति । भूतविषये भूतविषयकादानादिकर्तृत्व-मित्यर्थः ॥ ४१ ॥ तस्मादिमां स्वां प्रकृतिमिति श्लोकस्य आत्मा जीव इमां स्वप्रकृतिं पराभाव्य त्यक्त्वा स्वरूपेणावतिष्ठते मुक्तो भवतीति जीवप्रतिपादकत्वभ्रांतिनिरासाय तात्पर्यार्थमाह ॥ प्रकृतिमिति । प्रकृति श्रियं । सदेत्यध्याहारः । पर इत्य-नेनात्मशब्दो हरिवाचीति सूचितं । स्वोक्तार्थे प्रमाणमाह ॥ सर्वभूतस्थमिति ॥ ४३ ॥ इति श्रीभागवततात्पर्यटिप्पण्या-मेकोनत्रिंशोऽध्यायः ॥ ३—२९ ॥ छ ॥

॥ हरिः ॐ ॥ लक्षणं महदादीनामिति सार्धश्लोके येन लक्षणेनामीषां तत्पारमार्थिकं स्वरूपं लक्ष्यते । तत्स्वरूपं यन्मूलं यल्लक्षणमूलं प्रचक्षते तन्महदादीनां लक्षणं यथा यथावत्सांख्येषु कथितमित्यन्वयार्थभ्रांतिनिरासायापेक्षिताध्याहारेण तस्य

विवक्षितान्वयार्थोवाह ॥ यथा सांख्योऽस्विति । तथा कथितं । त्वयेति शेषः । अनेन तल्लक्षणं यन्मूलं यत्सांख्यशास्त्रमूलकं प्रचक्षते तेषु सांख्येषु तल्लक्षणं यथोक्तं तथा त्वया मां प्रति कथितमिति भागवतवाक्ययोजना सूचिता ॥ १-२ ॥ अर्चादावर्चयेदिति श्लोकार्धे यः पृथग्भावो जीवादीश्वरस्य भेदज्ञः स राजस इति जीवेश्वरभेदज्ञानिनो राजसमुच्यते इति भ्रांतिनिरासायापेक्षिताध्याहृतेनास्यान्वयमाह ॥ तद्रूपाणामिति । तद्रूपाणां रामकृष्णादीनां । अत्र पृथग्भावपदेनैक्यज्ञानाभाववान् लक्षणीयः । ननु कुत एतत् । पृथग्भावपदस्य भेदभावेनैवार्थः किं न स्यादिति चेन्न । हरिरूपपृथग्भावनावतस्तामसत्वेन राजसत्वायोगात् ॥ ९ ॥ यजेद्यष्टव्यमिति श्लोकार्धे यः पृथग्भावः स सात्विक इति राजसत्वेनोक्तस्य सात्विकत्वं विरुद्ध कथमुच्यत इत्याशंकां पदच्छेदमदर्शनेन परिहरति ॥ अपृथगिति । तद्रूपाणामित्यनुवर्तते । अनेन यथा सात्त्विकत्वे हरिरूपापृथग्भावत्वमेव निमित्तं तथा राजसत्वे हरिरूपपृथग्भावत्वमेव निमित्तं न त्वर्चादौ हरिपूजनमित्युक्तं भवति । नन्वर्चादौ हरिपूजनमेव राजसत्वे निमित्तं किं न स्यादिति चेन्न । अज्ञसात्विकस्यार्चादौ हरिपूजनकरणे प्रत्यवायस्योक्तत्वात् । ज्ञानिसात्विकस्यार्चादौ हरिपूजनकरणे फलस्योक्तत्वादित्याशयवांस्तत्रप्रमाण पठति ॥ अज्ञ इति ॥ १० ॥ आत्मनश्च परस्यापीति श्लोकार्धे य आत्मनः स्वजीवस्य परस्परजीवस्यांतरोदरमंतरे भेदे उदरं हृदयं मनः करोति तस्य भयं मृत्युर्विधत्त इति जीवाना भेदज्ञानिनोऽनिष्टमुच्यत इति भ्रांतिनिरासायांतरोदरपदमनूद्य व्याचष्टे ॥ अंतरेति । अनेनांतरं भिन्नं च तदुदरं ब्रह्म चेति विग्रहः सूचितः । एवं पदार्थमुक्त्वेदानीमात्मनश्चेति श्लोकार्धस्य तात्पर्यमाह ॥ आत्मस्थामिति । उदरपदेन ब्रह्मोक्तं । तत्र प्रमाणमाह ॥ उदरमिति ॥ २६ ॥ जीवा श्रेष्ठा हीति श्लोकार्धे जीवप्राणभृच्छब्दयोरेकार्थत्वभ्रांतिनिरासाय प्राणभृत्पदमनूद्य व्याचष्टे ॥ प्राणभृत इति । अनेनाजीवानां वृद्ध्यादिरहितशुष्ककाष्ठादीनां सकाशाज्जीवा वृद्ध्यादियुक्ता अशुष्कवृक्षादिजीवाः श्रेष्ठाः । तेभ्यो वृक्षादिजीवेभ्यः प्राणभृतः स्वतश्चलनयुक्ताः पश्वादिजीवाः श्रेष्ठा

इति भागवतवाक्यं व्याख्यातं भवति । जीवाः श्रेष्ठा ह्यजीवानामित्यारभ्य समदर्शनादित्यंतभागवतश्लोकैरुच्यमानो जीवानां पशुवृक्षादिभेदस्तत्तारतम्यं च संसारावस्थायामेवास्ति न मुक्तौ । तत्र सर्वजीवानामेकप्रकारत्वस्य तदा विद्वान्पुण्यपापे विधूय निरंजनः परमसाम्यमुपैतीत्यादिश्रुत्यादिसिद्धत्वादित्याशंकां जीवाना पशुवृक्षादिस्वरूपत्वतारतम्यप्रतिपादकप्रमाणेनैव परिहरति ॥ पशुवृक्षादीत्यादिना । जीव एव न तु शरीरविशिष्टा इत्येवशब्दस्यार्थः । स्वतः स्वरूपतो यः पशुवृक्षादिभेदस्तेनापि जीवाः स्थिताः न तु बाह्यपशुवृक्षादिशरीरभेदेनैवेत्यर्थः । ननु तर्हीदानीं दृश्यमानानां पशुवृक्षादिजीवानां स्वरूपं पशुवृक्षाद्यात्मकमेव किं नेत्याह ॥ संसृताविति । अत्र तत्र स्थावरमुक्तेभ्य इति तात्पर्यश्लोकार्धेन ततः प्राणभृत इत्यारभ्य तेषां बहुपदश्रेष्ठाश्चतुष्पाद इत्यंतभागवतश्लोका उक्ततात्पर्यार्था भवंति । अजीवानां मुक्त्यभावाच्चेऽत्रोक्ताः । तेभ्यो मानुषमुक्ताश्चेत्यनेन ततो द्विपात्ततो वर्णाश्चत्वार इति भागवतवाक्यं व्याख्यातं भवति । विप्रमुक्ता विप्राश्च ते मुक्ताश्च ततोऽन्यवर्णेभ्योऽधिका इत्यनेन तेषां ब्राह्मण उत्तम इति भागवतवाक्यं व्याख्यातं । तत्र ब्राह्मणमुक्तेषु मध्ये उपदेशमात्रेण स्वयमुपक्रमादिना वेदार्थं ज्ञातुमशक्ताः संतो यावान्वेदार्थ उपदिष्टस्तावन्मात्रज्ञानेन मुक्तास्तेभ्यो वेदवेदिनः स्वयमप्युपक्रमादिना वेदार्थज्ञानिनोऽधिकाः। अनेन ब्राह्मणेष्वपि वेदज्ञ इति भागवतवाक्यं अर्थज्ञा इत्यनूद्य ऋषय इति व्याख्यातं । अतो देवाः संशयच्छिद इत्यारभ्य सम्यगेषु हि ते गुणा इत्यंततात्पर्यप्रमाणेनार्थज्ञात्संशयच्छेत्तेत्यारभ्य समदर्शनादित्यंतभागवतवाक्यं व्याख्यातं भवति । तस्माद्गरुडात् । ततश्चतुर्मुखादन्योऽधिको नास्तीत्यर्थः ॥ २८ ॥ मनसैतानीति श्लोके ईश्वरो जीवकलया जीवाख्यस्वरूपांशेन भूतानि प्रविष्ट इति जीवस्य विष्णुस्वरूपत्वभ्रांतिं तथा भूतानि प्रणमेदित्यन्वयभ्रांतिं च निवारयन्नपेक्षिताध्याहारेण श्लोकं योजयति ॥ जीवेति । तदा लयत्वेन विष्णुप्रतिमात्वेन । भूतानि बहुमानयन् भूतेषु बहुमानं कुर्वन्नित्यन्वयः ॥ ३४ ॥ भक्तियोगश्चेति श्लोके एकतरेणैवेति सावधारणेन पदेन भक्ति-

ज्ञानयोगयोर्मध्ये एकस्यैव हरिप्राप्तिरूपमोक्षसाधनत्वमुच्यते । तत्तु भक्तिरेवैनं नयति विद्वानित्यादिनोभयोर्मोक्षसाधनत्वप्रतिपादक प्रमाणबाधितमित्यतस्तदाभिप्रायमाह ॥ एकतरेति । एकतरेणैव । इत्युक्तमिति शेषः । भक्तियोगज्ञानयोगयोरेकतरस्य भक्तियोगस्य भावे सत्यन्यतरस्य द्वितीयस्य ज्ञानयोगस्य सत्त्वस्यापि नियतत्वाद्भक्तेर्माहात्म्यज्ञानरूपत्वेन ज्ञानयोगस्य भक्त्यंतर्गतत्वा त्तथा ज्ञानानंदादिगुणवत्त्वेन भगवज्ज्ञानस्य तु भक्तिं विना भावेनान्यतरस्य भक्तियोगस्य नियतत्वात्तदभिप्रायेणैवेतरेणैवेत्युक्तं न तु द्वितीयस्य मोक्षसाधनत्वाभावाभिप्रायेणेत्यर्थः ॥ ३५ ॥ परं प्रधानमिति श्लोकार्धे यत्तद्भगवतो रूपं कर्मेत्यभिधीयते विचेष्टित मित्यभिधीयत इत्यन्यथाप्रतीतिनिरासाय यथावद्व्याचष्टे ॥ सर्वेति । अनेन कर्माणि विशेषेण चेष्टितानि निमित्तानि यस्य तत्कर्म विचेष्टितमिति विग्रहः सूचितः ॥ ३६ ॥ भूतानां महदादीनामिति श्लोकार्धे भिन्नदृशां महदादीनां यतो हरेर्भय भवतीति जीवेश्वरभेदज्ञानस्य भयहेतुत्वमुच्यत इति भ्रांतिनिरासाय तत्पदमनूद्यापेक्षिताध्याहारेण व्याचष्टे ॥ भिन्नेति । भिन्न पदस्याल्पार्थत्वं कुत इत्यतस्तत्राभिधानं पठति ॥ भिन्नमिति ॥ ३७ ॥ न चास्य कश्चिद्दयित इति श्लोकार्धेऽस्य हरेः कस्यचिद्दयितः प्रियो द्वेष्यश्च नास्तीति हरेः प्रियद्वेष्ययोरभाव उच्यते । सोऽनुपपन्नः । देवदैत्ययोरेव प्रियद्वेष्ययोः सत्त्वादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ यथायोग्येति । यथायोग्यातिरेकेण यथायोग्यताया अतिरेकेण । अनेन यस्य योग्यता यथा वर्तते तथैव स हरेः प्रियद्वेष्यश्च भवति । न तु हरिनिष्ठगुणदोषाभ्यामित्युक्तं भवति ॥ ३९ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां त्रिंशोऽध्यायः ॥ ३—३० ॥ छ ॥

॥ हरिः ॐ ॥ एवं स्वभरणाकल्पमिति श्लोके कीनाश इव गोखरमित्यत्र कीनाशपदस्य लुब्धार्थत्वभ्रांतिनिरासाय प्रकृतोपयुक्तार्थमाह ॥ कीनाश इति । कीनाशपदस्य स्वोक्तार्थे प्रमाणं वदंस्तेनैव प्रमाणेन वायुनोत्क्रमतोत्तारक इति श्लोकार्धे उत्तारपदस्य दुर्गमार्थत्वाद्विवक्षितमर्थमाह ॥ उत्तारमिति ॥ १३–१६ ॥ योजनानां सहस्राणीति श्लोके त्रिभिर्मुहूर्तैर्द्वाभ्यां

वेति मुहूर्तत्रयेणैव मुहूर्तद्वयेनैव वा नवाधिकनवत्यधिकसहस्रयोजनाध्वगतिरुच्यत इति भ्रांतिनिरासाय पूर्वोदाहृतप्रमाणशेषेणैव तत्तात्पर्यार्थमाह ॥ **त्रिभिरिति** । अनेन भागवतोक्तत्रिमुहूर्तादिपदमन्योपलक्षकमित्युक्त भवति । अत्र वाशब्दो व्यवस्थितविकल्पे । तेन पापतारतम्येनायं कालभेद इति सूचितं ॥ २४ ॥ **अत्रैव नरक** इति श्लोकार्धे अत्रैवेत्येवकारस्यान्ययोगव्यवच्छेदार्थकत्वा द्भूमावेव नरकः स्वर्गोऽस्ति नान्यत्रेति प्रतीयते । तच्च प्रमाणबाधितमित्यत एवशब्दस्यार्थमाह ॥ **अत्रैवेतीति** । एवशब्दस्य सामीप्यार्थत्वेऽभिधानं पठति ॥ **समीपेति** । अनेनात्रैवास्मिन् समीपप्रदेश इति भागवतवाक्य व्याख्यातं भवति ॥ २९ ॥
इति श्रीभागवततात्पर्यटिप्पण्यामेकत्रिंशोऽध्यायः ॥ ३–३१ ॥ छ ॥

॥ हरिः ॐ ॥ **ननु कलिलं त्वेकरात्रेणेत्यारभ्य सप्तमे** जन्मकर्मणीत्यंत ग्रंथेनैकधा गर्भसंस्थानमुच्यते । तत्र किं कारण । न च जीवकर्मेति वाच्यं । तस्य कर्मणा दैवतंत्रेणेत्यंतेन देहप्राप्तिं प्रति कारणस्योक्तत्वादित्याशंकां प्रमाणेनैव परिहरति॥ **नानाविधेति** । अनेन देहोत्पादक कर्म भिन्नं नानाविधगर्भस्थानोत्पादकं कर्म च भिन्नं । तेन नानाविधगर्भसंस्थानं युज्यत इत्युक्तं भवति ॥ २ ॥ **नाथमानमृषिरिति** । श्लोकार्धे सप्तवध्रिरिति गर्भस्थविशेषणं दुर्गमार्थत्वादाभिधानेनैव व्याचष्टे ॥ **वध्रय इति** । उतापिचेति निपातसमुदायः समुच्चये । अनेन सप्तवध्रय इंद्रियाणि यस्य स तथेति भागवतपदं व्याख्यातं भवति ॥ २ ॥ **ज्ञानं यदेतदिति** श्लोकार्धे य एतज्ज्ञानमदधात्स देवः कतम इति कतमशब्दस्य प्रश्नार्थत्वं प्रतीयते । तदयुक्तं । अग्रे तस्योत्तरादित्यतस्तदनूद्य व्याचष्टे ॥ **कतम इति** ॥ १७ ॥ **पश्यत्ययं धिषणयेति** श्लोकार्धेऽशरीरवदयं शरीरभेदं पश्यतीत्यशरीरो दृष्टांतत्वेनोच्यते । तत्राशरीरपदस्यानेकार्थत्वात्प्रकृते कोऽर्थ इति जिज्ञासायमनुवादपूर्वकं तस्य विवाक्षितमर्थमाह ॥ **अशरीरवदिति** । तास्मिन्नेव श्लोकार्धे अस्येतिपदस्य जीवस्य प्रकृतत्वे जीवार्थत्वभ्रांतिं निवारयति ॥ **परमात्मन इति** ।

जीवाभिमन्यमानदेहोऽपि परमात्मन एवेत्यर्थः । तत्र निमित्तं ॥ तद्वशत्वादिति । ननु तस्योपपन्नमवितुर्जगादिच्छयात्त इत्यादि भागवते यद्विष्णुसर्वोत्तमत्वादिविषयं गर्भस्थजीवकर्तृकं स्तोत्रमुक्तं तत्किं गर्भस्थजीवकर्तृकमुत जीवविशेषकर्तृकं । आद्ये गर्भस्थजीवमध्यपतितमध्यमगर्भस्थजीवानामपि विष्णुसर्वोत्तमत्वादिज्ञानेन मोक्षप्रसंगात् । न द्वितीयः । तत्र प्रमाणाभावादित्यतोऽस्य स्तोत्रस्य जीवविशेषे प्रमाणमाह ॥ तत्त्वज्ञानमिति । तुर्विशेषे । अन्येषां तत्त्वयोग्यानां मनुष्योत्तमादीनां । वाशब्देन गर्भस्थानां देवादीनां तत्त्वज्ञाने तारतम्यं सूचयति ॥ २० ॥ तेष्वशांतेषु मूढेष्विति श्लोकार्थे खंडितात्मावसायिष्वित्यत्र खंडितः छिन्न आत्मावसायो येष्वित्यर्थभ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ खंडितेति । मात्रपदेनेश्वरज्ञानं व्यावर्तयति ॥ ३६ ॥ योऽप्यातिशयनैरिति श्लोकार्थे मायाऽविद्यारूपा योषिदिति स्त्रियोऽविद्यात्मकत्वमुच्यते । तच्च प्रमाणबाधितमित्यतः प्रमाणेनैव तदर्थमाह ॥ मय इति । तद्वशस्तस्य मयस्य वशो अधीनः पदार्थो मायेत्युच्यत इत्यर्थः ॥ ४२ ॥ ननु तमात्मनो विजानीयादित्यादिना यत्पत्न्यादेर्मृत्युत्वेन हेयत्वमुक्तं तदयुक्तं । तथात्वे सरस्वत्यादिकमपि मृत्युत्वे ब्रह्मादिना हेयं स्यात् । न चैव । मोक्षेऽपि तत्साहित्यस्य प्रमाणसिद्धत्वादित्याशंकां प्रमाणेनैव परिहरति ॥ सत्पुंस्त्विति । तथा सतीष्विति शेषः । दुष्टाश्च ते जतवः स्त्रीपुंस्वरूपास्तेषु संगो दोषकृदित्यर्थः ॥ ४४ ॥ देहेन जीवभूतेनेति श्लोके जीवभूतेन जीवात्मकेन देहेनेत्यन्यथाप्रतीतिनिरासाय तदनूद्य यथावद्व्याचष्टे ॥ जीवेति । जीवकर्मभूतेन जीवस्य कर्मणा भूतेन जातेनेत्यर्थः । अनेन जीवभूतेनेत्यत्रोत्तरपदलोपी समासः सूचितः ॥ ४५ ॥ यथाऽक्ष्णोर्द्रव्येति श्लोके यदक्ष्णोर्द्रव्यावयवदर्शनेऽयोग्यता तदैवानयोर्योग्यतेति विरुद्धमुच्यते । तथा द्रष्टुर्जीवस्य चक्षुषा द्रष्टृत्वमिति च प्रमाणविरुद्धमुच्यते । अतस्तद्वाक्यं यथावद्योजयति ॥ चक्षुः सकाशादिति । अनेनैव भागवतवाक्ययोजना सूचिता भवति । यदा यदाहेत्यादिभागवतश्लोकतात्पर्यकथनावसरे यदातदाशब्दयोर्हेत्वर्थत्वे प्रमाणस्योक्त

त्वाद्यदा यस्मात्कारणाद्द्रष्टुर्जीवस्य यच्चक्षुःसकाशाद्द्रष्टृत्वं तदेवानयोरक्ष्णोर्द्रव्यावयवदर्शने योग्यता यथा तथा यदा यस्माद्द्रव्योपलब्धिस्थानस्य जीवस्य स्वरूपतः पंचत्वमुत्पत्तिश्च नास्ति तत्तस्मादहंमानत्यागेन या द्रव्येक्षाऽयोग्यता द्रव्याद्यदर्शनं तदेव पंचत्व महंमानद्रव्यादिदर्शन एवोत्पत्तिश्च ॥ ४८ ॥ आत्मनः केवलमिति श्लोकार्धे ज्ञानदेहाद्यसंगिनः केवलमात्मनो मनस एवार्थोऽपि विषयस्तथा सुखदुःखादय आत्मनो जीवस्य भावा धर्माश्च केवलं मनस एव विषया न त्वात्मनः साक्षिरूपस्य जीवस्य । नापि देहस्येति तार्किकमते प्रतिपाद्यत इत्यन्यथाप्रतीतिनिरासाय त यथावद्व्याचष्टे ॥ केवलमिति । तन्निमित्तसुखदुःखादयो देहादिसंगनिमित्तसुखदुःखादयः किमुतेत्यादिना न चात्मन इति भागवतस्थचशब्दोऽवधारणे । आत्मन इत्यनेन संबध्यते । आत्मशब्दश्चेतनार्थक इति सूचितं ॥ ५० ॥ इति श्रीभागवततात्पर्यटिप्पण्यां द्वात्रिंशोऽध्यायः ॥ ३–३२ ॥ छ ॥

॥ हरिः ॐ ॥ स चापि भगवद्धर्मादित्यादि श्लोकद्वये यः काममूढोऽत एव भगवद्धर्मात्पराङ्मुखः क्रतुभिर्देवान्पितॄंश्च यजते स सोमपाः पुमांश्चंद्रमसं लोकं गत्वा पुनरेष्यतीति विष्णवभक्तस्यापि ज्योतिष्टोमादियज्ञैः स्वर्गप्राप्तिरुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ईषद्भक्त इति । सुकर्माप्यभक्त इत्यन्वयः । ईषद्भक्त इत्येतद्धरिभक्तत्विंग्युक्तत्वस्योपलक्षकं । अनेन भगवद्धर्मात्संपूर्णभगवद्भक्तिलक्षणधर्मात्पराङ्मुख इति भागवतवाक्य व्याख्यातं भवति ॥ २३ ॥ भेददृष्ट्येति श्लोके यो वेदगर्भः स भेददृष्ट्याऽभिमानेन निःसंगेन निष्कामेन कर्मणापि ब्रह्म गुणपूर्णं पुरुषर्षभ संगत्य प्राप्य यथापूर्वं तथा प्रजायत इति चतुर्मुखस्य भगवत्प्राप्तिसाधनत्वेन भेदज्ञानादिकमुच्यते । तत्र भेदज्ञानस्य निष्कामकर्मणश्च भगवत्प्राप्तिसाधनत्वं युक्तं । प्रमाणसिद्धत्वात् । अस्वातंत्र्ये स्वातंत्र्यभ्रमरूपस्याभिमानस्य तु न युक्तमप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्चेत्यतस्तदनूद्य तत्तात्पर्यार्थमाह ॥ अभिमानेनेति । पूर्णज्ञानेन पूर्णत्वेन हरिविषयज्ञानेनेत्यर्थः । अनेनाभिमतः समंताद्व्याप्तत्वेन पूर्णत्वेन मान ज्ञानमभिमानं तेनेति भागवत-

वाक्यं व्याख्यातं भवति ॥ १२ ॥ ससंगत्यपुनरिति श्लोके संगत्येत्यस्य सबन्धेति संबंधार्थत्वभ्रांतिनिरासायापेक्षिताध्याहारेण विवक्षितमर्थमाह ॥ संगत्येति ॥ जातेऽगुणेति श्लोकार्धेऽगुणव्यतिकरे सत्त्वादिगुणवैषम्य सृष्टिकाले जाते सति पूर्वं यथा जातस्तथा प्रजायते उत्पद्यत इति हरिप्राप्तस्य मुक्तस्योत्पत्तिरुच्यत इति भ्रांतिनिरासाय यथापूर्वं प्रजायत इत्येतदनूद्य व्याचष्टे ॥ यथेति । प्रशब्दार्थः ॥ उच्चनीचादिभावेनेति । एव यथापूर्वं प्रजायत इत्येतद्व्याख्यायेदानीं जातेऽगुणव्यतिकर इति श्लोकार्धस्य तात्पर्यमाह ॥ अगुणेति । बहिर्निर्गच्छतीति संबंधः । अनेनागुणव्यतिकरे सत्त्वादिगुणवैषम्ये सृष्टिकाले जाते प्राप्ते सति सः ब्रह्मादिमुक्तराशिरगुणव्यतिकरे सत्त्वादिगुणवैषम्यकार्यरहिते श्वेतद्वीपे पूर्वं यथा तथा प्रजायते प्रकर्षेणोच्चनीचादि-भावेन बहिर्निर्गच्छतीति भागवतवाक्यं व्याख्यातं । स्वोक्तार्थे प्रमाणमाह ॥ गुणेति । गुणव्यतिकराभावे गुणव्यतिकरस्याभावो यस्मिन् श्वेतद्वीपादिमुक्तस्थाने पूर्ववत्संसारावस्थायामिव विष्णोर्मुक्तानां चोच्चनीचाद्युच्चत्वनीचत्वादि । अस्तीति शेषः । फलितार्थमाह ॥ न कदाचनेति । उच्चनीचादीत्यनुवर्तते ॥ १३ ॥ निषेव्य पुनरीरिति श्लोकार्धे गुणव्यतिकरे सति विद्यमाने सति पुनरायांतीति पदच्छेदपदार्थभ्रांतिनिरासाय विवक्षितपदार्थावाह ॥ गुण इति । प्रलय इति तात्पर्यार्थः । प्राप्त इत्याध्याहारः । आद्य स्थिरचराणां य इत्यारभ्य गुणव्यतिकरे सतीत्यतभागवतश्लोकेषु कानिचित्पदानि स्वयं व्याख्याय तत्र प्रमाणं दर्शयंस्तेनैव प्रमाणेनाव्याख्यातानां तात्पर्यार्थमाह ॥ ब्रह्मा देवैरित्यादिना । हरेः सकाशाद्ब्रह्मणश्चतुर्मुखस्य सदा सर्वगुणैर्नीचोच्चता । ब्रह्मणः सकाशादन्येषां रुद्रादीनां नीचोच्चता । अन्येषां रुद्रादीना च परस्परं यथा पद रुद्रादिपदमनतिक्रम्य नीचोच्चतेत्यर्थः ॥ १४ ॥ ये त्विहासक्तमनस इत्यारभ्य सद्यो विभ्रंसितोदया इत्यंतभागवतश्लोकेषु विमुखा हरिमेधसः कथायां कथनीयोरुविक्रमस्य मधुद्विष इत्यादिना सत्त्वात्मना हरिविमुखानां पितृश्राद्धादिकर्मणा पितृलोकप्राप्तिस्ततः पुनरिह स्वसंताने

जनिरुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अत्यल्पभक्ता इत्यादिना। अन्यसामान्यवेत्तारोऽन्येषा ब्रह्मादीनां हरिणा परस्परं च सामान्यं समत्वं तस्य वेत्तारः। तदन्योत्तमवेदिनस्तस्माद्धरेरन्यस्योत्तमत्ववेदिनः। ध्रुवं निरयं नित्यनरक। अनेन विमुखा हरिमेधस इति भागवतोक्त हरिकथाविमुखत्वमन्योपलक्षकमिति सूचित। ये त्विहासक्तमनस इत्यारभ्य सद्यो विभ्रंशितोदया इत्यंतभागवतश्लोकैरेकस्यैव पुरुषस्य कर्मस्वासक्तमनस्त्वं श्रद्धान्वितत्वं पितृश्राद्धादिकर्तृत्वादिकं हरिकथाविमुखत्वादिकं चोच्यत इति भ्रांतिं प्रमाणेनैव परिहरति ॥ मुक्तियोग्या इति। देवाद्या इत्याद्यपदेन मनुष्योत्तमाद्या ग्राह्याः। मानुषा मध्यममानुषाः। मनुष्यभेदा मध्यममनुष्यावातरभेदाः। विद्वेषिणो ये तु तद्भक्तिवर्जिता इत्यादितात्पर्यप्रमाणोक्ता हरिकथाविमुखादयो ग्राह्याः ॥ १६–२१ ॥ ज्ञानमेकमिति श्लोके निर्गुणं ज्ञानं ज्ञानात्मकमेव ब्रह्म भ्रात्याऽविद्यया। अर्थरूपेणाकाशादिपदार्थस्वरूपेणावभाति। ब्रह्मातिरिक्तं सत्यमाकाशादिकं नास्तीति जगतो मिथ्यात्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ मत्स्योनि। भौतिकं चेति चशब्दसंबंधः। तेन परस्परभेदः समुच्चीयते। तुर्विशेषे। ये तन्मत्स्यादिहरिरूप भौतिकं भूतविकारदेह परस्परभिन्न च मन्यते तेऽधरंतमो विशेषेण गच्छंतीत्यन्वयः ॥ २८ ॥ यथा महानहंकार इति श्लोकस्य स्वयं दीप्यमानमहंरूपो महान् त्रिवृत्पचविध एकादशविधश्चेति जडमहत्तत्त्वमात्रप्रतिपादकत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ एकादशेति। आत्मा स्वामी। अभिमानीति यावत्। न केवलमेकादशेंद्रियपंचभूतात्मा किंतु सर्वाभिमानी चेति चान्वयः। भागवतस्थस्वराडितिपदमनूद्य इंद्र इति व्याख्यातं। तत्रापि यज्ञादीद्रव्यावृत्त्यर्थ पुरंदर इत्युक्तं। सर्वाभिमानीत्युक्तमेव विवृणोति॥ इदमंडमिति। एवं चेत्तर्हि पुरंदरस्य चतुर्मुखसाम्यं स्यादित्यत आह ॥ तत्पातिरिति। त्रिगुणो वैकारिकत्वादित्रिभिर्गुणतः। दार्ष्टांतिकानुक्ते यथा महानहंरूप इति दृष्टांतस्यासंगतत्वभ्रांतिः। तथा एतत्पुरंदरस्यैकादशविधत्वादिकं निःसंगः समाहितात्मा

पुरुषो नित्यशो योगाभ्यासेन भक्त्या परिपश्यतीति । एतद्धै श्रद्धया भक्त्येत्युत्तरश्लोकेन यथा महानहंरूप इति श्लोकस्यान्वय-भ्रांतिश्च भवत्यतस्तन्निरासायापेक्षिताध्याहारेण स्वयमेव श्लोक याजयति ॥ यथैतानिति । यथैतान्महत्तत्त्वाद्यभिमानिनो ब्रह्मादीन् प्राकृतसत्त्वादिगुणमयदेहान् पश्यंति तद्वद्ब्रह्मा मत्स्यादिरूपं ज्ञानात्मकं ज्ञानानंदाद्यात्मकदेहमपि गुणमयं प्राकृतसत्त्वादिगुणविकारदेहं पश्यंतीत्यर्थः ॥ २९ ॥ ज्ञानयोगश्चेति श्लोके ज्ञानयोगभक्तिलक्षणो योगश्च यतः कारणाद्भगवच्छब्दलक्षणो भगवानिति शब्दो नाम यस्य हरेः स भगवच्छब्दः स एवलक्षणमन्यज्ञानादेर्व्यावर्तको यस्य ज्ञानादियोगस्य स तथा । हरिविषय इति यावत् । तस्मात्कारणादपि समुच्चितयोरेकद्वयोरेकार्थो हरिप्राप्तिरूपं प्रयोजनं भवतीति समुच्चयार्थकापिशब्दबलात्समुच्चितयोरेव ज्ञानभक्तियोगयोर्हरिप्राप्तिरूपपुरुषार्थसाधनत्वमुच्यत इति भाति । तदयुक्तं । भक्तियोगश्च योगश्चेति पूर्वभागवतश्लोके ययोरेकतरेणैवेति सावधारणमेकस्यैव हरिप्राप्तिरूप पुरुषार्थसाधनत्वस्योक्तत्वेन तद्विरुद्धत्वादित्याशंका प्रमाणेनैव परिहरति ॥ ज्ञानभक्तीति । ननु तर्हि ययोरेकतरेणैवेति पूर्वभागवतवाक्यविरोधः स्यादेवेति चेन्न । यथा न विरोधस्तथा तदभिप्रायस्य पूर्वमेवोक्तत्वादित्याशयवान्पूर्वं स्वोक्ते तदभिप्राये प्रमाणस्यानुक्तत्वात्प्रमाणेनैव भागवतोक्तमनूद्य तदभिप्रायं स्मारयति ॥ तयोरिति । अपि यद्यपि । एवं ज्ञानभक्ती विना नैव मुक्तिस्तथाऽपि एतयोर्ज्ञानभक्त्योरेकस्य भावे सत्त्वे ध्रुवमन्यानियतेरन्यसत्त्वस्य नियतत्वाद्धेतोरेवोभयं विना विष्णुगेण विष्णुविषयेण तयोरेकतरणाप्येकतरेणैव मुक्तिर्भवतीति पूर्वमुक्तं न त्वेकमात्रमुक्तिसाधनत्वाभिप्रायेणातो न विरोध इत्यर्थः । उपसंहरन्नधिकं चाह ॥ एकेनापीति । अपिरवधारणे । अत इत्यभ्याहार्यं । भवेन्मुक्तिरिति । पूर्वोक्तं युक्तमिति शेषः । अन्यसाधनं तु तदर्थे तदर्थं ज्ञानभक्त्यर्थं ॥३२ ॥इति श्रीभागवततात्पर्यटिप्पण्या त्रयस्त्रिंशोऽध्यायः ॥ ३–३३ ॥

॥ हरिः ॐ ॥ अथाप्ययांते सलिले इति श्लोकार्धे ते तव वपुर्भूतेंद्रियात्ममयं भूतेंद्रियात्मकमिति हरिशरीरस्याकाशादि-

पंचभूताद्यात्मकत्वमुच्यत इति भ्रांतिनिरासाय तत्पदमनूद्य व्याचष्टे ॥ भूतेति । अनेन द्वंद्वतत्पुरुषसमासा मयटः प्राधान्यार्थत्वं चेत्युक्तं भवति । स्वोक्तार्थे प्रमाणमाह ॥ त्वमिति ॥ २ ॥ त्वं देहतंत्र इति श्लोकार्धे देहतंत्रो देहाधीन इति भ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ देहेति । स्वोक्तार्थे प्रमाणमाह ॥ ततिरिति ॥ ५ ॥ निवृत्तजीवेति श्लोकार्धे जीवस्य भावः सत्ता यस्मिन्देहे स जीवभावो निवृत्तो जीवभावो यस्या देवहूतेः सा तथा तस्या भावस्तत्वं तस्मादिति देवहूतेः शरीराभाव उच्यते । सोऽनुपपन्नः । तद्देहोपगतः पोष्य इत्याद्युत्तरवाक्यविरोधादित्यतः प्रमाणेनैव तदभिप्रायमाह ॥ जीवोपाधीति । प्रभृतिशब्देनेंद्रियादिकं ग्राह्यं । उपाधिर्बाह्यदेहः । निष्फलत्वात् । बाह्यदेहादेरिति शेषः ॥ २६ ॥ २७ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां चतुस्त्रिंशोऽध्यायः ॥ ३—३४ ॥ छ ॥

॥ इति श्रीमदानंदभगवत्पादाचार्यविरचितश्रीमद्भागवततात्पर्यस्य टीकाया प्रबोधिन्यां छलारीनारायणाचार्यविरचितायां तृतीयः स्कंधः समाप्तः ॥ ३ ॥ छ ॥ श्रीकृष्णार्पणमस्तु ॥ छ ॥



॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ **निबोध ताततेति** श्लोके देवं नारायणं मासूयितुं नार्हसीति प्रियव्रतं प्रति चतुर्मुखेनोच्यते । तदयुक्तं । अप्राप्तनिषेधरूपत्वात् । न हि भगवति वासुदेव एवेत्याद्युक्तप्रकारेण हरावत्यंतभक्त्या विषयातिवैराग्येण च संन्यासं गृहीतुं प्रवृत्तस्य प्रियव्रतस्य दोषारोपरूपासूया सा भवति । विरुद्धत्वादित्यतः प्रमाणेनैव तदभिप्रायमाह ॥ **विहितो यस्येति** । प्रभविष्णुना जगदुत्पादकेन । तं विष्णुविहित धर्मं । सर्वविच्चतुर्मुखः । अनेन नात्र मुक्तिसाधनत्वेन यो धर्मो यस्याधिकारिणो विष्णुनोक्तस्तस्य तदुक्तोल्लंघनमेव हर्यसूया विवक्षिता न तु हरौ दोषारोपरूपा । क्षत्रियस्य प्रियव्रतस्य तु शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनं । दानमीश्वरभावश्च क्षत्रकर्म स्वभावजमित्यादि भगवद्वचनेन गृहाश्रमपूर्वकः संन्यासो धर्मो विष्णुना विहित इति ज्ञायते । अतो गृहाश्रमं विहाय सनकादिवत्केवलसंन्यासग्रहणे हर्योल्लंघन रूपासूया प्राप्तैवेति तं विष्णुविहितं धर्मं जानता सर्वज्ञेन चतुर्मुखेन तन्निषेधकरणं युक्तमेवेत्युक्तं भवति । अत्र भगवद्वचने युद्धे चाप्यपलायनमित्यनेन दानपदेन च गृहाश्रमो ज्ञायते ॥ ११ ॥ **या वा इह तद्रथेति** गद्ये प्रियव्रतरथप्रातधाराभिः पूर्वं मविद्यमाना एव सप्तसिंधवः सप्तद्वीपाश्चेदानीं नूतना उत्पन्ना इति भ्रांतिनिरासाय प्रमाणेन तत्तात्पर्यार्थमाह ॥ **पूर्वसृष्टानिति** । पूर्वसृष्टान्पूर्वसृष्टानेव । समुद्रानित्युपलक्षणं । द्वीपानित्यपि ग्राह्यं ॥ ३१ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां प्रथमोऽध्यायः ॥ ५–१ ॥ छ ॥ छ ॥

॥ हरिः ॐ ॥ **का त्वं चिकीर्षसीत्यादि** श्लोकेषु पूर्वचित्तिं प्रति हे मुनिवर्य हे ईशेत्याद्यविद्यमानमेवाग्नीध्रेण कस्माद्धेतोरुक्तमित्याशंकां प्रमाणेनैव परिहरति ॥ **परिहासेति** । प्रलापः पुत्रादिमरणनिमित्तकप्रलपनं । अत एव चित्रकेतुराजपत्न्या स्वपुत्रमरणनिमित्तकमनर्थवाक्यमुक्तं । आग्नीध्रेण तु परिहासनिमित्तकमनर्थवाक्यमुक्तं । आदि पदेन क्रोधमूलक-

वाक्यं ग्राह्यं ॥ ८ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां द्वितीयोऽध्यायः ॥ ५-२ ॥ छ ॥

॥ हरिः ॐ ॥ **किंचायं राजर्षिरिति** । गद्ये भवादृशी प्रजा तव समानमपत्यमाशासानाऽयं राजर्षिर्भगवन्तमुपधावतीति नाभरात्विज्य कुर्वद्भिरृषिभिर्हरिसमानमपत्यं प्रार्थितं तन्न । विकल्पासहत्वात् । तथा हि । ते किं हरेः सदृशाऽन्याऽस्तीति ज्ञानवंत उत नास्तीति । आद्ये न तत्समश्चाभ्यधिकश्च दृश्यत इत्यादिनिरवकाशश्रुत्यादिप्रमाणबाधितार्थज्ञानकत्वेन ऋषित्वं न स्यात् । द्वितीये तत्प्रार्थनाऽयुक्तेत्यतः प्रमाणेनैव तदभिप्रायमाह ॥ **नास्ति विष्णोरिति** । चोऽवधारणे समुच्चये च । लोकानां स्वान्यसज्जनानां । अहो वताहमृषयो भवद्भिरित्यादि वक्ष्यमाणभगवद्वचनेनैव तज्ज्ञापनाय विष्णोः समाभावज्ञापनार्थेव नाभर्त्विग्भूता ऋषयो हरेः सममपत्यं प्रार्थयन् न तु हर्यन्यसमज्ञानेन । तथाऽन्य च कश्यपादयाऽप्यतदर्थमेव हरेः सममपत्यं प्रार्थयन्निवेत्यन्वयः ॥ १४-१८ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां तृतीयोऽध्यायः ॥ ५-३ ॥ छ ॥

॥ हरिः ॐ ॥ **यस्य हींद्र इति** गद्ये भगवानिंद्रो येन ऋषभेण स्पर्धमानः सन् यस्य ऋषभस्य वर्षे न ववर्ष वृष्टिं नाकरोदिति ऋषभस्य इंद्रेण स्पर्धोच्यते । स्वायंभुवमन्वंतरे विद्यमानोऽयमिंद्रस्तु न शचीपत्यादिरन्यः किंतु यज्ञनामको विष्णुरेव । तस्य स्पर्धाऽयुक्ता । उभयोर्विष्णुरूपत्वेनाभेदादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह । दुष्टानामिति । एव शब्दः स्वरूपेणेत्यनेन संबध्यते । यज्ञो यज्ञनामा । स्वयं साक्षात् ॥ ३ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां चतुर्थोऽध्यायः ॥ ५-४ ॥ छ ॥

॥ हरिः ॐ ॥ **पराभावस्तावदिति** श्लोके आत्मत्वं यावन्न जिज्ञासेत विचारयति । अपरोक्ष्येण विषयीकरोतीति यावत् । तावत्क्रिया नित्यनैमित्तिकक्रियाणीति ज्ञानिनः कर्माभावः प्रतीयते । तथा मनः कर्मात्मकमिति मनसः कर्मैक्यं प्रतीयते । तन्न । अत्र ज्ञानिनः कर्माभावस्तु ज्ञानी किंतु कर्माणि सदा दृतानि कुर्यादिति प्रमाणबाधितं । मनसः कर्मैक्यमपि प्रत्यक्षादि

प्रमाणबाधितमित्यतः पदद्वयस्य विवक्षितमर्थमाह ॥ क्रियाफलमिति । अनेन क्रियाशब्दो बन्धकार्थक एव न तु नित्यनैमित्तिक कर्मार्थक इति सूचितं भवति । कर्मात्मकमित्यस्य कर्मवशमिति व्याख्यानं तु एवं मनः कर्मवशमित्युरश्लोकानुसारेण कृतं ॥ ५ ॥ एवं मनः कर्मवशमिति श्लोकेऽविद्ययाऽज्ञानेन कल्पिते आत्मनि जीव इति यथास्थितान्वयेनान्यथाप्रतीतिर्भवति । तन्निरासा यविद्यापदस्य विवक्षितमन्वयं दर्शयति ॥ अविद्ययेति । कर्मवशं मन इत्यनुवर्तते । प्रयुङ्क्ते जीवं । विषयेष्विति शेषः ॥ ६ ॥ यदाऽनु पश्यतीति श्लोकस्य गतस्मृतिर्विंदतीत्युत्तरार्धे मैथुन्यं मिथुनीभावसाधनमगारगृहमासाद्य तत्र गृहे तापान्विंदतीति गृहाश्रमस्य तापहेतुत्वमुच्यते । तथा पुंसः स्त्रिया मिथुनीभाव एष इति श्लोके य एषः पुंसः स्त्रिया सह मिथुनीभावस्तं मिथुनीभावं तयोः स्त्रीपुंसयोर्मिथो हृदयग्रंथिमाह । यतो हृदयग्रंथेः ग्रामगृहक्षेत्रादिभिरहंममेत्यादि मोहो भवतीति मोहकारणत्वं चोच्यते । तदयुक्तं । तथात्वे गृहाश्रमिणा ब्रह्मादीना तापमोहौ स्यातामित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ब्रह्माद्या इति ननु ब्रह्मादीनां स्त्रीसहायिनां मोक्षोऽन्येषां स्त्रीसहाये बंध इति कुत इत्यत आह ॥ एतेषामिति । एतेषां ब्रह्मादीना अन्येषां च विशेषं योग्यताविशेषविदः सर्वज्ञा वेदव्यासा विदुर्जानंतीत्यर्थः । अनेन ब्रह्मादीना गृहाश्रमिणामेव मुक्तियोग्यत्वान्न तेषां गृहा श्रमस्तापादिहेतुरन्येषां तदभावाच्चापादिहेतुर्भवतीत्युक्तं भवति ॥ ७–८ ॥ सर्वत्र जंतोरिति श्लोके ईहानिवृत्त्येहायाश्चेष्टाया निवृत्त्येति सामान्योक्त्या सर्वचेष्टाभावः प्रतीयते । स तु न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृदित्यादिप्रमाणबाधित इत्यतः प्रमाणेनैवेहानिवृत्तिशब्दार्थमाह ॥ आत्मनो विहितमिति । उत्तमा वेदव्यासादयः ॥ १० ॥ सच्छ्रद्धयेति श्लोकस्यो- त्तरार्धे ज्ञानेन विज्ञानविराजितेत्यनेन ज्ञानविज्ञाने उक्ते । तत्र सर्वत्र मद्भावविचक्षणेति विष्णुविषयज्ञानस्य पृथगुक्तत्वाज्ज्ञानविज्ञान शब्दौ जगद्विषयसामान्यविशेषज्ञानवाचकाविति भ्रांतिर्भवति । तन्निरासाय प्रमाणेनैव तयोरर्थमाह ॥ सर्वस्मादुत्तम इति ।

अनेन सर्वत्र मद्भावेत्यत्र हरिव्याप्तत्वविषयं ज्ञानमुक्तं । अत्र तु जीवसाधारणं हरिसर्वोत्तमत्वमात्रविषयं ज्ञानं ज्ञानशब्दोक्तं । तत्तज्जीवयोग्यमुक्तिसाधनं तत्तज्जीवबिंबज्ञानं विज्ञानशब्दोक्तं ज्ञातव्यमित्युक्तं भवति । एवं विष्णुसर्वोत्तमत्वज्ञानस्य ज्ञानशब्दार्थत्वं बिंबज्ञानस्य विज्ञानशब्दार्थत्वमुक्त्वेदानीं विष्णुसर्वोत्तमत्वज्ञानस्यैव विज्ञानशब्दार्थत्वं प्रमाणेनैव दर्शयति ॥ ज्ञानं विष्णोरिति । विष्णोरुत्तमत्वे विषये यज्ज्ञानं ज्ञानशब्दवाच्यं तदेव ज्ञानशब्दवाच्यविष्णुसर्वोत्तमत्वज्ञानमव प्रतिपूरुषं पुरुष पुरुष प्रति मनुष्यो त्तममारभ्याचतुर्मुखमभिव्याप्य पृथक् पृथग्विशेषेणाधिक्येन विद्यमानं सत् विज्ञानमिति कीर्तितमित्यर्थः । ननु विष्णुसर्वोत्तमत्व विषयज्ञानं प्रतिपूरुषं विशेषेणास्तीत्यत्र प्रमाणाभावात्कथं प्रतिपूरुषं विशेषेण सर्वोत्तमत्वज्ञानं विज्ञानमित्युक्तमित्यत आह ॥ तच्चेति । चस्त्वर्थः । तत्तु प्रतिपूरुषं विशेषेण विष्णुसर्वोत्तमत्वज्ञानं सर्वविज्जानाति । अनेन प्रतिपूरुषं विष्णुसर्वोत्तमत्वज्ञाने विशेषः सर्वज्ञप्रत्यक्षसिद्ध इत्युक्तं भवति । सर्वविदिति सर्वज्ञ उक्तः । स कथं ज्ञातव्य इत्यतो लक्षणेन ज्ञातव्य इत्याशयवान्सर्वज्ञ लक्षणमाह ॥ द्वात्रिंशल्लक्षणैरिति । द्वात्रिंशल्लक्षणानि तु आरक्तपादकरनखरजिह्वाग्राधरोष्ठनेत्रत्वविस्तीर्णवक्षःस्थलत्वबृहद्भुज त्वकंबुसमानकंठत्वादीनि पुरुषलक्षणप्रतिपादकग्रंथादवगंतव्यानि । एवं सर्वज्ञस्यैकलक्षणं प्रमाणेनोक्त्वा लक्षणांतरं च प्रमाणेनाह ॥ षण्णवत्यंगुल इति । वायुपुराणवाक्यस्थस्य न्यग्रोधपरिमंडल इत्यस्य न्यग्रोधस्य वटवृक्षस्य परितो मंडलो यस्मिन्निति प्रकृता संगतोऽर्थः प्रतीयते । अतः प्रकृतोपयुक्तं विवक्षितमर्थं प्रमाणेनैव दर्शयति ॥ न्यग्रोधमंडल इति । व्यामो बाह्वोः सकरयोर्वि स्तृतयोस्तिर्यगतरमित्यमराभिधानात्तिर्यग्विस्तृतसांगुलिबाहुद्वयमध्यभागः । व्यामनामा न्यग्रोधपरिमंडल इत्यत्र न्यग्रोधशब्देन बाहुरुच्यत इत्यर्थः ॥ १२ ॥ तस्माद्भवंत इति श्लोके महीयासं ज्येष्ठं भ्रातरममुं सुनाभं नाभेः पुत्रो नाभः शोभनश्चासौ नाभश्च सुनाभस्तं भरतं भजध्वमिति भरतस्य नाभिपुत्रत्वमुच्यते । तदयुक्तं । ऋषभपुत्रस्य भरतस्य नाभिपुत्रत्वायोगादित्यतो

विष्ण्वात्मकऋषभस्य मुख्यतो नाभिशब्दवाच्यत्वमस्तीत्याशयवान्हरौ प्रमाणेनैव नाभिशब्द निर्वक्ति ॥ नाभिरिति । अथ शब्दः सर्वाणि नामानि यमाविशंतीत्यादि प्रमाणसिद्धसर्वनामवत्त्वरूपहेतौ वर्तते । सर्वाश्रयो यत इत्यनेन अरा इव रथनाभाविति श्रुत्यनुसारेण नाभिरिव नाभिराश्रय इति नाभिशब्दस्य व्युत्पत्तिः सूचिता । तस्मिन्नेव श्लोके प्रजाना यद्भरणं तद्भरतस्य शुश्रूषण मिति प्रजाभरणस्य भरतशुश्रूषणत्वभ्रांतिनिरासाय तदितिपदं व्याचष्टे ॥ तत्तस्येति । तदित्यस्य विभक्तिव्यत्ययेन तस्येत्यर्थः । तस्याप्यर्थो ममेति । अनेन भरतानुवृत्त्या यद्भवत्कृतं प्रजाभरणं तन्मम शुश्रूषणमिति भागवतवाक्यं व्याख्यातं भवति ॥ २० ॥ देवासुरेभ्य इति श्लोके देवादिभ्य इंद्रादीनामुत्तमत्वमुक्त्वाऽतोऽहं द्विजदेवदेव इत्यनेन द्विजदेवदेवाः श्रेष्ठा यस्मादृषभात्स तथेति ऋषभनारायणाद्द्विजदेवानामुत्तमत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय द्विजदेवदेव इत्यस्य विवक्षितमर्थमाह ॥ द्विजेति । अननास्य पदस्य षष्ठीतत्पुरुषसमास उक्तो भवति ॥ २२ ॥ सर्वाणि मद्धिष्ण्यतयेति श्लोके पदे पदे वो विविक्तदृष्टिरित्यत्रा विक्तदृष्टिर्मम जीवैः सहाभेदज्ञानं वा युष्माकमस्त्विति जीवाभेदः प्रतीयते । स तु मद्धिष्ण्यतयेत्यनेन विरुद्धं । न ह्याधाराधेययोर भेदः संभवतीत्यतो विविक्तदृष्टिरिति पदच्छेदेन पदमनूद्य तत्र मद्धिष्ण्यतयेत्यस्य हेतुत्वं सूचयन्व्याचष्टे ॥ विविक्तदृष्टिरिति । जीवाना परमेश्वरधिष्ण्यतया आवासस्थानतया । जीवानां सकाशात्परमेश्वरस्य भेददृष्टिरिति जीवानां परमेश्वरस्येति पदद्वयस्या वृत्त्येदं वाक्यं योजनीयं । स्वोक्तार्थे प्रमाणमाह ॥ उपपादयेदिति । पदे पदे प्रतिपदमुच्चारणकाल इत्यर्थः । यः पुरुष उपपा दयेत्तस्मादुपपादकादित्यन्वयः । महापद्यपि जीवेश्वरभेद एवोपपादनीय इति भावेन तत्रैव प्रमाणांतरमाह ॥ यो हरेश्चेति । च- शब्दो हरिजीवयोः परस्परसमुच्चयार्थः । एवशब्दस्य स एवेत्यध्याहृतेन तच्छब्देनान्वयो ज्ञातव्यः ॥२६॥ इति श्रीभागवततात्पर्य टिप्पण्यां पंचमोऽध्यायः ॥ ५–५ ॥ छ ॥

॥ हरिः ॐ ॥ पंचमाध्यायांते ऋषभो यदृच्छयोपगतान्यैश्वर्याणि नाभिनंददिति शुकाचार्येणोक्ते राज्ञा आत्मारामाणां योगसमीरितज्ञानावभर्जितकर्मबीजानामैश्वर्याणि क्लेशादीनि भवितुं नार्हंति । एवं सति ऋषभिः कुतो नाभ्यनंददित्याभिप्रायेण पृच्छति । तदुत्तरत्वेन प्रवृत्ते सत्यमुक्तं किंत्विह वा एके मनस इत्यादि ग्रंथे घटकिराट इव नूतनघटे स्थितस्य जलस्यैवैकत्रावस्थानरहितस्य मनसो विश्वासं न संगच्छति । चंचलमन ऐश्वर्यसबंधेन जीर्णेनेश्वरज्ञानं ऱ्हासं करिष्यति । ज्ञानऱ्हासकामादिप्रवेशेनाशुभकरणं तेनानर्थप्राप्तिर्भविष्यतीति भयादेके महात्मन ऐश्वर्याणि नाभिनंदंतीति प्रकृत ऋषभादीनां तपोनाशादिभयेनैश्वर्यानभिनंदनमिति प्रतीयते । तदयुक्तं । भयादिसर्वदोषरहिततपःस्वरूमनारायणस्वरूपऋषभस्य तपोनाशादिभयाभावेन तन्निमित्तैश्वर्यानाभिनंदनादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ महैश्वर्यस्वरूपो हीत्यादिना । विराट् विश्वस्रष्टाऽसौ राजा च । स्वतंत्र इत्यर्थः । तत्त्ववित् धर्मस्य तत्त्ववित् । सर्वविदिति कचित्पाठः । स्वकीयानि स्वाश्रितानि । उत्तमाना पुरुषाणां धर्मतत्त्वस्य ज्ञापनार्थमित्युक्तं । तर्त्कि धर्मतत्त्वमित्यतो धर्मतत्त्वं स्पष्टयति ॥ तेषामैश्वर्येत्यादिना । यदि व्रजेत् । तर्हीति शेषः । तत ऐश्वर्यभोगस्य महाऽनर्थसाधनत्वात् । तेषामुत्तमानां धर्मस्यापनार्थमैश्वर्यभोगाभावरूपधर्मस्य स्थापनार्थं । परमैश्वर्यादिनोत्तमां । अनेनैश्वर्यभोगाभाव एव धर्मतत्त्वमित्युक्तं भवति । तेषामैश्वर्यभोगो हीति तात्पर्यवाक्ये तेषामुत्तमानामिति सामान्योक्त्या सर्वेषामुत्तमानामैश्वर्यभोगेन मनसो विषयासक्त्या जातेनाशुभेन मुक्तिगक्लप्तानंदऱ्हास उक्तः । तेनोत्तमशब्दवाच्याना ब्रह्मादिदेवाना मप्यशुभेन क्लप्तमुक्तिगानंदऱ्हासः प्राप्तः । स तु । गुणहानिश्च नैवास्ति ब्रह्मणस्त्वविकर्मतः ॥ देवानामपि न प्रायः क्लप्तस्य तु कथंचनेति ॥ अनुव्याख्यानमूलप्रमाणविरुद्ध इत्यत उक्तं विविच्य स्फुटयति ॥ देवानामित्यादिना । अत्र देवशब्देन वक्ष्यमाणप्रमाणानुसारेण प्रजा अपि ग्राह्याः । ननु देवाना नाशुभऱ्हास इत्यादिना तात्पर्यश्लोके देवानामशुभात्क्लप्तमुक्तिगसुखानभि

व्यक्तिर्नास्ति । क्रममुक्तिगसुखाभिव्यक्तिसाधनशुभात्क्रमसुखाभिव्यक्तिर्भवतीत्युक्तं । तत्तथाऽस्तु । तथाऽपि ते सर्वेऽप्युत्तमाः स्वस्व-क्रममुक्तिगसुखाभिव्यक्तिसाधनातिरिक्तसाधनानुष्ठानं कुर्वंति । न वा । द्वितीये एधमानद्विड्भयस्य राजेत्यादिश्रुतेरविद्यमानार्थ-प्रतिपादकत्वेनाप्रामाण्यं स्यात् । आद्ये तस्य साधनस्य फलं वाच्यं । भगवदाराधनस्य वैयर्थ्यानुपपत्तेः । क्रममोक्षगसुखस्य तु तत्साधनेनैव प्राप्तत्वात् । अतः क्रमसुखादधिकं सुखं तस्य फलं वक्तव्यं । तथा च तारतम्यप्रमाणविरोध इत्यतस्ते उत्तमाः स्वस्व क्रमसुखपूर्तिसाधनातिरिक्तसाधनं प्रायो न कुर्वंति । कथंचित्कृतं चेत्तप ईश्वरो नियमेन तत्राशक्त महद्विकर्मोत्थानर्थस्तं न तत्साधनं नाशयति । अतस्तेन क्रममोक्षगसुखातिरिक्तसुखाभावान्न तारतम्यप्रमाणविरोध इत्याशयवानाह ॥ अशुभाभावजेति । शुभा भावाभावात् । द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायात्सातिशयं शुभमेव । तस्यातिशयस्तु क्रमसुखसाधनातिरिक्तत्वमेव । तस्माज्जातः प्रसक्त उन्नाह उत्कर्षः । क्रमसुखादधिकं सुखमिति यावत् । महाधिकारिणामपि पदसमुचितानां तदन्येषामपि नैव भवति । कुत इत्यत आह ॥ अशुभ इति । द्वितीयार्थे तृतीयार्थे चतुर्थ्यर्थे च सप्तमी । कृते कृतेनाशुभेन महताशुभेनोन्नाह साधनस्य नियमेन नष्टत्वादिति भावः । ननु शुभात्काचित्सुखोन्नतिरिति पूर्वोक्तः शुभजः क्रमसुखोन्नाहः किमु सर्वेषामेकप्रकारेण । उतानेकप्रकारेण । इति जिज्ञासायामाह ॥ तारतम्याच्चेति । चोऽवधारणे । सः शुभगः क्रमसुखोन्नाहः । देवानामित्युक्त्या महा धिकारिणामिति पृथगुक्तं । तेन देवातिरिक्ता महाधिकारिण इति प्रतीतिर्भवति । तन्निरासाय देवा एव महाधिकारिण इति दर्शयन् अल्पाधिकारिणोऽनधिकारिणश्च का इति जिज्ञासायां तांश्च दर्शयति ॥ प्रजापाश्चेति । ऋष्यशीत्यादयोऽल्पाधिकारिणः प्रोक्ताः । परे महाधिकार्यल्पाधिकारिभ्योऽन्ये ॥ २-३३ ॥ अथैवमखिलेति गद्य ऋषभः सकलेवरं स्वस्य शरीरं जिहासुस्त्य क्तुमिच्छन् उपररामेत्यृषभस्य ऋषभनामकशरीरत्याग उच्यते । सोऽनुपपन्नः । चिदानंदात्मकभाववदाभिन्नस्य त्यागायोगात् ।

अतोऽनुपपन्नार्थकमिदं वाक्यमित्यतः प्रमाणनैव तत्तात्पर्यार्थमाह ॥ विष्णोः कलेवरेति । भूत्याग एव न त्वन्यः पचत्वरूप इत्यर्थः । अस्मिन्नेव गद्ये आत्मानं स्वस्वरूपं । अनर्थांतरभावेन । अर्थात्पृथिव्याद्यर्थादन्यार्थांतर नार्थांतरमनर्थांतरं जगदभिन्नमीक्षमाण इति ऋषभः स्वजगदभिन्नं पश्यतीत्युच्यते । तत्तु प्रमाणविरुद्धमित्यतस्तदनूद्य व्याचष्टे ॥ अनर्थांतरेति । अननार्थांतरशब्दो मूलरूपादभिन्नत्वार्थको भावशब्दो मनोऽर्थ इत्युक्तं भवति ॥६॥ तस्य ह वा एवमिति गद्ये ऋषभस्य देह इमा जगतीमभिमानाभासेन मिथ्याभूताभिमानेन चंक्रममाण इत्यभिमानस्य मिथ्यात्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तदनूद्य विवक्षितमर्थमाह ॥ अभिमानेति । अभिमानशब्दो ज्ञानवाची । आभासशब्दः प्रकाशवाचीत्युक्तं भवति ॥७॥ एवमभिमानाभासेनेत्येतत्स्वयं व्याख्यायेदानीं तस्य ह वा एवं मुक्तिलिंगस्येत्यारभ्य लोकविदूषकाः प्रायेण भविष्यंतीत्यंत ग्रंथानामप्रतीतिविप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ज्ञानानंदेत्यादिना । तुरवधारणे । ज्ञानानंदात्मक इत्यनेन संबध्यते । अत्र ज्ञानानंदात्मको देह इत्यारभ्य क्रमंस्तु कुटचाचल इत्यंत तात्पर्यवाक्येन तस्य ह वा एवं मुक्तलिंगस्येत्यारभ्यासंवीत एव विचचारेत्यंतगद्यस्य ऋषभस्य देह इव ऋषभासंबंधित्वोक्तिजातऋषभदेहे देहभ्रांतिनिरासाय तात्पर्यार्थ उक्तो भवति । दावाग्निमनुविश्याथेत्यारभ्य वासुदेवोऽहमित्यजः सदा स्थित इत्यंततात्पर्यवाक्येन अथ समीरवेगाविधुतेत्यारभ्य ददाहेत्यंतगद्यस्य ऋषभदेहनाशभ्रांतिनिरासाय तात्पर्यार्थ उक्तो भवति । ऋषभस्य स्वरूपभूतो देहः कुटचाचले क्रमन् संचरन् दावाग्नि तत्रात्पन्नदावाग्निमनुविश्य तत्रैव तस्थावित्यन्वयः । अनेन तेन सहेति भागवतवाक्यस्य तं देह स्वातर्गत तात्पर्यार्थ उक्तो भवति । किमर्थं तत्र तस्थावित्यत आह ॥ अथ तत्रस्थ इति । एवमुक्तरीत्या । तत्रस्थोऽग्निस्थः । सनातनो विष्णुः विष्ण्वात्मको ऋषभदेहः । अथ सृष्टिकालानंतरं प्रलयकालेऽग्नेरभिव्यक्तः सन् जगत्प्रादहत् । अनेनोत्तरत्र प्रलये जगत्संहारार्थमिदानी तत्रस्थ इति प्रयाजन सूचितं

भवति। ननु यदि ऋषभो जगत्संहर्ता तर्हि ऋषभेण जगत्संहर्तृत्वरूपस्य माहात्म्यमिदानीं किमथ प्रकाटितामिति चेत्। उच्यते। देवादिभिर्भूमौ स्वावतारेषु स्वमूलरूपधर्मान्प्रदर्शनीयास्तदप्रकटनस्य धर्मत्वादिति देवादिशिक्षणार्थमृषभच्छया न स्वमाहात्म्यं प्रकटितमित्याशयवानाह ॥ ऋषभत्वेनेति । स वासुदेवात्मा जगन्निवासत्वक्रीडादिगुणविशेषस्य ऋषभस्यात्मा देहो ऋषभत्वेन ऋषभरूपेण धर्मान् जगत्संहर्तृत्वादीन् सगोप्याच्छाद्याद्यापि तत्र गतोऽग्निग आस्ते। कीदृशः सः सदाऽहं वासुदेव इति स्थितः। इतिशब्दः प्रकारार्थकः। अहं सदा वासुदेव इति वासुदेवैक्यप्रकारेण युक्तः सन्स्थित इत्यर्थः। स्वस्य सदा विद्यमानवासुदेवैक्यं प्रसिद्धं चकारेति भावः। ननु किमर्थं स्ववासुदेवैक्यप्रसिद्धं चकारेत्यतोऽसुरजनमोहनार्थमिति भावेनाह ॥ स्थितिं तां त्विति। स्थितिमैक्यप्रसिद्धि। सोऽर्हः क इत्यतस्तस्य मूलरूपमाह ॥ पूर्वं त्विति। अर्हः स्थितिं श्रुत्वा किमकरोदित्यत आह ॥ जातिस्मर इति। जातिं पौड्रकजातिं स्मरतीति जातिस्मरो नृपोऽर्हो द्विधा पाषंडशास्त्र निर्मम इत्यन्वयः। द्विविधे दर्शयति ॥ एकं त्विति। एकं तु वासुदेवाख्यमपरं द्वितीयमर्हत नामकं चेति द्वेधा लोकार्थं दुष्टजनार्थं चकारेत्यर्थः। नन्वेकं तु वासुदेवाख्यमित्युक्तं। तस्य साख्या कुत इत्यत आह ॥ वासुदेवोऽहमित्यपीति। अपिर्हेतौ। यस्मादात्मनः स्वस्यार्हस्याहं वासुदेवः परं ब्रह्मात्मक इति परब्रह्मत्वप्रतिपादकं तच्छास्त्रं तस्माद्वासुदेवाख्यमित्यर्थः। तच्छास्त्र प्रवृत्तिमाह ॥ तत्प्राशिष्य इति। स्थितिं त्वां त्वित्यारभ्य अशौचा अव्रताचारा इत्यंत तात्पर्यवाक्येन यस्य किलानुचरित मुपाकर्ण्येत्यारभ्य विदूषकाः प्रायेण भविष्यंतीत्यंत गद्यद्वयस्य तात्पर्यार्थ उक्तो भवति। तत्र पूर्वं त्वित्यनेन तात्पर्यवाक्येनाकुतो भयं स्वधर्मपथमपहायेत्युक्त्याऽर्हस्योत्तमजीवत्वभ्रांतिर्भवति। तन्निरासाय कृत्यस्तत्स्वरूपमुक्तं। जातिस्मरो द्विधाशास्त्र मित्यादि तात्पर्यवाक्येन कुपथं पाषंडमसमंजसमित्यादिगद्यवाक्यस्य तात्पर्यार्थ उक्तो भवति। तत्प्राशिष्यः क्रमुर्नामेत्या

युर्वैरितब्रह्मपुराणवाक्येन येन ह्वा कलौ मनुजापसदा इत्यादि गद्यस्य तात्पर्यार्थं उक्तो भवति। न केवलमशौचाव्रताचाराः किंत्वहं वासुदेव इति मिथ्याज्ञानवतोऽपीत्यपि शब्दसंबंधः ॥ ११ ॥ अहो भुवः सूतेति श्लोके भुवः संबंधिषु सप्तद्वीपेषु नव वर्षेषु मध्ये एतद्भरतवर्षमधिकपुण्ययुक्तं गायतीत्युक्त्याऽन्यद्द्वीपवर्षे तदपेक्षयाऽल्पपुण्यमस्तीति भ्रांतिर्भवति। तन्निरासाय प्रमाणेनैव तत्तात्पर्यमाह ॥ विशेषादिति। पुण्यं पुण्यकारणं विशेषाच्चरेयुः कुर्युरित्यन्वयः। अनेन भरतखंडस्य पुण्यसाधनानुष्ठानभूमित्वं नान्येषां। तेषां भोगभूमित्वादिति भावेनैवाधिकपुण्यमेतदित्युक्तं। न त्वन्यद्द्वीपादिस्थानां पुरुषाणामतद्द्वीपस्थितपुरुषापेक्षयाऽल्पपुण्ययुक्तत्वाभिप्रायेणेत्युक्तं भवति ॥ १४ ॥ कोऽन्वस्येति श्लोकस्योत्तरार्धे महत्तमा यतो येन ऋषभेणोदस्तां निरस्तां योगमायां जगत उपायभूतां शक्तिमिच्छंतीति हरेर्जगदुत्पत्त्यादिकारणशक्तेर्निरास उच्यते। सोऽनुपपन्नः। योगशक्तेर्हरिस्वरूपत्वेन तन्निरासायोगादित्यतस्तात्पर्यार्थमाह ॥ योगमायामिति। अनेन योगमायाशब्दोऽणिमाद्यष्टैश्वर्यरूपस्वरूपभूतशक्त्यर्थकस्तेन तज्जन्यबाह्यफलं लक्ष्यत इति सूचितं भवति। उक्तार्थे प्रमाणमाह ॥ नित्योदस्तेति। यतः कारणात्फलं योगशक्तिबाह्यफलं हरेरनपेक्ष्यं। अतो बहिः फलविवर्जनान्नित्यस्वरूपभूतयोगशक्तिर्नित्याऽप्युदस्तेत्युच्यत इत्यन्वयः ॥ १६ ॥ इति ह स्मेति गद्ये ऋषभसंचरितवक्तृणा श्रोतॄणां भगवति वासुदेवेऽनयोरप्येकांततो भक्तिः समवर्तत इत्यनेन भक्तिमुक्त्वा यस्यामेव कवय आत्मानमित्युत्तरगद्ये कवयो ज्ञानिनो ब्रह्मादयो यस्या भक्तावात्मनमनुदिनं स्नापयंतस्तयैव भक्त्यैव परया निर्वृत्त्या सुखेन स्वयं ब्रह्मादिस्वभावेनैव प्राप्तमप्यापवर्गिकं नैवाद्रियते। तादृशी भक्तिः श्रोतृवक्त्रोः समनुवर्तत इत्यृषभचरितस्य वक्तृश्रोतृमनुष्यादेरेकांतभक्तिर्ब्रह्मादिसदृशी भक्तिः प्रतीयते। तथा मोक्षस्य हर्यनधीनत्वं च प्रतीयते। तच्च तारतम्यप्रमाणादिबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ब्रह्मणोऽन्यस्येति। ब्रह्मण इत्येकांतभक्तोपलक्षकं। एकांतभक्तेभ्योऽन्यस्य। जातावेकवचनं।

अनेकांतभक्तानां पूर्णां भक्तिं नो नैव दद्यात् । तथा सर्वेषां मुक्तिं ददाति । सर्वेषामित्युक्त्या त्रिविधजीवाना मुक्तिः प्राप्ता । सा च प्रमाणबाधिताऽत उक्तमुच्चानामिति । उत्तमाना मुक्तियोग्यानामित्यर्थः । ननु जनार्दन एव सर्वेषां मुक्तिदः कुतः । कथाचिदन्यः किं न स्यादित्यत आह ॥ को हीति । हिशब्द उक्तार्थे प्रमाणद्योतकः । ईशादन्यः कोऽधीशिता स्वतंत्रेशिता । न कोऽपीत्यर्थः । अनेनान्यस्य स्वात्रंत्र्याभावादीश्वत्स्वातंत्र्येण मोक्षदातृत्वं नैवास्तीति सूचितं भवति । अनेन ये एकांतभक्तियोग्या ऋषभचरितप्रवक्तृश्रोतारस्तेषामेवात्र गद्ये एकांतभक्तिरुच्यते नान्येषा । अन्येषा तु यथाधिकार भक्तिरिति सूचितं । तथा स्वातंत्र्यार्थकस्वशब्दपर्यायस्वयंशब्दो विष्णुवाचक इति सूचितं भवति । ननु सर्वैराद्रीयमाणो मोक्ष एकातभक्तैः कुतो नाद्रीयत इत्याशंकां प्रमाणेनैव परिहराति ॥ नाद्रीयंत इति । तुरवधारणे । स्वयोग्यमित्यनेन संबध्यते । मुक्तेःपूर्वं ये मोक्षं नाद्रीयंते तेषामेकातभक्ताना मुक्तौ स्वयोग्यमेव परं सुखं व्यज्यत इत्यन्वयः । चस्त्वर्थः । तत्तु परमसुख तारतम्यं युक् उक्तं । श्रुत्यादाविति शेषः ॥ १६–१८–१९ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां षष्ठोऽध्यायः ॥ ५–६ ॥

॥ हरिः ॐ ॥ परोरजः सवितरिति श्लोके सूर्याग्न्योरेव स्तुतिः क्रियते न तु विष्णोरिति प्रतीयते । तथा सूर्याग्न्योरहं सगृध्रपक्षिरूपत्वमुच्यत इति प्रतीयते । अतस्तन्निरासायैवात्रत्यसवित्रादिशब्दाना विष्णौ प्रवृत्तिनिमित्तकथनपूर्वकं वृत्तिं दर्शयंस्तत्प्रसंगादन्यत्र विद्यमानतुरीयकालशब्दयोरपि वृत्ति दर्शयति ॥ परोरजा इति । रजोगुणकार्यरहितत्वादरजस्कस्तस्य भावस्तत्त्वं तस्मात् । अनेन रजसो अतीत एव परोरजा इति विग्रहः । त्रयीज्यत्वादित्यनेन वेदस्य गर्भः स्तुत्यत्वेन वेदांतःस्थित इति व्याख्यातं भवति । गुणात्ययात्सत्त्वादिगुणमयान्पदार्थानतिक्रम्यायाद्गमनात् । दुःखादिहानेनेत्यनेन हंति दुःखादिकं नाशयतीति हंस इति व्युत्पत्तिः सूचिता । जीवेशत्वादित्यनेन गृध् अभिकांक्षायामिति धातोराकाक्षावंतो जीवा गृध्रशब्दवाच्या

इत्युक्तं भवति ॥ १३ ॥ इति श्रीभागवतटिप्पण्यां सप्तमोऽध्यायः ॥ ५-७ ॥ ॥

॥ हरिः ॐ ॥ एवं बन्हवद्धमिति गद्ये तिरस्कृताशेषभगवत्प्रियनिकृतनमित्यत्राशेषा ये भगवत्प्रियास्तेषां निकृत आश्रयो भरतः स येन रहूगणेन तिरस्कृतो निराकृतः स तादृशस्तमिति ब्रह्मादिसर्वभगवत्प्रियाश्रयत्वं भरतस्योच्यते । तत्प्रमाण बाधितमित्यतस्तात्पर्यार्थमाह ॥ अशेषेति । स्वोक्तार्थं प्रमाणेनैव स्पष्टयति ॥ तत्कालस्थितेति । ऋषभात्मजो भरतो वैष्णवेषु सुहृदाऽपि सुहृत्ववताऽपि राज्ञेत्यन्वयः । अनेन विष्णुभक्तभरताधिकरणेन राज्ञो विष्णुभक्तत्वभ्रांतिनिराकृता ॥ ९ ॥ त्वयोदितं व्यक्तमिति श्लोके भर्तुः स मे स्याद्यदि वीर भार इत्यादौ भर्तुर्धारकस्य मे यदि भारः स्यात्तदा त्वयोक्तमविप्रलब्धं सत्यं भवेत् । न चैव । भर्तुरपि मम भारो नास्तीति भरतेन स्वस्यैव मुख्यभर्तृत्वादिकमुच्यते । तदयुक्तं । भर्ता सन् भ्रियमाणो बिभर्तीत्यादि श्रुत्यर्थानुसंधातृत्वादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ भरणादिकृदिति । नृपं रहूगणं ॥ १० ॥ स्थौल्यं कार्श्यमिति श्लोके देहेन जातस्य स्थौल्यकार्श्यादयः संति । मे मम तु न संतीत्युक्त्या भरतेन स्वस्य देहजातत्वं नास्तीत्युच्यत इति भाति । तदनुपपन्नं । देहाज्जातत्वस्य प्रत्यक्षादिप्रमाणसिद्धत्वादित्यतस्तदनूद्य व्याचष्टे ॥ देहेन जातस्येति । स्वोक्तार्थे प्रमाणमाह ॥ देहमानीति । मानवर्जितो देहेऽभिमानेन वर्जितः ॥ ११ ॥ जीवन्मृतत्वमिति श्लोके विकृतस्य विकाररूपस्य जडदेहस्य नियमेन जीवन्मृतत्वं दृष्टमिति जडस्य जीवन्मृतत्वमुच्यते । तदयुक्तं । न ह्येकस्मिन्नेव काले एकस्यैव जीवनं मृतत्वं च संभवति । किंच जीवनं नाम प्राणयुक्तत्वं । तच्च जडे नास्ति । प्रमाणाभावादित्याशंकां प्रमाणेनैव परिहरति ॥ प्राणयुक्तेरिति । अरत्या सुखाभावेन । अनेन मायारचितांतरात्मा भगवदिच्छया प्रेरितप्रकृत्या निर्मितं मनः स्वदेहेन जीवमालिंग्य पृथुनामभिः सुरनरादिनामभिर्युक्तं रूपभेदं देहभेदं तनोति । तत्र देहे कालोपपन्नं दुःखं सुखं

व्यामिश्रं च फलं व्यनक्तीति श्लोकद्वयस्यैकान्वय उक्तो भवति ॥ १२ ॥ **स्वस्वामिभाव इति** सार्धश्लोके क ईश्वरोऽस्ति । न कोऽपि । तत्रेश्वराभावे किमीशितव्यमस्ति । न किमपि । न चेषः सर्वेश्वर एषः सर्वलोकपाल इत्यादिश्रुत्या हरेरीश्वरत्वमन्यस्य सर्वस्येशितव्यत्वमुच्यत इति वाच्यं । युक्त्याऽच्युते स्वस्वामिभाव उच्यते । असावध्रुवोऽसत्यः । कुतः । यस्माद्व्यवहारतो विनाऽन्यद्विशेषबुद्धेरवकाशं न पश्यामीति स्वस्वामिभावस्य व्यावहारिकसत्यत्वमेव न तु पारमार्थिकसत्यत्व-मुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **स्वामित्वं त्विति** । तुरवधारणे । भृत्येत्यनेन संबध्यते । ननु हरेरेव मुख्यत्वमित्युक्तं । प्रजापते न त्वदेतानीत्यादिश्रुत्यादिना ब्रह्मादीनां स्वामित्वस्योक्तत्वेन तद्विरुद्धत्वादित्यत आह ॥ **देवेष्विति** । चोऽवधारणे । तस्य हरेर्नियत्यैव नियमेनैव तदधीनमेव स्वामित्वं न तु मुख्यस्वातंत्र्येणेत्यर्थः । त्वदादेः स्वामित्व-मित्यनुवर्तते । व्यावहारिकमज्ञरूढिमात्रसिद्धं । तदेवोपपादयति ॥ **मानुषेष्विति** । मानुषेषु त्वदादिषु । व्यवहारमज्ञव्यवहारं । अज्ञव्यवहारसिद्धं । स्वामित्वमृते विशेषो मुख्यस्वामित्वं । कः केन प्रमाणेन सिद्धं । वद । न केनापि प्रमाणेनेत्यर्थः । उपसं-हरति ॥ **व्यत्यासादिति** । हरिदेवेभ्यो व्यत्यासाद्वैपरीत्याद्व्यवहारमात्रसिद्धत्वात् । मानुषस्वामित्वस्येति शेषः । मानुषेषु मुख्यं स्वामित्वं नास्तीति वाक्यशेषः । मानुषेष्विति विशिष्योक्तेः कृत्यमाह ॥ **न हीति** । व्यत्यासोऽज्ञव्यवहारमात्रसिद्धत्वं स्वामिनाऽऽ-गतस्वामित्वं प्राप्तं नहीत्यर्थः । अनेन त्रिविधं स्वामित्वं । मुख्यममुख्यं व्यावहारिकं च । तत्र हरौ मुख्यं । देवेष्वमुख्यं । मानु षेषु व्यावहारिकमित्युक्तं भवति । तथा भागवतश्लोके ध्रुव इति पदस्य मुख्यत्वमित्यर्थः । तथा हरेरन्यः क ईश्वरो मुख्यस्वामी । न कोऽपि अतस्तत्र तस्मिन्किमपि स्वातंत्र्येणेशितव्यं च नास्तीत्यर्थ उक्तो भवति ॥ १२–१३ ॥ **न विक्रिया विश्वस्येति** श्लोके महद्विमानात् महत उत्तमस्य तव विमानादवज्ञानाच्छूलपाणिरपि रुद्रो यदा स्वात्मानं धक्ष्यति दहति तदा मादृक् धक्ष्यतीति किमु

वक्तव्यमिति रुद्रस्यापि भरतावज्ञाने देहांतप्रायश्चित्त इति उच्यत इति भाति । तदयुक्त । भरतस्य रुद्रादतिनीचत्वेन तदवज्ञाने रुद्रस्य देहातमायश्चित्ताभावस्य प्रमाणसिद्धत्वादित्यतस्तदुक्तेरभिप्रायं प्रमाणेनैवाह ॥ स्वत इति । स्वत इत्यस्य स्वस्मात्स्वरूपत इत्यर्थद्वयं । अपिः कैमुत्यद्योतनार्थः । रुद्रोऽपि स्वतः स्वस्मात् । स्वतः स्वरूपतो ये महात उत्तमास्तेषामवज्ञानादात्मानं स्वदेहं दहेत् । रुद्रस्यापि यदा स्वोत्तमावज्ञानेनानिष्टं तदाऽस्मदाद्यन्येषां स्वोत्तमावज्ञानेनानिष्टं भविष्यतीति किमु वक्तव्यमिति । सर्वेषां स्वोत्तमावज्ञानेनानिष्टाभिप्रायेणैव रहूगणेनेदमुक्तं । न तु रुद्रस्य भरतावज्ञानाभिप्रायेणेति भावः ॥ २६ ॥ इति श्रीभागवतटिप्पण्या दशमोऽध्यायः ॥ ५–१० ॥ ॥

॥ हरिः ॐ ॥ तथैव राजन्निति श्लोके वेदवादेषु वेदानां वादेषु मुख्यतोऽर्थप्रतिपादकेषु वाक्येषु शुद्धस्तत्त्ववादस्तत्त्व प्रतिपादनं प्रायेण साधु न चकास्तीत्युक्त्या प्रायेण वेदोऽतत्त्वमेव प्रतिपादयतीति प्रतीयते । तन्निरासाय प्रमाणेनैव तत्तात्पर्यार्थ माह ॥ न वेदेष्विति । तुरवधारणे । वेदेषु ब्रह्मतत्त्वमित्यनुवर्तते । महाबुद्धिषु ब्रह्मैव चतुर्मुख एव केवलमतिशयेन वेदेषु ब्रह्मतत्त्वं पश्येदित्यर्थः ॥ २ ॥ स वासनात्मेति श्लोके स जीवो वासनात्मा वासनारूप आत्मा मनो यस्य स तथेति तच्छब्दस्य जीवार्थत्वभ्रांतिमव्यवहितेनान्वयभ्रांतिं च निवारयन् आलिंग्य मायारचितांतरात्मेत्युत्तरश्लोके मायया- ऽविद्यया रचितः कल्पितोऽतरात्मा जीव इति जीवस्याविद्याकल्पितत्वभ्रांतिं च निवारयन् अंतरात्मशब्दमनूद्य तस्य विवक्षितमर्थ- माह ॥ सः मायारचितोऽन्तरात्मन इति । अनेन सः मायारचितात्मा भगवदिच्छाप्रेरितप्रकृत्या निर्मितं मनः ॥ ५–६ ॥ तावानयं व्यवहार इति श्लोकेऽयं स्थूलसूक्ष्मो व्यवहारो व्यावहारिकः सुखदुःखादिरूपः संसारः क्षेत्रज्ञसाक्ष्योः क्षेत्रज्ञो जीवः साक्षी परमेश्वरस्तयोर्भवतीति जीववदीश्वरस्यापि संसारित्वं प्रतीयते । तत्तु द्वावेव मुक्तौ परमश्च प्रकृतिश्चेत्यादिनिरवकाश

श्रुतिस्मृत्यादिबाधितमित्यतः प्रमाणेनैव तावानयमित्यर्थस्य तात्पर्यार्थमाह ॥ क्षेत्रविदिति । तुर्विशेषे । सविशेषो हरौ क्षेत्रज्ञ शब्दस्य परममुख्यवृत्तिरूपो ज्ञातव्यः । ताभ्यामित्यनेनैव भागवते क्षेत्रज्ञसाक्ष्योरित्यतः परं सकाशादिति शेषः पूरणीय इति सूचितं भवति ॥ ७ ॥ पदं तथा गुणेोति पूर्वार्धे मनो बहिःपदं बाह्यं भूरादिस्थानं श्रयत इति भूम्यादिबहिःस्थान स्थितत्वमुच्यते । तच्चांतःस्थस्य मनसः प्रमाणबाधितमित्यतः पदशब्दमनूद्य व्याचष्टे ॥ पदमिति । अनेन बाह्येंद्रियद्वारा बाह्यविषयसंबद्धत्वमेव बहिःपदाश्रयत्वं न तु बाह्यभूम्यादिस्थानाश्रितत्वमित्युक्तं भवति । नन्वेकादशासन्मनस इत्युत्तरार्धे तस्य मनसो वृत्तीर्विकारभूता धियो ज्ञानिन एकादशेत्युच्यते । तदयुक्तं । घटादिषु विषयकमनोवृत्तिज्ञानानामनंतत्वात् । सहस्रशः शतशः कोटिशश्चेत्युत्तरवाक्यविरोधाच्चेत्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ एकादशेंद्रियेति । साक्ष्यंतैकादशेंद्रियज्ञानद्वारा शब्दाद्याः शब्दादितत्तद्विषयसंबंधरूपा एकादशवृत्तयः स्युरित्यर्थः । नन्वेवं तर्हि तत्तदिंद्रियशब्दादिविषयेष्वप्येकादशत्वात्कथं पंचत्वमित्यत-स्तद्घटयति ॥ तदभिमाना इति । कर्मेस्वानां कर्मेंद्रियाणां स्पर्शांतर्भावतः स्पर्शेऽतर्भावात् । तदभिमानास्तदिच्छाश्च तस्य मनसो वृत्तिरूपा अभिमाना इच्छाश्च पंचश एवेत्यर्थः । अनेन मनो वृत्तिरूपाभिमानेच्छूनां कथनावसरे कर्मेंद्रियविषयविषयेकेच्छानां स्पर्शेंद्रियविषयविषयकाभिमानेच्छयोरंतर्भावमभिप्रेत्य भागवते आकूत्यभिमत्याभिमानयोः पंचत्वमुक्तमित्युक्त भवति । नन्वेवं तर्हींद्रियाणां व्यापारा अपि किं पंचैवेत्यतो नेवेत्याशयेनाह ॥ नैव पृथग्गतिरीति । न केवलं ज्ञानवृत्तयः किंतु गतिश्चेति चार्थः । गतिश्च व्यापारोऽपि पृथगेवेत्यर्थः । उक्तमेव विवृणोति ॥ एकादशेति । चेष्टा व्यापारः । न केवलं चेष्टाः किंत्विं-द्रियाधिष्ठानगोलकाश्चैकादशैवेत्याह ॥ पृथग्गतिरिरिति ॥ ९ ॥ यत इंद्रियाणामधिष्ठानं पृथक् पृथक् निगद्यते तत्तस्मादधिष्ठान भूतानीति योजना । मनसस्तु हृदयं गोलकं । अनेन मात्राणि कर्माणि पुरं चेति श्लोकपूर्वार्धतात्पर्यार्थ उक्तो भवति । तत्र

गोलकास्तदधिष्ठानमित्यनेन मीयंते ज्ञायंते शब्दादिविषया यैस्तानि मात्राणि ज्ञानेंद्रियाणि । क्रियंत गमनादिक्रिया यैस्तानि कर्माणि कर्मेंद्रियाणीति ज्ञानेंद्रियकर्मेंद्रियवाचकमात्रकर्मशब्दाभ्यां तदधिष्ठानगोलका लक्षणीयाः । देहवाचकपुरशब्देन देहैकदेश हृदयं मनसोऽधिष्ठानभूतगोलको ग्राह्यः । तासामिति गतिवाचकस्त्रीलिंगशब्देन गतिमदिंद्रियाणि ग्राह्याणीत्युक्तं भवति ॥ १० ॥ गंधाकृतिस्पर्शेति श्लोकस्य मात्राणि कर्माणीति पूर्व श्लोकोक्तविवरणात्मकत्वं प्रतीयते तदयुक्तं । तत्रैकादशीवीरभूमिमित्येकादशसंख्योक्ता । अत्र तु द्वादशमेकमाहुरिति द्वादशसंख्योच्यते । अतो न विवरणरूपत्वमित्यतो नायं श्लोकः पूर्वोक्तविवरण रूपः किंतु पक्षांतरपर इत्याशयवान्प्रमाणेनैव पूर्वोक्तानुवादपूर्वकं तं श्लोकं व्याचष्टे ॥ एष संसृतीति । एवमेकादशासन्मनसोऽस्य वृत्तीरित्याद्युक्तप्रकारेण एकादशमनोवृत्त्यादिरूपः संसृतिसंभारः सुखदुःखादिरूपसंसृतिः सम्यक् भ्रियते पोष्यते येन स तथा दुःखादिसंसारहेतुरुक्तः ॥ अथवा ॥ संसृतिसंभारो द्वादशैव भवेत् । अनेन द्वादशमाहुरिति भागवतपदं व्याख्यात भवति । के ते द्वादशसंसारहेतव इत्यतस्तान्दर्शयति ॥ दशकमिति । विषयाणां गंधकृत्यादीनां दशकं ममाहमिति च द्वयं । एवं द्वादशैव संसृतिसंसारहेतुरित्यर्थः । पक्षांतरमाह ॥ द्वयमेवेति । ममाहमिति द्वयमेव वा संसृतिहेतुरहमित्येव वा संसृतिहेतुरित्यर्थः । अनेन गंधकृत्यादिदशविषया ममेति स्वीकरणं सर्व मदधीनमिति स्वाधीनत्वविषया माया मिथ्याज्ञानमेकादशं । अहमिति माया स्वस्य स्वातंत्र्यविषयं मिथ्याज्ञानं द्वादशमिति द्वादशसंसृतिहेतुमाहुरित्याद्या गंधाकृतिस्पर्शरसश्रवांसीति भागवतश्लोकस्य योजना सूचिता । तथा द्वादशमित्यस्य चानुवृत्तिः सूचिता भवति । अत्र द्वयमेव ममाहं वेत्यनेन द्वंद्वमूलो हि संसार इत्यादि स्थलांतरस्थं व्याख्यात भवति । अस्मिन्नेव श्लोके विसर्गगत्यर्त्यभिजल्पेत्यत्र विसर्गादेः पाट्वादींद्रियविषयत्वं प्रसिद्धं । आर्त्तिः पीडा । कस्येंद्रियस्य विषय इत्यतः पृषोदरादित्वेन रफस्याकारलोपेनारतिरेवार्तिरिति मनसि निधाय तद्विषयिणं दर्शयति ॥ आर्तिरिति ॥ ११ ॥ द्रव्य

**स्वभावेति** श्लोके द्रव्यस्य सुवर्णादेः स्वभावः सुवर्णता किं कमित्यर्थः प्रतीयते । सः प्रकृतानुपयुक्तोऽतो द्रव्यस्वभावपदयोः प्रकृतोपयुक्तं विवक्षितमर्थमाह ॥ **द्रव्यं देहादिरित्यादिना** । अस्यैव श्लोकस्य सहस्रश इत्युत्तरार्धे सहस्रादिसंख्या मनसो विकाराः क्षेत्रज्ञतो न मिथश्च न भवंति किंतु स्वत एव भवंतीत्यन्यथाप्रतीतिनिरासाय तद्यथावद्व्याचष्टे ॥ **जीवस्येति** । जीवस्येत्यध्याहारः ॥ अथवा ॥ मननान्मन उद्दिष्ट इति प्रमाणान्मनःशब्दस्यैवार्थांतरं ज्ञेयं । मिथः स्वतश्च नेत्येकनकारचकारान्वयप्रदर्शनेन भागवतस्थैकनकारस्य चकारार्थत्वं सूचितं भवति ॥ १२ ॥ **क्षेत्रज्ञ आत्मा पुरुष इति** श्लोके स्वमायथाऽऽत्मन्व्यवधीयमान इत्यत्र स्वाश्रिताज्ञानेन स्वस्मिन्नेव व्यवधानयुक्तः स्वज्ञानं स्वस्य नास्तीतीश्वरस्य भावस्वरूपाज्ञानं न स्वविषयज्ञानाभावश्चोच्यते । तत्तु यः सर्वज्ञः सर्वविदित्यादिप्रमाणबाधितमित्यतस्तद्वाक्यमनूद्य यथावद्व्याचष्टे ॥ **स्वमाययेति** । जीवदृष्ट्यपेक्षया तिरोहितत्वेन स्वस्मिन्नेव स्थित इत्यर्थेऽन्वयः । अनेन माया शब्द इवार्थकः । व्यवधीयमान इत्यस्य व्यवधानेन स्थित इति व्याख्यानाल्लब्धास्थितपदेनात्मन्नित्यस्यान्वयः । व्यवधानेनेत्यत्र जीवदृष्टेस्तिरोहित इति वक्ष्यमाणप्रमाणानुसारेण जीवदृष्टेरिति शेषः पूरणीय इत्युक्तं भवति । स्वोक्तार्थं प्रमाणेन दृढयंस्तेनैव प्रमाणेन क्षेत्रज्ञो जीवो नारायण इति जीवेश्वरैक्यभ्रांतिं च निराकरोति॥ **स्वात्माधार इति** । दशमाध्यायांते रहूगणेन तन्मे भवान्नरदेवाभिमानेत्यादिना संसाराभावसाधनज्ञाने प्रार्थिते सति तदेव वक्तव्यं । तद्विहायाकोविदः कोविदवादवादानित्यारभ्याध्यायपरिसमाप्तेर्यन्मनोविकारादिकथनं तदसंगतमित्यतः प्रकृतसंगतमकोविदः कोविदेत्यादिसर्वग्रंथमथितार्थं दर्शयति ॥ **अभिमानादेवेति** । अनेनाभिमानत्यागपूर्वकं हरिज्ञानं संसाराभावसाधनमित्यनेन ग्रंथेन परिहारः समाधानमुक्तमित्युक्तं भवति ॥ १४ ॥ इति श्रीभागवतटिप्पण्यामेकादशोऽध्यायः ॥ ५—११ ॥

॥ हरिः ॐ ॥ **अयं जनो नामेत्यादि** श्लोकेषु पार्थिवो जनः पृथिव्या चलन् चलति । तच्चलनं कस्य हेतोर्भवतीति

पृथिव्यां चलने कारणप्रश्नोऽनुपपन्नः । उत्तराभावात् । तथा तस्यापि चाद्ययोरित्यादिकं प्रकृतेऽन्वयाभावेनात्यंतासंगतं भाती त्यतोऽपेक्षिताध्याहारेणान्वयं दर्शयन्प्रकृतसंगतत्वेन तच्छ्लोकजातस्याभिप्रेतार्थमाह ॥ यस्मादित्यादिना । अतो मूलकारणात्सर्वस्य मुख्यं कारणत्वं तस्यैव विष्णोरेव । मूलाश्रयविवक्षया यदि न स्यादित्यनेनायं जनो नामेति पूर्वार्धे यदि कालाश्रयविवक्षा न स्यात् । इति व्यवहार इति शेषः पूरणीय इत्युक्तं भवति । तथा कस्येति किंशब्द आक्षेपार्थ एव न तु प्रश्नार्थ इत्युक्तं भवति । कुत इत्यतस्तदुपपादनाय तस्यापि चाद्ययोरित्यादिना वाक्यतात्पर्यकथनं ॥ ५ ॥ यदिक्षितावेवेति श्लोके यदि क्षितावेव चराचरस्य नित्यं निष्ठां स्थितिं प्रभवं च विदामस्तर्हि तन्नामतः क्षितिनाम्ना क्षितिरेव निरूप्यते । अन्यत्तु व्यवहारमात्र निरूप्यता-मिति क्षितेरेव सर्वाश्रयत्वेन क्षितिशब्दवाच्यत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तत्तात्पर्यार्थमाह ॥ आश्रयत्वादिति । क्षि निवासगत्योरिति धातोः क्षिति शब्दस्य गतिनिवासरूपार्थस्य निर्वचने नितरां मुक्तौ तस्मिन्नेव विष्णावेव क्षितिशब्दः परमुख्यया वृत्त्या ॥८॥ एवं निरुक्तां क्षितीति श्लोके येषां समूहेन विशेष पृथिवीरूपः कृतस्ते परमाणवः परमाणुनामकाः । ये च परमाणवस्तेऽविद्याकल्पिता मिथ्याभूता यतो मनसा कल्पितमनोरथा मिथ्यास्तज्जन्यपृथिव्या अपि मिथ्यात्वात्तस्यामेवं निरुक्तं क्षिति शब्दवृत्तं क्षिति शब्दप्रवृत्तिनिमित्तमाश्रयत्वमसन्निधानं नास्तीति मिथ्यात्वेनाश्रयत्वाभाव उच्यत इत्यन्यथाप्रतीतिनिरासाय तत्तात्पर्यार्थमाह ॥ परमाणव इति । अयुक्तत्वात् । मुख्याश्रयत्वादेरिति शेषः । अस्य अकारवाच्यस्य । अनेनास्य विद्याऽविद्येति विग्रहस्तथा कल्पिता इत्यत्राधारत्वेनेति शेषश्च सूचितः । तेन न मिथ्यात्वेन मुख्याश्रयत्वाभावः किंतु भगवदधीनत्वेनेत्युक्तं भवति ॥ ९ ॥ एवं शब्दार्थस्तथेति । अनेनैवंशब्दः समुच्चयार्थः । न तु दार्ष्टांतिक इत्युक्तं भवति । अत्रैव श्लोके जीवमन्यदित्यत्रान्यादि-त्यनेन कृशादिव्यतिरिक्तं परमं वस्त्विति भ्रांतिर्भवति । तन्निरासायापेक्षिताध्याहारेण तद्व्याचष्टे ॥ विष्णोरिति । नन्वेवंशब्दस्य

समुच्चयार्थत्वेऽपि विष्णुर्जगतः स्वतंत्रकारणं प्रकृतेश्चेति प्रकृतेः स्वतंत्रकारणत्वमेव भवति । एवं सति एवंशब्दस्य दार्ष्टांतिकार्थत्वं विहाय समुच्चयार्थत्वग्रहणेन किमधिकमाचरितमित्याशंकापरिहारायैवंशब्दमनूद्य तस्यैवमित्येवमित्यर्थयोरेवमित्यभिधानासिद्धमित्थंभूत त्वरूपार्थांतरं गृहीत्वा तत इत्थंभूतत्वं विवृणोति ॥ एवं प्रकृत्याधार इति । अनेनेश्वराधीनप्रकृतेर्जगत्कारणत्वमेवंशब्देन समुच्चीयते । न तु स्वातन्त्र्येणेत्युक्तं भवति । अत एव भागवते द्वितीयामित्युक्त । अजां द्वितीयमनंतरकारणमेव हीत्यर्थः । अनेनैवं प्रकृत्याधारं विष्णुमाश्रितयाऽजयेति भागवते एवंशब्दस्यावृत्त्याऽन्वयः प्रदर्शितो भवति ॥ १० ॥ पूर्वोक्तार्थोपसंहारकस्य ज्ञानं विशुद्धं परमार्थमेकामिति श्लोकस्य तात्पर्यार्थमाह ॥ अत इति । स्ववाक्येन व्याख्यातमपि श्लोकजातं प्रमाणेन स्पष्टं व्याचष्टे ॥ राजा गोप्तेति । यस्माद्ब्रह्मा तयो राजभूतयोराश्रयो गोप्ता च तस्मात्कारणाद्व्यवहारः सत्यं मुख्यो नेत्यर्थः । तस्य ब्रह्मणः पूर्वोक्ताश्रयगोप्तृशब्दौ लिंगविपरिणामेनानुवर्तेते । तस्याः प्रकृतेः । तत्राप्याश्रयादिशब्दानुवृत्तिर्भवति । अतो हरेरन्येषामसंकुचितसर्वाश्रयत्वाभावात् । कुतः सर्वशब्दाभिधेय इत्यत आह ॥ शब्दप्रवृत्तेरिति । हि यस्मात्क्षित्यादिवस्तुषु क्षित्यादिशब्दानां वृत्तेः प्रवृत्तेः कारणं हरिस्तस्मादित्यर्थः । अनेन हरेः सर्वशब्दाभिधेयत्वे तदधीनत्वादर्थवादिति ब्रह्मसूत्रोक्तन्यायो हेतुः सूचितः । सर्वांतरः सर्वबहिरित्यनेन नांतरं न बहिरिति भागवतवाक्यं व्याख्यातं भवति । नन्वध्यात्मयोगग्रथितमधिकात्मा परमात्मा तस्य योगस्तद्विषयकं मोक्षसाधनं ज्ञानं तेन ग्रथितं संबद्धं पूर्वोक्तं पुनराख्याहीति मोक्षसाधनं ज्ञानं प्रार्थयंतं रहूगणं प्रति ब्राह्मणेनायं जनो नामेत्याद्यसंगतं कथमुच्यत इत्याशंकां प्रमाणेनैव परिहरति ॥ शिर इति । शिर आधारोऽन्ये तूपचारेणाधार इत्यात्मयोगमेवोपदेष्टुमन्येषामुपचाराधारत्वे दृष्टांतपरमिदमित्युक्तं भवति ॥ ११ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां द्वादशोऽध्यायः ॥ ५—१२ ॥ ॥

॥ हरिः ॐ ॥ आर्षभस्येहेति श्लोके आर्षभस्य ऋषभपुत्रस्य भरतस्य वर्त्म भगवद्भक्त्यादिमार्गमनु अनुगंतुं नृपो नार्हतीति सामान्येन नृशब्दग्रहणात्सर्वराज्ञां भरतसाम्यं निषिध्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ ऋते हैहयेति। वैन्यः पृथुः। आदिपदेन प्रियव्रतादयः। यस्य भरतस्य सिन्धीशः रहूगणः । कपिलं नारायणं ॥ २६ ॥ यज्ञाय धर्मपतय इति श्लोके योगायेति सांख्याशिरस इति च हरेर्विशेषणद्वयमुक्तं । तत्र हरेः स्वर्गाद्युपायकर्माद्यैक्यं सांख्य ज्ञानात्मकशिरस्त्वं च प्रतीयते। तत्तु कर्मादि भेदप्रतिपादकप्रमाणबाधितमित्यतस्तयोः शब्दयोर्विवक्षितमर्थमाह ॥ युज्यत इति। युज्यते प्राप्यते मोक्षोऽनेनेत्यर्थः। अनेन सांख्यमुत्तमं ज्ञान शिरो यस्येति विग्रहः शिरःशब्दस्य स्वरूपभूतसर्वशरीरापलक्षकत्व च सूचितं भवति । सांख्यशब्दस्योत्तमज्ञानवाचित्वं तु सम्यक्त्वदर्शिः सांख्यं योगस्तत्साधन स्मृतमिति गीतातात्पर्योदाहृतशब्द निर्णयाभिधानसिद्धं ॥ २९ ॥ इति श्रीभागवतटिप्पण्या त्रयोदशोऽध्यायः ॥ ५—१३ ॥ ॥

॥ हरिः ॐ ॥ गयं नृपं क इति श्लोके भगवत्कलां हरेरंशं मत्स्यादिकमृतेऽन्यः को गयं नृपं कर्मभिः प्रतियाति तत्सदृशो भवति । न कोऽपीति गयस्य हर्यंशमत्स्यादिसमत्वमुच्यत इति भाति। तत्तु बहुनिरवकाशप्रमाणबाधितमित्यतः प्रमाणेनैव तत्ता त्पर्यार्थमाह॥ प्रियव्रत इति । अनेन भगवत्कलामृत इति भागवतवाक्यं भगवतां विष्णुज्ञानभक्त्यादिभाग्यवता कर्मदेवानां कला मंशं । तत्सममिति यावत् । प्रियव्रतमृत इति व्याख्यातं भवति ॥७॥ इति श्रीभागवततात्पर्यटिप्पण्या पंचदशोऽध्यायः ॥५—१५॥

॥ हरिः ॐ ॥ ननु येषां मध्ये इलावृतं नामाभ्यंतरवर्षमिति मध्ये कुलगिरिराजो मेरुर्द्वीपायामसमुन्नाह इति मेरुपर्वतस्य लक्षयोजनोच्छ्रितत्वमुच्यते। तदयुक्तं। चतुरशीतिसाहस्रयोजनानां समुच्छ्रयः। गिरिराजस्य मेरोः स्यादि त्यादिपराशरादिवचनविरुद्धत्वात् । तथात्रोक्तं जंबुद्वीपादिभौवनं कोशलक्षणं ग्रंथांतरवचनविरुद्धमित्याशंकां प्रमाणेनैव परिहरति ॥

यथा भागवत इति । सर्वे विधयः छंदसि विकल्प्यंत इति परिभाषया भौवनं कोशलक्षणमित्यत्र भौवनकोशपदयोः समासे सुपोधातुप्रातिपदिकयोरिति पाणिनीयसूत्रेण भौवनपदस्य विभक्तिलोपो भवति । ततश्च भुवनमेव भौवनं । तच्च तत्कोशं च ब्रह्मांडलक्षणं कोशं तस्य लक्षणमिति विग्रहः । तुशब्दो हेतौ । यस्मात्कारणाद्भागवते उक्तं भौवनं कोशलक्षणमेव यथा यथार्थं नान्यत् । तस्मात्सर्वग्रंथांतरस्थितं कोशलक्षणं तस्य भागवतस्याविरोधत आनुकूल्येन योज्यमित्यर्थः । तस्याविरोधतो योज्यं सर्वग्रंथांतरं स्थितमित्युक्तस्यापवादमाह ॥ मंडोदे पूरणमिति । षट्सु द्वितीयेति वचनाद्व्यत्यासामिति द्वितीया तृतीयार्थे । ग्रंथांतरे यन्मंडोदे क्षीरसागरे च व्यत्यासं भागवतोक्ताद्व्यत्यासेन वैपरीत्येन पूरणं क्रौंचशाकद्वीपाभ्यां क्रमेण पूर्णत्वं तयोः परितो वर्तमानत्वमुक्तं तदेव विना । तथा राहुसोमरवीणां मंडलानां मध्य इति शेषः । मंडलात् । सूर्यसोमयोरिति शेषः । ल्यब्लोपनिमित्ता पचमी । मंडलमपेक्ष्य । द्विगुणोक्तितां । क्रमेण सोमराहुमंडलयोरिति शेषः । द्विगुणत्वेनोक्तिर्ययोर्मंडलयोस्ते तथा तयोर्भावस्तत्ता । द्विगुणोक्तिरिति यावत् । तां । ग्रंथान्तरे यः सूर्यमंडलविस्ताराद्द्विगुणः सूर्यमंडलविस्तारस्ततो द्विगुणो राहुमंडलविस्तार उक्तस्तं च विनाऽन्यत्सर्वग्रंथांतरे स्थितं कोशलक्षणं भागवतानुकूल्येनैवोन्नेयमित्यर्थः । मंडलाद्द्विगुणोक्तितामिति क्वचित्पाठः । तत्र मंडलयोरा द्विगुणोक्तितामिति विग्रहेणायमेवार्थो ग्राह्यः । तथा आङ्गात् द्विगुणोक्तेर्निरवकाशत्वरूपसमीचीनत्वं ज्ञातव्यं । नन्वेवं चेत्सूर्यादिमंडला-द्विगुणविस्तारप्रतिपादकग्रंथांतराविरुद्धं यददस्तरणेर्मंडलं प्रतिपत्त्यादिवाक्यमप्रमाणं स्यादित्यत आह ॥ योजनेति । अत्र तु यददस्तरणेर्मंडलमित्यादिभागवतवाक्ये तु योजनाभेदतो ग्रंथांतराविरोधो ज्ञातव्यमिति भावः । ननु तर्हि द्वाभ्यां गुणिता दशद्वा-दशेति योजनायां सोममंडलस्य विंशतिसहस्रविस्तारो भवति । स त्वष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु । प्रमाणं तत्र विज्ञेयं कलाः पंचदशैव वेत्यादिप्रमाणविरुद्ध इति चेन्न । अत्र योजनाभेदत इत्यनेन भागवतस्थायुतादिशब्दानां लक्षणावृत्त्या

क्रमेण चतुश्चत्वारिंशत्सहस्राष्टाशीतिसहस्राद्यर्थत्वस्य विवक्षितत्वात् ॥७॥ इति श्रीभागवततात्पर्यटिप्पण्यां षोडशोऽध्यायः ॥५–१६॥

॥ हरिः ॐ ॥ ननु तत्र भगवत इति गद्ये ऊर्ध्वांडकटाहस्य विष्णोर्वामपादांगुष्टनखनिर्भिन्नत्वमुच्यते । तदयुक्तं । ग्रंथांतरे दक्षिणांगुष्टनखनिर्भिन्नत्वस्योक्तत्वेन तद्विरुद्धत्वादित्यतो व्यवस्थापकप्रमाणेनैव विरोधं परिहरति ॥ वाराह इति । तदन्येषु वाराहकल्पान्येषु कल्पेष्वित्यन्वयः । ऊर्ध्वं जहार उज्जहार । अनेन त्रिपादपरिमितं स्थलं गृह्णन्वामनो वाराहकल्पे प्रथमं दक्षिणपादप्रक्षेपेण तत्परिमितां सर्वां भूमिं गृहीत्वा तदनंतरं वामपादप्रक्षेपेणोर्ध्वांडकटाहमभिव्याप्य स्थलं जग्राह । अन्यकल्पेषु तु प्रथम वामपादप्रक्षेपेण सर्वां भूमिं गृहीत्वाऽनंतरं दक्षिणपादप्रक्षेपेणोर्ध्वांडकटाहस्थलं जग्राह । तत्र भागवतं तु वाराहकल्पानुसारेण प्रवृत्तं । अन्यग्रंथोऽन्यकल्पानुसारेण प्रवृत्तोऽतो न विरोध इत्युक्तं भवति । तथा प्रतिकल्पमवतारप्रवृत्तिश्च सूचिता भवति ॥ १ ॥ ॐ नमो भगवते महापुरुषायेति जाप्यमंत्रेऽनंतायेति पदेन केवलं शेष एवोच्यते इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अनंतांतःस्थित इति । चोवधारणे । अनंतांतःस्थितो विष्णुरेव मुख्यतोऽनंतोऽनंतनामकः । शेषत्वममुख्यतः । अनंत इति शेषः । अमुना शेषेण । ईशो विष्णुः । ननु यद्यत्रानतपदेन विष्णुशेषौ गृहीत्वा तयोः रुद्रपूज्यत्वमुच्येत तर्हि भजे भजन्यारुणेत्यादिरुद्रकृतस्तुतिरनुपपन्ना स्यात् । तथाहि । तत्र मध्वासवताम्रलोचनः । न नागवध्वोऽर्हणमीश्वरे ह्रियेत्यादिस्तुतिर्विष्णौ न संभवति । तथा भवापहं तां । यमाहुरस्य स्थितिजन्मसंयमं त्रिभिर्विहीनं । महानहं । वैकृततामसेंद्रिया इत्यादिस्तुतिः शेषे न संभवत्यत उक्तमयुक्तमित्याशंकां प्रमाणेनैव परिहरति ॥ जीवव्यपेक्षयेति । चोऽन्यत्रेत्यनेन संबध्यते । मिश्राः स्तुतयस्त्विति संबंधः । केवलमामिश्राः स्तुतय इत्यनुवर्तते । केवलस्तुतयः विष्णोरेव विष्णुमात्रविषयाः । अन्यत्र च जीवमात्रविषयाश्चेत्यर्थः ॥ १६ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां सप्तदशोऽध्यायः ॥ ५—१७ ॥

॥ हरिः ॐ ॥ **विश्वोद्भवस्थानेति** श्लोकेऽकर्तुस्ते तव विश्वोद्भवस्थाननिरोधकर्मांगीकृतमित्यकर्तुर्हरेर्विश्वोद्भवादिकर्मकर्तृत्वमुच्यत। तच्च परस्परं विरुद्धमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **अप्रयासेनेति** । तुरवधारणे। इह भागवतादौ ग्रंथे। नन्वन्येष्वसंभावितप्रयासेन कर्तृत्वं हरौ कुतः संभवतीत्यत आह ॥ **महाशक्तित्वत इति** । परमस्य हरेर्महाशक्तित्वतस्तत्र हरावप्रयासेन कर्तृत्वं युज्यत इत्यन्वयः। महाशक्तित्वतस्तच्चेति क्वचित्पाठः। तत्र तच्छब्देनाप्रयासेन कर्तृत्वं ग्राह्यं ॥ ५ ॥ **केतुमाले भवानिति** गद्ये कामस्य हर्यैक्यं तथा तद्भगवतो **मायामयमिति** गद्ये रमोपास्यत्वं चोच्यते। तदुभयं प्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **कामदेवेति** । भागवते रमादेवीत्युक्त्या बहिष्ठरमारूपमेव कामांतर्गतविष्णुर्गृह्यते। तदा रमाशब्देन लक्ष्मीरेव गृह्यते। यदा तु विष्णुप्रतिमाभूतकामः कामपदेन रमाप्रतिमाभूत रतिरेव लक्ष्यत इति सूचितो भवति। तेन ग्रंथांतरोक्तं रतेः कामोपासकत्वं समाहितं भवति। सूचितमेवार्थं स्पष्टमाह ॥ **कामदेवमिति** । अपिरवधारणे। रतिरेव विष्णोः प्राकृतां तनुं प्रतिमां कामदेवमुपास्ते। तु विशेषेण कामांतर्गतं विष्णु चेति चार्थः। प्राकृतां तनुमित्यनेन भगवान्कामदेवस्वरूपेणत्यैक्योक्तेस्तात्पर्यार्थ उक्तो भवति ॥ १५ ॥ **यं लोकपाला इति** श्लोके लोकपाला इंद्रादयो देवा मत्सरज्वरा मत्सराख्यज्वरवंतः संतो यं हित्वा यतंतोऽपि द्विपदादिकं पातुं न शेकुरिति देवानां हरिणा सह स्पर्धाख्यमत्सरा उच्यंते। सोऽनुपपन्नः। हरिभक्तानां हरिमात्सर्यस्य प्रमाणबाधितत्वादित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **स्पर्धत इति** । यत्र कुत्रचिद्देशे यत्र क्वापि काले। तुरवधारणे। दैत्यावेशादित्यनेन संबध्यते। स्पर्धत इव न तु स्वभावतः स्पर्धत इत्यर्थः। कुतो न स्वभावत इत्यत आह ॥ **हरेरेवेति** । अथवेति निपातसमुदायः पक्षांतरे ॥ २७ ॥ **यद्रूपमेतदिति** श्लोके एतद्विश्वमयथोपलभनादयथार्थादुपलंभनाज्ज्ञानात्तद्विषयत्वान्निजमायया निजाविद्ययाऽर्पितं कल्पितमिति जगतोऽविद्याकल्पितत्वे हेतुप्रतिपादकत्वेनायथा

पलंभनादित्येकमेव पदमिति भ्रांतिनिरासाय तस्यान्वयप्रदर्शनेन भिन्नपदत्वं प्रदर्शयन्विवक्षितमर्थमाह ॥ उपलंभनादिति । अन्यथा भवत्यशाश्वतमित्यर्थः । अनेनेदं भिन्नं पदं विश्वविशेषणमित्युक्त भवति ॥ ३१ ॥ जरायुजामिति श्लोके हरिर्यतः कारणादेको जरायुजाभिन्नोऽतो जरायुजं स्वेदजमित्यभिधेयोऽभिधावानिति जरायुजाद्यैक्येन जरायुजादिजीवत्वमुच्यत इति भ्रांति निरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ सर्वांतर्यामकत्वाविति । तुरवधारणे । अवधारणव्यावर्त्यं ॥ न त्विति । ननु तर्हि यद्रूपमिति जगतो हरिरूपत्वव्यवहारः कथमित्यत उक्तं ॥ रूपत्वमिति ॥ ३२ ॥ यस्मिन्नसंख्येयेति श्लोके यस्मिन्हरौ वादिभिरियं संख्या कल्पिता तस्मै नम इत्यन्वयपूर्तेर्यया तत्त्वदशेति यच्छब्दस्य प्रकृतेऽन्वयो न दृश्यते । तथा संख्या केति न ज्ञायते । विनीयत इत्यस्य केनान्वय इति च न ज्ञायते । अतः संख्यास्वरूपं विनीयत इत्यस्य संख्येत्यनेनान्वयं विवक्षितमर्थं च दर्शयन्यच्छब्दस्याध्याहृतेनान्वयं च दर्शयति ॥ दशेति । अनेनैवं श्लोकयोजना सूचिता । संख्या दशावतारा इत्यादिका संख्या यया तत्त्वदृशा विनीयते विशेषेण नीयते प्राप्यते विषयीक्रियते तज्ज्ञानं सो तत्त्वदृक् तत्स्वरूपमेव तस्य जीवस्य स्वरूपमेव । एव स्वरूपज्ञानविषयसंख्याऽसख्येयविशेषनामरूपाकृतौ यस्मिंस्त्वयि कविभिः कल्पिता तस्मै नम इति ॥ ३३ ॥ यस्य स्वरूपमिति श्लोके क्रियार्थैः क्रियारूपैरर्थैरीरित उक्त आत्मा स्वरूपं यस्येत्यर्थानां भगवद्वाचकत्वमुच्यते । तदसत् । अर्थानां वाचकत्वेन वाचकत्वासंभवादित्यतस्तदनूद्य व्याचष्टे ॥ क्रियार्थैरिति । अनेन क्रिया यज्ञादिक्रिया अर्थः प्रयोजनं येषामिंद्रादिनाम्नां तानि तथा तैरिति तस्य विग्रहः सूचितो भवति ॥ ३६ ॥ द्रव्यक्रियेति श्लोके द्रव्यादीशकर्तॄणां मायागुणैरित्यनेन प्रकृति विकारसत्त्वादिगुणैक्यमुच्यत इति भ्रांतिनिरासाय तदनूद्य व्याचष्टे ॥ मायागुणैरिति । अनेन मायाया गुणा मायागुणभूता अप्रधानास्तदनुसारिण इत्यर्थ उक्तो भवति । द्रव्यक्रियाहेत्वित्यादिवाक्ये कर्तृभिरिति बहुवचनेन पृथक् पृथग्द्रव्यक्रियादेर्बहव

ईशा इति प्रतीयते । ते क इति च न प्रतीयत इत्यतस्तत्प्रतीत्यप्रतीतिनिरासाय प्रमाणेनैव तदर्थमाह ॥ द्रव्येश इति ॥ ३७ ॥
इति श्रीभागवततात्पर्यटिप्पण्यामष्टादशोऽध्यायः ॥ ५—१८ ॥ ॥

॥ हरिः ॐ ॥ **सुरोऽसुरो वाऽथेति** श्लोके योऽसुरोऽपि सर्वात्मना हरिं भजते सः संसारान्मुच्यते इत्यसुरस्य हरिभजनं मोक्षश्चोच्यते। तदसुरा भगवद्द्वेषात्तमो याति विनिश्चयादित्यादिप्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **यस्य सम्यगिति**। अनेन सु सुखं न भवति येभ्यः पापेभ्यस्तान्यसूनि तेषु रमत इत्यसुरमत इत्यसुरपदेनाभक्ष्यभक्षणादिसर्वपापकृदेवोच्यते न तु भगवद्द्वेष्यसुर इत्युक्तं भवति । अपि चेत्सुदुराचारो भजते मामनन्यभागित्यादिगीतावचनमत्र प्रमाणं ॥ ८ ॥ ननु यदि पापकृतो हरिभजनं मोक्षसाधनं स्यात्तर्हि यथैहिकामुष्मिककामलंपट इत्युत्तरत्र यो विद्वान्सुतादिषु ।चितयन्कलेवरात्ययाच्छकेत केवलं तस्य हरिभजनादिरूपः श्रम एव केवलमिति हरिभजनस्य श्रमत्वोक्तिरयुक्ता स्यादित्यत आह ॥ **यो ममत्वादिनेति** । ममत्वादिना यो दोषो हरिभजनस्य श्रमत्वरूपो दोषस्तत्प्रतिपादकशब्दः स त्वन्यविषयो गीताभाष्योक्तडांभिकादृढभक्तिविषय इत्यर्थः ॥ १४ ॥ **कल्पायुषां स्थानेति** श्लोके माप्ता नृजातिमिति श्लोकस्य च व्याख्यानेऽर्थात्सर्वदेवानां मोक्षार्थं भारते जन्मेच्छा प्रतीयते । सा एकांतानां न कस्यचिदित्यादिप्रमाणबाधितोऽतः प्रमाणेनैव तदभिमेतार्थमाह ॥ **अनधिकारिण इति** । अधिकारिण आधिकारिकाः । उद्रेकार्थे । हरिभक्त्यादेरिति शेषः ॥ २३–२५ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामेकोनविंशोऽध्यायः ॥ ५–१९ ॥

॥ हरिः ॐ ॥ **यासां जलस्पर्शनविधूतेत्यादि** षट्सु गद्येषु प्लक्षादि षड्द्वीपस्थपुरुषैः सूर्यसोमादीनां भगवदादिशब्दप्रयोगाद्विष्ण्वैक्येन स्वातंत्र्येण चोपास्यत्वमुच्यत इति भ्रांतिर्भवति । तन्निरासाय प्रमाणेनेव तत्तात्पर्यार्थमाह ॥ **सूर्यसोमाग्नीति** । वारिवारीशो वरुणः । ईरो वायुः । विधातृषु स्थितं । हारिमिति संबंधः॥५॥ **पूर्वमंडोदे पूरणं चैव व्यत्यासं क्षीरसागरे** । **विनैवे-**

त्यनेन ग्रंथांतरोक्तमेव दधिमंडादक्षीरादयाः पूरण ग्राह्यमित्युक्तं । तत्र भागवतस्थो दधिमंडादशब्दः क्षीरादार्थकः । क्षीरादशब्दो दधिमंडोदार्थक इति सूचितं । तत्र कया वृत्त्या तौ शब्दौ तदर्थावित्याकांक्षायां गौण्या वृत्त्येत्यभिप्रेत्य सिंहावलोकनन्यायेनाभिधानेनैव तयोः शब्दयोस्तत्र गौणीवृत्तिं दर्शयति ॥ अनाम्लमिति । तुविशेषे । अत्र क्षीर शब्दमुख्यार्थक्षीरमधुरत्वगुणयोगो दध्नि । दधि शब्दमुख्यार्थदधिस्थनिबिडत्वगुणयोगः क्षीर उक्तो भवति ॥ ३० ॥ इति श्रीभागवततात्पर्यटिप्पण्यां विंशोऽध्यायः ॥५—२०॥

॥ हरिः ॐ ॥ केचनैतज्ज्योतिरिति गद्ये शिशुमारः सम्यगवस्थानं यस्य वासुदेवस्य स तथोक्तस्तस्येति शिंशुमारस्य विष्णुस्थानत्वं ततो भेदश्चोच्यत इति भ्रांतिनिरासाय प्रमाणेनेव तद्व्याचष्टे ॥ ज्ञानानंदेति । अथशब्दो मंगलार्थः । विष्णो विशेषणं । शिंशुमारवपुषीत्यनेन शिंशुमारस्य संस्थानमिव संस्थानमाकारो यस्य वासुदेवस्येति विग्रहः सूचितो भवति ॥ २३ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां द्वाविंशोऽध्यायः ॥ ५—२२ ॥

॥ हरिः ॐ ॥ तस्येदं क्षितिमंडलं भगवतोऽनंतमूर्तेः सहस्रशिरस एकस्मिन्नेव शीर्षणीति प्रकृतशेषस्य स एव भगवान् अनंतोऽनंतगुणार्णव इत्यारभ्यैवंप्रभावो भगवाननंत इत्यंतग्रंथेन माहात्म्यमुच्यते । तत्रानंतगुणार्णवत्वा स्वतंत्रत्वादिकं शेषे प्रमाणबाधितमतस्तत्प्रतिपादकस्य भागवतस्याप्यप्रामाण्यमेव स्यादित्यतः पूर्वं प्रमाणोक्तमेव समाधानं स्मारयति ॥ इलावृतस्थेति । पातालमूलस्थस्यानंतस्य स्तुतिः स एव भगवाननंतोऽनंतगुणार्णव इत्यादिका स्तुतिरनंतविषयानंतांतर्गतविष्णु विषये योजनीयेत्यर्थः । अत्र प्रमाणं तु जीवव्यपेक्षया चैव तथांऽतर्याम्यपेक्षयेत्यादिकं पूर्वोक्तमेव ज्ञातव्यं ॥ ३३ ॥ ४५ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां त्रयोविंशोऽध्यायः ॥५—२३ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितश्रीमद्भागवततात्पर्य निर्णयस्य टीकायां प्रबोधिन्यां छलारीनारायणाचार्यविरचितायां पंचमः स्कंधः समाप्तः ॥ ५ ॥ छ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ वेदप्रणिहित इति श्लोके वेदो नारायणः साक्षादित्यनेन शब्दरूपजडवेदस्य नारायणैक्यमुच्यते । तत्तु प्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ वेदानामिति । प्रथमो वक्ता मुख्यवक्ता । आदिवक्ता चेत्यर्थः । अनेन नारायणः साक्षान्मुख्यः प्रथमश्च । वेदो वेदवक्तेति भागवतवाक्यं व्याख्यातं भवति ॥ ४० ॥ इति श्रीभागवततात्पर्यटिप्पण्यां प्रथमोऽध्यायः ॥ ६-१ ॥ ॥

॥ हरिः ॐ ॥ सांकेत्यमिति श्लोके यो हेलनं हरिनिंदां कुर्वन्वैकुंठनामग्रहणं करोति तस्य तन्नामग्रहणमशेषाघहरं विदुरिति निंदकाभक्तस्यापि हरिनामग्रहणमशेषाघहरत्वेनोच्यत इति भाति । तदयुक्तं । तथात्वेऽसुरादीनामपि सर्वपापाभावः स्यात् । ततश्च मोक्षः स्यादित्यतोऽपेक्षिताध्याहृतेनान्वयं दर्शयंस्तात्पर्यार्थमाह ॥ नारायणोऽयमिति । इत्यनेन प्रकारेणान्यहेलनविषयत्वेन हरेरन्यस्य हेलनं निंदाविषयो यस्य वैकुंठनाम्नस्तथा तस्य भावस्तत्त्वं तेन । अन्यानिंदयोक्तमपि हरिनामाघहरमित्यर्थः । अत्र हेलनविषयेनेत्युक्त्या भागवते हेलनशब्दो हेलनविषयत्वार्थकः । सप्तसु प्रथमेति महाव्याकरणसूत्रात्प्रथमा तृतीयार्थेति सूचितं । एवमेव भागवतस्थसांकेत्यादिशब्दार्थोऽपि ज्ञातव्यः । ननु हरेः प्रकृतत्वाद्धरिहेलनमभक्तस्यैवेत्यभक्तस्य जरासंधादेरपि हरिनाम ग्रहणेन सर्वपापनाशः स्यात् । स च प्रमाणबाधितोऽतोऽन्यपदाध्याहारेण व्याख्यानं युक्तमित्याशयवान् हरिभक्तिपूर्वकोदाहृतहरिनाम्न एवाघहरत्वं न त्वभक्त्योदाहृतहरिनाम्न इत्यत्र प्रमाणमाह ॥ सर्वथेति । उदाहृतमित्युभयत्र संबध्यते । फलदात् पापनाशरूपफलदात् । ननु यद्येवं तर्हि भक्तस्य सांकेतिकादि हरिनामग्रहणेऽपि भक्तिपूर्वं न भवतीति न पापहरं स्यादित्यत आह ॥ नामेति । यतः कारणाद्भक्तस्य हरिभक्तस्य संकेतादावपि विषये तस्य हरिनाम्नः सांकेतिकादिहरिनाम्नः स्मरण तस्य हरेर्नाम स्वामितया नाम स्वामित्वेनैव जायते । न तु हर्यन्यस्वामित्वेन । अतः कारणाद्भक्तस्य संकेतादावपि नामकीर्तिर्हरिनामकीर्तिरघहरत्वेनेरितेत्यर्थः ।

हरिभक्तो यदा संकेतादौ हरिनाम गृह्णाति तदाऽस्य नाम्नो हरिरेव स्वामी मुख्यप्रतिपाद्यो न त्वन्य इत्येवं स्मृत्वा हरिनाम गृह्णात्यतो हरिभक्तस्य संकेतादावपि हरिनामकीर्तनं भक्तिपूर्वकमेवेति तदघहरं भवतीति भावः ॥ १४ ॥ म्रियमाणो हरेरिति श्लोके पुत्रोपचरित हरेर्नाम गृण्हन्नजामिलोऽपि हरेर्धामागात् । श्रद्धया हरिनाम गृण्हन्हरिधाम गच्छतीति किमुत किमुवक्तव्यमित्युक्त्याऽजामिलस्य भक्त्या हरिनामकीर्तन नास्तीति भ्रांतिर्भवति । तां परिहरति ॥ अजामिलोऽपीति । अनेनापिशब्दो गर्हायां । वृषलीसंगादिना गर्हितोऽप्यजामिलः पुत्रोपचरितं हरेर्नाम श्रद्धया गृण्हन्हरेर्धामागात् । अगर्हितः श्रद्धया हरिनामगृण्हन्हरिधामगच्छतीति किमुतेति भागवतवाक्यं व्याख्यातं भवति ॥ ५२ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां द्वितीयोऽध्यायः ॥ ६–२ ॥

॥ हरिः ॐ ॥ परो मदन्य इति श्लोके ओतं प्रोतं पटवदित्यस्य पटेन तुल्यं वर्तत पटवत् । पटा यथोपादानतंतुष्वोतः प्रोतश्च । तथा विश्वं यत्र हारावोतं प्रोतमित्यर्थभ्रांतिनिरासाय स्वयं तदनूद्य प्रमाणेनैव व्याचष्टे ॥ ओतमिति । सहस्रसूत्रत्वादिलक्षणयुक्ताः पटाः कंथापटशब्देनोच्यंते । भागवते पटवदिति पटमात्रे उक्ते साति व्याख्यारूपे प्रमाणवाक्ये यत्कंथापदग्रहणं तन पटस्य तंतुभिरभिन्नत्वेन तंतुष्वोतत्वाद्यसंभवान्न दृष्टांतत्वमिति शंका परिहृता भवति । कंथापटस्यापादानातिरिक्ताः सहस्रतंतवः पटादत्यंतभिन्नाः संति । तत्र पटस्योतत्वादिकमस्त्यतो दृष्टातत्वमुपपन्नमिति ॥ १२ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां तृतीयोऽध्यायः ॥ ६–३ ॥ ॥

॥ हरिः ॐ ॥ न यस्य सख्यमिति श्लोके यथा गुणो रूपादिर्गुणिनो पटादेः सख्यं न वेत्ति । तथा पुरुषो जीवा यस्य हरेः सख्यं न वेत्तीत्यर्थभ्रांतिनिरासाय दृष्टांतवाक्यमनूद्य यथावद्व्याचष्टे॥ गुण इति । पुरे राजपुरे तिष्ठतीति पुरस्थः । गुणभूतोऽप्रधानो भृत्यः । स्वोक्तार्थे प्रमाण दर्शयंस्तेनैव प्रमाणेन सर्वश्लोकं व्याचष्टे ॥ यथा राज्ञ इति । आत्मनः स्वस्य राज्ञः प्रियत्वं

राजप्रीतिविषयत्वं । न च नैव वेदेत्यर्थः ॥२४॥ ननु देहोऽसव इति श्लोके देहादीना स्वपरविषयज्ञानं निषिध्यते । स निषेधोऽयुक्तः। तेषां जडत्वेन ज्ञानप्राप्तेरेवाभावादप्राप्तस्य निषेधायोगादिति चेत् । उच्यते । नात्र देहादिशब्दा जडदेहादिवाचकाः किंतु तदभिमानिदेवतावाचकाः । अतो न कश्चिद्दोष इत्याशयवान्प्रमाणेनैव तदभिमानिनो दर्शयंस्तेनैव प्रमाणेन पुमानित्यस्य मनुष्यादिजीववाचकभ्रांतिं निवारयन्सर्व श्लोकं व्याचष्टे ॥ देहमानीत्यादिना । रुद्रोऽनःकरणात्मक इत्यनेन भागवतस्थमनव इति व्याख्यातं भवति । मनु अवबोधन इति धातोर्मनुशब्दो ज्ञानार्थकः । तेन तदुपानांतःकरणगृहीतेः । स्वात्मानं स्वस्वरूप परस्परस्वरूपं च । सोऽपि चतुर्मुखोऽपि हरिं सम्यङ्न वेद । सैत्र स एव नारायण एव सम्यक् सर्व विदित्यर्थः। सैवेत्यत्र सोऽचि लोपेचेत्पादपूरणमिति व्याकरणसूत्रेण सुलोपेन संधिर्भवति । अत्र देहमानीत्यादि तात्पर्यसार्धश्लोकेन भागवतश्लोकस्य पूर्वार्ध व्याख्यातं भवति । जीवाभिमानीत्यादि तात्पर्यश्लोकेनोत्तरार्ध व्याख्यातं भवति । तत्र पुमानित्यस्यार्थः ॥ जीवाभिमानी ब्रह्मेति । सर्व वेद गुणाश्चेत्यस्यार्थः ॥ सर्वं वेदेति । न वेद सर्वज्ञमित्यस्यार्थः ॥ सोऽपि वेद हरिं नैवेति । सर्वज्ञमित्यस्यार्थः ॥ सम्यक् सैव हि सर्वविदिति ॥ २५ ॥ यदोपरमो मनस इति श्लोके यदा मनस उपरमो भवति । तदा यः केवलया संस्थया ईयते ज्ञायत इत्यन्वयभ्रांतिनिरासाय तथा नामरूपस्य दृष्टिस्मृतिसंप्रमोषादित्यस्य विवक्षितार्थप्रतीत्यन्यथा प्रतीतिनिरासाय वाऽपेक्षिताध्याहारेण स्वयं श्लोकस्थपदाना विवक्षितार्थान्वयार्थौ दर्शयति ॥ केवलयेति । नामरूपरूपस्य दृष्टिस्मृतिसंप्रमोषादित्यस्यार्थः ॥ स्वप्नसुषुप्त्यादाविति । अत्रादिपदेन लयो ग्राह्यः । जीवस्यास्वातंत्र्यदर्शनेऽपीत्यारभ्य तन्नियामकोऽस्तीत्यंततात्पर्यवाक्यमपेक्षिताध्याहाररूपं ज्ञेयं । ईयत इत्यस्यार्थः ॥ ज्ञायत इति। अनेन रामनामरूपरूपस्य नामात्मकस्य रूपरूपात्मकस्य बाह्यप्रपंचस्य दृष्टिस्मृत्योरनुभवस्मरणयोः संप्रमोषोऽपहारोऽभावो यस्मिन्स्वप्नादौ स तथेति विग्रहः सूचितः । पंचमी

सप्तम्यर्थेति सूचितं भवति। कवलयेत्यनेन स्वसंस्थाया अमिश्रितत्वमुक्तं। तत्केनेत्यपेक्षायामाह॥ जीवेच्छेति। अनेन कवलयेत्यस्य स्वप्नादौ हरिस्थातव्यमिति जीवस्येच्छाभावेऽपि विद्यमानयेत्यर्थ उक्तो भवति। स्वोक्तार्थे प्रमाणमाह॥ यदोपराम इति। अत्र स्वप्नसुप्तिलयादिष्वित्यादिपदेन मूर्छा गृह्यते। अवस्था स्वप्नाद्यवस्था। यदातदेति हेत्वर्थे कालार्थे चापि भण्यत इति तृतीयस्कंध तात्पर्योदाहृताभिधानाद्यदातदाशब्दौ हेत्वर्थौ। यदा यस्मात्कारणात्स्वप्नसुषुप्तिलयादिषु जीवप्रवृत्त्यनानुकूल्याज्जीवस्य प्रवृत्ते रिच्छारूपप्रवृत्तेर्न विद्यते नानुकूल्यं यस्मिन्हरिसंस्थाने तत्तथा। तस्माज्जीवेच्छाभावेऽपि विद्यमानहरिस्थितेर्मनस उपरमो भवति। तदा तस्मात्कारणात्तदा स्वप्नाद्यवस्थायां जीवस्यास्वातंत्र्यादस्वातंत्र्यदर्शनादेवावस्थाप्रबोधादिदर्शनाचावस्थाप्रबोधादिकारणत्वेन जीवादन्यस्तन्नियामकोऽसौ केशवो विद्यत इति ज्ञायत इत्यर्थः। अनेन यदा यस्मात्कारणात्केवलया स्वप्नादौ हरिणा स्थातव्यमिति जीवेच्छाभावेऽपि विद्यमानया स्वसंस्थया स्वस्य स्वतंत्रस्य हरेः संस्थया स्वप्नादौ स्थित्या। नामरूपरूपस्य शब्दात्मकस्यार्थात्मकस्य बाह्यप्रपंचस्य दृष्टिस्मृतिसंप्रमोषात्। सप्तमी पंचम्यर्थे। अनुभवस्मरणरूपज्ञानाभाववति स्वप्नसुषुप्त्यादौ मनस उपरामो भवति। तस्मान्मनस उपरामात्कारणाज्जीवस्यास्वातंत्र्यं दृश्यते। स्वप्ने प्रबोधादिकं च दृश्यते। तदन्यथाऽनुपपत्त्या तस्य स्वप्नप्रबोधादेर्नियामकत्वेन या हरिरीयते तस्मै हंसाय नम इति भागवतवाक्यं व्याख्यातं भवति। ननु स्वप्नसुषुप्त्यादौ मनस उपरमादित्याचार्यवाक्ये यदोपरमो मनस इति हरिवंशवाक्ये च यः स्वप्नादौ मनस उपरम उक्तः सोऽयुक्तः। मनस उपरमो नाम निर्व्यापारत्वं। तस्य सुप्त्यादौ संभवेऽपि स्वप्नमूर्छयोरसंभवात्। स्वप्ने वासनारूपमनसो गजाद्याकारेण व्याप्तत्वाद्दुःखमात्रपरिस्मृतेरिति प्रमाणान्मूर्छायां दुःखकारणे मनसो व्याप्तत्वात्। न च मनसो निर्व्यापारत्वं नाम ज्ञानाकारणत्वं तच्च स्वप्नमूर्छयोरस्तीति वाच्यं। सुधाकारैः स्वप्नाधिकरणे। सत्कारैर्भगवानेव सृष्ट्वा नानाविधं जगत्। स्वप्नकाले दर्शयतीत्यनुव्याख्यानव्याख्यानकाले दर्शनसाधनं मन एव वक्ष्यतीत्युक्त्वा चिदचिन्मिश्रभेदै

तन्मनो यावच्च संसृतिः। तेनावस्था इमाः सर्वा जीवः पश्यति सर्वदेत्यनुव्याख्यानव्याख्यानावसरे केवलं स्वप्ने किंत्विमाः सांसारिकीः सर्वा अप्यवस्थास्तेन मनसैव सर्वदा जीवः पश्यतीति स्वप्ने मनसो कारणस्यैवोक्तत्वात् । अत उक्तमयुक्तमिति चेन्न । अत्राभिप्राय-सद्भावात् । अत्र मनस उपरमो नाम ज्ञानाकारणत्वमेव विवक्षितं । तच्च स्वप्ने नामरूपात्मकबाह्यप्रपंचमात्रज्ञानाकारणत्वाभिप्राये णोक्तं । सुप्तिलयमूर्छासु तु नामरूपात्मकबाह्यांतरप्रपंचज्ञानाकारणत्वाभिप्रायेणोक्तमता न कश्चिद्दोष इति ॥ २६ ॥ मनीषिणोऽ तरिति श्लोके त्रिवृद्भिर्नवभिश्च स्वशक्तिभिरित्यनेन त्रिविधा नवविधाश्च स्वशक्तय उक्तास्ताः का इति जिज्ञासायामादौ त्रिविधाः शक्तीः स्वयं प्रदर्श्य तत्र प्रमाणं वदंस्तेनैव प्रमाणेन नवविधशक्तीश्च दर्शयन्नन्यच्च प्रमेयं दर्शयति ॥ इच्छादीति । आदिपदेन ज्ञानप्रयत्नौ ग्राह्यौ । विमलाद्या इत्यत्राद्यपदेनोत्कर्षणी ज्ञाना क्रियायोगाः प्रव्ही सत्या ईशाना अनुग्रहाश्च ग्राह्याः । ताभ्यो विष्णुस्वरूपभूतविमलादिशक्तिभ्यः । अन्यासां विमलादिशक्तीनां । अभिमानिनस्तन्नामिका जीवास्ते विष्णोः प्रसादादेव तत्समीपगाः । विष्णुस्वरूपभूतविमलादिशक्तिसमीपगा इत्यर्थः । तस्मिन्नेव श्लोके पांचदश्यमित्यस्य पंचदशाना भावः पांचदश्य-मित्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तत्पदं द्वेधा व्याचष्टे ॥ दशेंद्रियाणीति । प्रधानकोऽव्यक्ततत्त्वं । अत्रैषा चतुर्दशानां सकाशात्परम इत्यनेन भागवते पाचदशमित्यत्र तस्य पूरणे मडिति सूत्रेण पूरणार्थक मत्प्रत्यये वक्तव्ये साति व्यत्ययोऽतिशयकुत्स नाभेदेष्विति महाव्याकरणसूत्रप्रमाणादतिशयद्योतनार्थं व्यत्ययेन ताद्धितो यञ्प्रत्यय उक्त इति सूचितं । तेन पंचदशसंख्यापूरक उत्तमः पांचदश्य इति पदव्युत्पत्तिः सूचिता भवति । अथवेत्यन्वयः बुद्धेर्भेदेन मनोऽहंकारचित्तचेतनाबुद्धिरूपभेदेन सहितेष्वेतेषु दशेंद्रियेषु संस्थितः पांचदश्यो हरिरित्यर्थः । अनेन पंचदशसु भवः स्थितः पांचदश इति पदव्युत्पत्त्यंतरं सूचितं । तथा भवार्थे ताद्धित इति सूचितं भवाति ॥ २७ ॥ स वै ममाशेषेति श्लोके अशेषा विशेषा ज्ञानानंदादयश्च माया इच्छा चाशेषविशेषमायाः।

तासां निषेधो यस्मिन्हरौ स तथा । स चासौ निर्वाणसुखानुभूतिश्चेत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव तदर्थमाह ॥ इयत्तेत्यादिना । अनेनाशेषश्चासौ विशेषश्चेयत्ता च माया प्रकृतिश्चाशेषविशेषमाये । तयोर्निषेधो ययोः सुखानुभूत्योस्तेऽशेषविशेषमायानिषेधे । निर्वाणे शरीरकारणके च ते सुखानुभूतिश्च निर्वाणसुखानुभूती । अशेषविशेषमायानिषेधे निर्वाणसुखानुभूती यस्य स तथेति विग्रहः सूचितो भवति । तस्मिन्नेव श्लोके विश्वरूप इत्यस्य हरिजगदैक्यार्थत्वभ्रांतिं प्रमाणेन परिहरंस्तेनैव प्रमाणेन सर्वनामेत्यस्यार्थं चाह ॥ तद्रूपेति । यतः कारणात्सर्वजगतो रूपं स्वरूपं तद्रूपसदृशं तस्य हरेः रूपेण सदृशं किंचित्सादृश्ययुक्तं । तस्मात्कारणाद्धरिः सर्वस्वरूप इत्युच्यते । यतः शब्दमुख्यार्थोऽतः सर्वनामक इत्यर्थः ॥ २८ ॥ यद्यन्निरुक्तमिति श्लोके यद्यद्वचसा निरुक्तं धियाऽक्षिभिर्वा उत मनसा निरूपितं तत्तद्यस्य हरेः स्वरूपं मा भूदिति हरिस्वरूपस्यानिरुक्तत्वादिकमुच्यते । तच्च सर्वथा भ्रांतिरिति निरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ अलौकिकत्वादिति । अलोकिकत्वाल्लोकवत्साकल्येन निर्वक्तुं निरूपयितुं अशक्यत्वादित्यर्थः ॥२९॥ यस्मिन्यतो येनेति श्लोके सप्तमी विभक्त्यंतपदानामधिकरणादिभिन्नकारकवाचकत्वभ्रांतिं यथाशब्दस्य दृष्टांतार्थत्वभ्रांतिं च निवारयन्नन्वयं च दर्शयति ॥ सप्तेति । स्वोक्तार्थे प्रमाणमाह ॥ विभक्त्यर्थस्येति । एवशब्दः सर्वसत्ताप्रदत्वत इत्यनेन संबध्यते सर्वसत्ताप्रदत्वत एव एक इत्युच्यते । न तु द्वितीयाभावादेक इत्युच्यते इत्यर्थः । एवमनन्यदेकमित्यत्रैकशब्दमेकेन प्रकारेण प्रमाणेन व्याख्यायेदानीमनन्यादितिपदस्याव्याख्यानत्वात्प्रमाणेनैव तदर्थं दर्शयंस्तेनैव प्रमाणेनैकशब्दस्यार्थांतरमाह ॥ अनन्य इति ॥ ३० ॥ अस्तीति नास्तीति चेति श्लोके तत्पर ब्रह्मास्तीति नास्तीति भिन्नविरुद्धधर्मयोर्भिन्नौ च तौ विरुद्धौ च तौ धर्मौ च तयोः सत्त्वासत्त्वरूपयोर्धर्मयोरपेक्षितामिति सत्त्वासत्त्वधर्मापेक्षितत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ मदन्य इत्यादिना । उभयोरासुरदैवमतरूपयोर्निषेधविध्योर्व्यपेक्षितो विशेषणापेक्षितो विषया हरेरेव हरिमेव

विषयीकृत्य मतद्वयं प्रवृत्तमित्यर्थः । उच्चनीचयोः स्थानयोश्च कारणमित्यन्वयः । अनेन मदन्यः सर्वेशोऽस्तीति नास्तीति च प्रकारेण वस्तुनिष्ठयोर्देवासुररूपवस्तुषु विद्यमानयोरेकस्थयोरेकास्मिन्हरौ विषये विद्यमानयोर्भिन्नविरुद्धधर्मयोर्भिन्नौ विरुद्धौ धर्मौ ययोर्मतयोस्ते तथोक्ते तयोरपेक्षितं ब्रह्मेति भागवतवाक्य व्याख्यातं भवति ॥ ३२ ॥ योऽनुग्रहार्थं भजतामिति श्लोके वस्तुतोऽनामरूपो भगवान् जन्मकर्मभिर्नामानि रूपाणि भेज इति वस्तुतो नामरूपरहितस्य हरेर्जन्मभिः शुक्लादिरूपाणि कंसहननादि- कर्मभिः कंसारिरित्यादिनामानि जातानीति हरिरूपनाम्नामनित्यत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ तत्कर्मणामित्यादिना । कंसार्यादिनामार्थभूतकंसहननादिकर्मणां । तत् तत्र मूलरूपे लोकैरदृष्टत्वादनामापि कृष्णादिरूप स्यादर्शनादरूपश्च हरिरवतारेण तान्येव रूपकर्माणि दर्शयेत् । अतो नित्यरूपोऽपि नित्य कर्मापि हरिर्लोकानां तद्रूपकर्मणोरव्यक्त त्वमपेक्ष्य त्वपेक्ष्यैवारूपाकर्मेत्युदितो रूपकर्मार्थकनामभ्यां रहित इत्युदितः । न तु कर्मरूपोज्झितेरित्यर्थः । एवमेकेन प्रकारेण हरेरनामरूपत्वं प्रमाणेनोपपाद्य प्रकारांतरेणाप्यनामरूपत्वं प्रमाणेनैवोपपादयति ॥ अनामा स इति । अधिकार्थत्वात् । नारा- यणादिनाम्नामिति शेषः । अव्यक्तत्वात्साकल्येन व्यक्तत्वाभावात् । रूपस्येति शेषः । अनेनाल्पार्थकनामरहितत्वादनामा । साकल्येन व्यक्तरूपरहितत्वादरूप इति भागवतपदं व्याख्यातं भवति । अनामा सोऽधिकार्थत्वादित्युक्तं । हरिनाम्नामधिकार्थत्व लोकदृष्टयविषयार्थत्वेनैवं ज्ञेयं । तत्तु सर्वहरिनाम्नामस्तीत्यभिप्रेतार्थं प्रमाणेनाह ॥ लोकदृष्टेति । मूलनामानि मूलरूपस्थ- ब्रह्मनारायणादिनामानि । लोकदृष्ट्याऽधिकार्थानि लोकदृष्ट्यविषयानंतकल्याणगुणपूर्णत्वाद्यर्थानि । दामोदरादीनि । आदि पदेन मधुसूदनादीनि । लोकदृष्ट्या समानि लोकदृष्टिविषयदामयुक्तोदरत्वाद्यर्थानीत्यर्थः । आनंद आनंदात्मको मूलरूपो हरिरव्य क्तरूप एवोदाहृतः । स एव भक्तानां व्यक्तिमापन्नः सन् प्रादुर्भाव उदीरित इत्यर्थः ॥ ३३ ॥ यः प्राकृतैरिति श्लोके यथाऽ

निलो वायुः पार्थिवं गुणं गंधमाश्रितो विभाति तथा यो हरिजनानां यथाशयमाशयमनतिक्रम्यापेक्षानुसारेण देहगतः सन् प्राकृतैः प्रकृतिरूपमनोविकारैर्ज्ञानपथैर्ज्ञानमार्गैर्विभाति । स मे मनोरथं कुरुतादित्यर्थभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ स्वदेहस्थमिति । अधमास्तु अधमा एव । स्वदेहस्थं हरिं जीवमेव प्राहुः । मध्यमाश्च मध्यमा एव हरिमनिर्णीतं जीवाद्भिन्नमभिन्नं वेति सदिग्धं प्राहुः उत्तमास्तु उत्तमा एव जीवाद्भिन्नत्वादिति विशेषेण विशिष्टं प्राहुः । तारतम्येनेति तृतीया द्वितीयार्थे । तेषु जीवेषु तारतम्यं च प्राहुः । एवं त्रिविधा जना बुद्धिशुद्ध्यनुसारेण हरिं प्राहुरित्यर्थः । जना अधमजनाः । अनेन यथाऽनिलो मुख्यप्राणः पार्थिवं पृथिव्यादिविकारं गुणम प्रधानं देहमाश्रितस्त्रिविधजीवाना श्वासमात्रत्वादित्रिप्रकारैर्विभाति । तथा यो देहगतो हरिर्जनानां त्रिविधजनाना यथाशयं बुद्धिमनतिक्रम्य बुद्धिशुद्ध्यनुसारेण प्राकृतैर्ज्ञानपथैर्जीव एव हरिरिति जीवाद्भिन्नो न वेति जीवाद्भिन्न एव पूर्णानंदादिगुणक एवेति त्रिविध ज्ञानमार्गैर्विभाति त्रिविधज्ञानविषयो भवतीति भागवतवाक्यं व्याख्यातं भवति ॥ ३४ ॥ **ब्रह्मा भवो भवंतश्चेति** श्लोके चतुर्मुखरुद्रादयः सर्वे देवा मम विभूतयोऽणिमाद्यैश्वर्यात्मका इति ब्रह्मादीनां भगवदैश्वर्यैक्यमुच्यते इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **विशेषेति** । विशेषव्यक्तिपात्रत्वाद्विशेषेण हरेरभिव्यक्तिस्थानत्वाद्देवेत्यर्थः । तदंतर्यामिणो ब्रह्माद्यंतर्यामिणः । मत्स्याद्याश्चेति चशब्दस्तदंतर्यामिरूपमत्स्यादिरूपसमुच्चयार्थः । विशेषेणैव भवंति संतीति विभवा इत्यर्थः । अनेन विशेषेण भूतिरुत्पत्तिर्हरेरभिव्यक्तिर्येषु ते विभूतय इति भागवतपदं व्याख्यातं भवति ॥ ४५ ॥ **तपो मे हृदयमिति** श्लोके तपआदिजडानामेव हरिहृदयाद्यात्मकत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ **तपोऽभिमानीत्यादिना** । तनुसमाश्रितास्तनुं सर्वदेहं समाश्रिताः । क्रियात्मा क्रियाभिमानी क्रतवः क्रत्वभिमानिनः । अंगेषु हस्तपादादिषु । प्राणो वायुश्चित्तगतो ब्रह्माद्याः खेषु देवता इति तात्पर्यश्लोकार्धेन मध्यदहार्थस्यात्मशब्दस्य चित्तार्थकत्वमंगीकृत्योभयत्रान्वयमभिप्रेत्यात्मा चित्ताभि

मानी वायुः । असवो हरेः प्राणे स्थिताः । सुरा ब्रह्माद्या असवो हरेः श्रोत्राद्यसुषु स्थिता इति भागवतवाक्यं व्याख्यातं भवति । नन्वेवं चेत्तर्हि तपो मे हृदयमित्यैक्योक्तिः कथमित्याशंकां प्रमाणेनैव परिहरति ॥ यदाश्रितामिति । यत् आश्रयो यस्य तद्यदाश्रयमित्यर्थः । तस्याश्रयस्य नाम यस्मिंस्तत्तन्नामकमित्यर्थः । अनेन तपआदेर्हरिहृदयाश्रितत्वेनामुख्यवृत्त्या हृदयादिनामवत्त्वमेव भागवते उक्तं न तु तदैक्यमित्युक्तं भवति ॥ ४६ ॥ अहमेवेदमासेति श्लोकेऽग्रे सृष्टेः पूर्वं प्रलये इदं जगदहमेव मदात्मकमेवास । किंच किमप्यन्यन्मत्तोऽन्यन्नास । मय्येव सर्वं जगदध्यस्तमिति जगतो ब्रह्मण्यध्यस्तत्वमुच्यत इति भ्रांतिनिरासाय स्वयं तत्तात्पर्यार्थमाह ॥ संज्ञानेति । सप्तमु प्रथमेति महाव्याकरणसूत्राद्भागवतस्थाहंशब्दस्य ममेत्यर्थ उक्तो भवति । संज्ञानमात्रमित्यस्यार्थः॥ संज्ञानमात्रमिति । यदिह त्वयेत्यारभ्य तदैवेत्यंतं वाक्यं भागवते शेषपूरकं । ननु दक्षेण तपसा दृष्टस्य हरिरूपस्य कृतपादः सुपर्णांसे प्रलंबाष्टमहाभुज इत्यादिना साकारस्योक्तत्वात्प्रलये विद्यमानस्य निराकारत्वाद्भगवत्कृतमिदं भागवतवाक्यव्याख्यानमयुक्तमित्याशंकां प्रमाणेन परिहरंस्तेनैव प्रमाणेन नान्यत्किंचेत्यत्रान्यशब्दस्य प्रसुप्तपदस्य च तात्पर्यार्थमाह ॥ नानावर्ण इति । तुः समुच्चये । अत्र सूक्ष्मशब्देनादिसृष्टौ कारणरूपजडजीवाव्याकृताकाशवर्णा विवक्षिताः । एतान् श्रियं च विना तदन्यत् । तस्मान्मद्रूपादन्यत्किंचित्किमपि लये नासीदिति भागवतस्थनकारेणान्वयः कर्तव्यः । तेन भागवतस्थान्यत्किंचेति वाक्यस्यासकुचितजगदर्थत्वभ्रांतिर्निरस्ता भवति । ननु यदि लक्ष्म्यादेर्लयो न स्यात्तर्हि य इदं सर्वं विलापयति स हरिः परः परमात्मा । तेजः परस्यां देवतायामित्यादिश्रुतिस्मृतिविरोधः स्यादित्यत आह ॥ अन्यत्रेति । विष्णोरन्यत्रेत्यर्थः । अन्यदपि कारणजडादिकमपि सूक्ष्मत्वेन स्थानादवस्थानात्स्थूलत्वेनावस्थानाभावाद्धरौ लीनमिष्यत इत्यर्थः ॥ ४७ ॥ मय्यनंतगुण इति श्लोके अनंते नाशरहिते गुणतः सत्त्वादिगुणेभ्योऽनंतविग्रहेऽपरिमितदेहे मयीत्यन्वयार्थभ्रांतिनिरासायानते गुणत इत्यस्य स्वयमन्वयं प्रदर्श्य

प्रमाणेनैवार्थमाह ॥ गुणत इति । हि यस्मात्कारणाद्यद्गुणत आनंत्यं तद्गुणानां प्रत्येकशा निःसीमत्वं तु निःसीमत्वमेवोदीर्यते। ते च ज्ञानानंदादिगुणाश्च सङ्ख्ययाऽनंता उदीर्यतेऽतः कारणाद्विष्णुरनंतगुणो गुणतोऽनंतश्चेत्येवोदीर्यत इत्यर्थः ॥ ४८ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां चतुर्थोऽध्यायः ॥ ६–४ ॥

॥ हरिः ॐ ॥ सनत्कुमारोऽवत्विति श्लोकार्धे सनत्कुमारशब्दस्य चतुर्मुखपुत्रसनत्कुमारभ्रांतिर्भवति । तथा कामदेव शब्दस्य देवताऽर्थत्वसर्वकामार्थत्वभ्रांतिर्भवति । तन्निरासाय प्रथमपदं स्वयमनूद्य प्रमाणेनैव श्लोकार्थं व्याचष्टे ॥ सनत्कुमार इति । अपरं हरिरूपसनत्कुमारादन्यमित्यर्थः । अनेन कामेषु देवः श्रेष्ठः । अयोग्यकाम इति यावत् । तस्मादिति भागवतपदं व्याख्यातं भवति । देवर्षिवर्यः पुरुषांतरार्चनादित्यर्धे वर्यो नारदः पुरुषांतरस्य स्वस्मादन्यस्य पुरुषस्यार्चनादित्यर्थभ्रांतिनिरासाय देवर्षिवर्य इति पदमनूद्य प्रमाणेनैव व्याचष्टे ॥ देवर्षीति । तदनर्पितकर्मभ्यस्तस्य विष्णोरनर्पितकर्मभ्यस्तस्य विष्णोरस्मरणतः । अनेन विष्णुविषयमपि कर्म मध्ये मध्ये विष्णुस्मरणमंते विष्णौ समर्पणं च विना कृतं चेत्तर्हि पापसाधनमिति सूचितं । तथा भागवते पुरुषांतरार्चनपदमन्योपलक्षितमिति सूचितं भवति ॥ १७ ॥ यथा हि भगवानेवेति श्लोके यथा हरिर्भगवानेव भगवदतिरिक्तो हरिर्नास्ति । तथा यत्सदसच्च वस्तु तत्सर्वं भगवानेव । भगवदतिरिक्तं नास्तीति जगतो मिथ्यात्वमुच्यत इति भ्रांति निरासाय स्वयं श्लोकप्रतीकं गृहीत्वा प्रमाणेनैव तं व्याचष्टे ॥ यथा हीति । अनेन भगवान्सत्येन यथार्थेन यथा येन सदादि नियामकत्वप्रकारेण सत् असत् यच्चेति शब्दैरुच्यते तेनैव सत्येन सदादिनियामकत्वप्रकारेण नः सर्वे उपद्रवा नाशयंतु । हरिः सर्वोपद्रवनाशं करोत्विति भागवतवाक्यं व्याख्यातं भवति ॥३१॥ भूषणायुधलिंगाख्या इति श्लोके हरिर्भूषणायुधलिंगाख्याः शक्तीः धत्त इति भगवत्स्वरूपत्वके भूषणादिशब्दाभिधेयत्वमात्रमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ एक

एवेति । एक एव परोऽजो विष्णुर्भूषणायुधेति ध्वजेषु भूषणायुधध्वजेषु तत्तच्छक्तिरूपेण भूषणादेः सत्ताप्रदस्वरूपेण स्वयमेव व्यवस्थितः । स देवः सर्वेश्वरो हरिः । अनेन सत्येन सत्यभूतेन भूषणादिव्यवस्थितत्वेन मां पात्वित्यर्थः । अत्र ध्वजपदेन भागवतस्थलिंगपदं व्याख्यातं भवति ॥ ३२ ॥ नन्वेतद्धारयमाणस्तु यं यं पश्यति चक्षुषेत्यादि भागवतग्रंथोक्तफलमेतद्विद्याधारके पुरुषेऽदर्शनादविद्यमानफलप्रतिपादकत्वेनास्य ग्रंथस्याप्रामाण्यं स्यादित्याशंकां प्रमाणेनैव परिहरति ॥ गुरुशिष्ययोरित्यादिना । गुरुवृत्तेर्गुरुसेवायाः । गुरोः प्रसादादिति शेषः । सदा फलप्रदा यथोक्तफलप्रदा इत्यन्वयः । अन्यथा गुरुशिष्ययोर्योग्यत्वाद्यभावे ॥ ३६ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामष्टमोऽध्यायः ॥ ६-८ ॥

॥ हरिः ॐ ॥ वाय्वंबराग्न्यमिति श्लोके ये ब्रह्मादयो वाय्वाद्यभिमानिनास्त्रिलोकश्च ते वयमुद्विजतः संतो यस्मा अंतकाय बलिं पूजां हरामोऽसावंतको यमो यस्माद्धरेर्बिभेति स हरिस्ततो नोऽशरणं रक्षक इति दक्षिणदिक्पतियमस्य ब्रह्मादिभयप्रदत्वमुच्यते । तत्तु प्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ कालोंऽतक इत्यादिना । अभयाऽपि बिभेतीव तद्वशत्वादित्यनेन श्रियो भयं नाम तद्वशत्वमेव न तु अस्मदादिवद्दुःखहेतुदोषरूपभयमित्युक्तं भवति ॥२०॥ पुरा स्वयंभूरपीति श्लोके वातारविंदांभःशब्दानां जडवायुजलारविंदार्थत्वभ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ यत्रेति । यत्र यस्मिन्प्रलये । आदिपदेनोर्मयो ग्राह्याः । तत्र तस्मिंल्लये ब्रह्मा एक एव सन्नबिभेद्भयमवापेत्यर्थः । विचार्य भयमत्यगादित्येतद्विवृणोति ॥ अंतर्गत इति । चतुर्मुखस्य भयमस्मदादिवद्बहुकालीनमिति भ्रांतिं प्रमाणेन वाक्येनैव परिहरति ॥ जनिष्यतमित्यादिना । चोऽवधारणे । क्षणार्धगा इत्यनेन संबध्यते । अपिशब्दो लय इत्यनेन संबध्यते । ज्ञानादिगुणपूर्णस्य ब्रह्मणो भयादिका धर्मा जनिष्यता जनानां स्वभावानां प्रसिद्ध्ये । क्षणार्धा एव भवंतीव । लयेऽपि ज्ञानादिगुणपूर्णे तस्मिंश्चतुर्मुखे भयादिकाः स्थिरा बहुकालीनाः

कथं स्युरित्यर्थः । न केवलं चतुर्मुखभयादिकं जनिष्यमाणजनस्वभावप्रसिद्ध्यर्थमेव भवति किंतु भगवत्प्रीत्याद्यर्थं च भवतीत्यर्थं प्रमाणेनैव दर्शयाति ॥ भगवदिति । तत्र हेतुः ॥ न वृथेति । तस्य चतुर्मुखस्य कश्चिदपि भावो धर्मो न वृथा स्यादित्यर्थः । एतत्प्रमाणशेषेणैव भयावृत्त्यवधिं दर्शयन्प्रसंगादज्ञानाद्यावृत्त्यवधिं च दर्शयाति ॥ अज्ञानं चेति । चोऽवधारणे । चतुर्वारमित्यनेन संबध्यते । भय च द्विवारमेवेत्यन्वयः । तावद्द्विवारं जात इत्यन्वयः । नान्यत्र । पंचादिवारं नेत्यर्थः । अस्य चतुर्मुखस्य । तत्रापि भयादियुक्तावस्थायामपि । तद्भयादिकं भगवत्प्रीत्यै उत्कर्षाय च भवेदित्यन्वयः । अत्राधिकफलविधानार्थमुन्नतिं भगवत्प्रीतेः कारणत्वं सूचयितुं भगवत्प्रीत्यनुवादः कृतः । अत्राज्ञानं नाम ज्ञानाभाव एव । न तु भ्रमादिरूपं । तस्य सर्वेषां ब्रह्मपदवीयोग्यानां पूर्वमेव तु । अभावस्त्वपरोक्षस्य मोहोऽज्ञानस्य भण्यत इत्यादिप्रमाणबाधितत्वात् । तदज्ञानं चतुर्मुखदिनप्रलयानंतरं सृष्टिकाले पद्माज्जातस्य विरिंचरूपस्य प्रथमं विशेषतः स्वस्वरूपे तदनंतरं पद्मकारणभूते हरौ तदनंतरं सृज्यलोकसंस्थाने चेति त्रिवारं । संवत्सराख्ये विरिंचरूपे यज्ञसाधनविषयकज्ञानाभावश्चैक इति चतुर्वारमज्ञानमिति ज्ञातव्यं । भयमपि महाप्रलयानंतरं सृष्टिकाले पद्मजे विरिंचरूपे एकवारं । संवत्सराख्ये च द्वितीयवारमिति द्विवारं भयं ज्ञातव्यं । नन्वत्र किं प्रमाणमिति चेत् । उच्यते । अत्र चतुर्मुखदिनप्रलयानंतरं सृष्टिकाले पद्मजविरिंचस्याज्ञानत्रये । चतुर्युगानां च सहस्रमप्सु स्वपंस्ततोदीरितया स्वशक्त्येत्यादितृतीयस्कंधभागवतवाक्यमेव प्रमाणं । संवत्सराख्यविरिंचस्याज्ञाने च । इच्छतो विष्णुयजनं ब्रह्मणः साधनास्मृतेः । श्रमात्तापाच्च देहं त्यक्तुमिच्छा बभूव हेत्यादिबृहदारण्यकभाष्योदाहृतमहासंहितावाक्यं प्रमाणं । तथा तस्यैव संवत्सराख्यविरिंचस्य भये । ब्रह्मणो भाणिति वचो निःसृतं भयतो मुखादिति बृहदारण्यकभाष्य एवोदाहृतं भावतत्त्ववचनं प्रमाणं । महाप्रलयानंतरं सृष्टिकाले पद्मजविरिंचस्य भये पुरा स्वयंभूरपि संयमांभसीत्यादिषष्ठस्कंधभागवतवाक्यं । यत्र वायूदपद्मरूपेणेत्यादितत्तात्पर्यार्थप्रतिपादकमाहा

त्स्यवाक्यं प्रमाणं । नन्वेवं चेद्विरिंचस्य पद्मारमज्ञानमुक्तं स्यात् । भयद्वयहेतुभूताज्ञानद्वयसद्भावात् । ततश्च नान्यत्रेत्यवधारणानुपपत्तिरिति चेन्न । भयस्य ज्ञानजन्यत्वस्यानुभवसिद्धत्वेनाज्ञानकार्यत्वाभावात् । अन्यथा सर्पादिज्ञानाभावेऽपि भयं स्यादिति । ननु यस्य पद्मजविरिंचस्य भयं जातं । सः महाप्रलयानंतरकालीनः कुतः । ब्रह्मदिनप्रलयानंतरं सृष्टिकालीन एव किं न स्यादिति चेन्न । ब्रह्मदिनप्रलयानंतरं सृष्टिकालीनपद्मस्य । उदकं वायुना शुष्कं भिन्नं पद्ममभूद्धरेरिति । तस्यासनविधानार्थं पृथिवी पद्ममुच्यत इति च प्रमाणेन भगवत्पादैरुदकाद्यात्मकत्वस्योक्तत्वात् । अस्य पद्मस्य तु यत्र वायूदपद्मादिरूपेण प्रकृतिः स्थितेत्यादिप्रमाणेन तैरेव लक्ष्म्यात्मकत्वस्योक्तत्वात् । न ह्येकस्मिन्काले एकस्यैव पद्मस्य विरुद्धचिदचिदुभयात्मकत्वं संभवति।न च यत्र वायूदपद्मादिरूपेणेत्यादिवाक्यं लक्ष्म्यभिमानित्वप्रतिपादकमिति वाच्यं । अस्य वाक्यस्य भागवततात्पर्यार्थनिर्णायकत्वेनार्थांतरेऽवकाशाभावात् । न चोक्तसृष्टिकालद्वयातिरिक्तसृष्टिकाले विरिंचस्य पद्मजत्वमस्ति । तत्र प्रमाणाभावात् । अतो महाप्रलयानंतरं सृष्टिकालीनपद्मजविरिंचस्य भयमिति ॥ २३ ॥ **वयं न यस्यापीति** श्लोकार्धे पृथगीशमानिनो वयं तस्य हरेर्लिंगं न पश्याम इत्यन्वयभ्रांतिनिरासायापेक्षिताध्याहारेण विवक्षितमन्वयं स्वयमेवाह ॥ **लिंगमेवेति** । एवमन्वयप्रदर्शनेन लिंगपदस्य ज्ञापकार्थत्वं सूचितं । तथा वयं न यस्येत्यत्र नकारस्याध्याहृतस्वरूपपदेन संबंधश्च सूचितो भवति। पृथगीशमानिन इत्यनेनोक्तस्य देवानामभिमानस्यास्मदाद्यभिमानवद्बहुकालीनत्वभ्रांतिं प्रमाणेनैव परिहरति ॥ **कदाचिदिति**। अपिर्गर्हायां । देवानां गर्हितोऽभिमानः कदाचित्तु कदाचिदेवास्ति । प्रायः कालेषु बहुकालेषु नैवास्ति । किंतु सन्निवसन्नेवागर्हित एवाभिमानः प्रायः कालेष्वस्ति । सोऽपि गर्हितागर्हिताभिमानोऽपि तारतम्येन तु तारतम्येनैवास्तीत्यर्थः॥२४॥ **आत्मतुल्यैरिति** श्लोके आत्मतुल्यैः षोडशभिर्जयविजयादिपार्षदैः पर्युपासितं सेवितं श्रीवत्सकौस्तुभौ विना श्रीवत्सकौस्तुभाख्य भूषणरहितं हरिं दृष्ट्वा तुष्टुवुरित्यर्थभ्रांतिनिरासाय प्रमाणेनैव तं व्याचष्टे ॥

श्रीवत्स इति । तदतीतैस्तौ प्रकृतिपुरुषावतीत्य स्थितैः स्वरूपैरपि वासुदेवादिरूपैरावृतं हरिमुपासते । ब्रह्मादय इति शेषः ॥ यद्वा ॥ न केवलं वासुदेवादिस्वरूपैर्युक्तं हरिमुपासते किंतु स्वातंत्र्यादिगुणैरपि युक्तमित्यर्थः । उपास्यत इति क्वचित्पाठः । तत्र ब्रह्मादिभिरिति युक्त इति चाध्याहृत्य योजनीयं । एवं प्रमाणेन श्लोकं व्याख्यायेदानीं विना श्रीवत्सकौस्तुभावित्येतद्दंडकुंडलादिवद्विशेषणमात्रं न भवति किंतु हेतुगर्भमित्याशयवानाह ॥ श्रीवत्सेति । नन्वनेन कथं हेतुगर्भत्वं ज्ञापितमित्यतस्तत्स्पष्टयति ॥ प्रकृतीति । तुल्यानपि तु तुल्यानेवेत्यर्थः । अनेन सप्तदशरूपाणां प्रकृतिपुरुषोत्कृष्टधर्मेणैव तुल्यत्वं न तु येन केनचिद्धर्मेणेत्युक्तं भवति । आत्मतुल्यैरित्यस्यात्मना तुल्यैरित्यर्थभ्रांतिं विग्रहप्रदर्शनेन परिहरति ॥ आत्मभूतैरिति । अनेनोत्तरपदलोपीसमासः सूचितः । श्रीवत्सकौस्तुभौ विनेति भागवतवाक्यस्य स्वकृतव्याख्याने प्रमाणं वदंस्तेनैव प्रमाणेन षोडशहरिरूपाणि दर्शयति ॥ अपि प्रकृतीति । हरेस्तुल्यास्तु तुल्या एव । कथंचन केनापि प्रकारेण भिन्ना अतुल्या न च नैवेत्यर्थः । अनेन गो गवयादिसादृश्यवदत्र सादृश्यं न विवक्षितं किंत्वत्यंताभेदहेतुभूतं सादृश्यमेव विवक्षितमित्युक्तं भवति । स्वोक्तार्थस्यात्यंतप्रामाणिकत्वसूचनाय श्रीवत्सकौस्तुभौ विनेत्यस्य स्वोक्तार्थे प्रमाणांतरमाह॥ श्रीवत्सेति। विनाभावमतीतत्वधर्मं। इंद्रजालवदविद्यमानमेव विनाभावं हरिः प्रदर्शयतीति भ्रांतिं निराकरोति ॥ यच्च इति। विनाभावमित्यनुवर्तते। हरिरनयोर्वशेनेति यद्यचास्य हरेराभ्यां श्रीवत्सकौस्तुभाभ्यां तु विशेषणातीतत्वं। स एव तु विशेषेण विनाभाव इति प्रोक्त इत्यर्थः। आत्मतुल्यैरित्यत्रात्मशब्दस्यात्मभूतैरिति यः स्वोक्तार्थस्तत्र प्रमाणमाह ॥ आत्मैवेति। आत्मेत्यनूद्य स्वयमिति व्याख्यातं। जनार्दन आत्मैव स्वयमेव। मध्यस्थावृत्तिरूपेण मध्यस्थरूपेण मध्ये स्थितस्य रूपस्यावृत्तिरूपेण च परितः स्थितत्वाकारेण सप्तदशधा भूत्वा क्रीडत इत्यर्थः। मध्ये एकं हरिरूपं तिष्ठति। तस्य परितः षोडशरूपाणि तिष्ठंति। एवं सप्तदशैः रूपैर्हरिः क्रीडत इति भावः। अनेन श्रीवत्सकौस्तुभौ विना श्रीवत्साख्य प्रकृति

हिरण्यगर्भोत्कृष्टत्वेनात्मतुल्यैः परमात्मभूतैस्तुल्यैश्च षोडशभिर्वासुदेवादिचतुर्भिः केशवादिद्वादशस्वरूपैः पर्युपासितं परित उप समीपे आसितं उपसेवितं । आवृतमिति यावत् । एतादृशं हरिं दृष्ट्वा तुष्टुवुरीति भागवतवाक्यं व्याख्यातं भवति ॥ २८ ॥ नमस्ते यज्ञवीर्यायेति श्लोके वयस इति पदस्य पक्ष्यर्थत्वभ्रांतिनिरासाय प्रमाणेनैवार्थमाह ॥ वय इति । सर्वस्य वयानां बंधकत्वात् । वय बधन इति धातोः । वयःशब्दस्य धातुसिद्धार्थे श्रुतिप्रयोगं च दर्शयति ॥ मा तंतुरिति । हरौ धियं मनो वयतो बध्नतो मे मम तंतुः संततिर्मा छेदि उच्छिन्नामा भूदित्यर्थः ॥ ३० ॥ यत्ते गतीनामिति श्लोके तिसृणां गतीनामित्यस्य मोक्षापतमोनरकरूपाणां गतीनामित्यर्थभ्रांतिनिरासायाप्रतिपत्त्या वा प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ देवलोकादिति । यद्वैष्णव स्थानं देवलोकादिभ्यः परमुपरि विद्यमानं तिसृभ्यो देवलोकादिभ्यः परममुत्तमं तद्विदुषां गतिर्गम्यमित्यर्थः ॥ ३१ ॥ अथ तत्र भगवान्किं देवदत्तवदित्यारभ्यैक एव पर्यवशेषित इत्यंतगद्येषु किं भगवान् देवदत्तवद्गुणविसर्गपतितः पारतंत्र्येण च युक्तोऽ-होस्विदात्मारामः समंजसदर्शनः स्वातंत्र्यादिमानिति न विदाम इति देवानां हरिस्वातंत्र्यादिविषयसंशयज्ञानमुच्यत इति भाति। भगवत्युभयं स्वातंत्र्यादिकं पारतंत्र्यादिकं च संभवति । तत्र विरोधो न ह्यस्ति । कुतः यतः । उपरतसमस्तमायामये केवलस्वात्म मायायां स्वाश्रिताज्ञानमंतर्धाय व्यवधानं कृत्वा स्थिते को नु धर्मो दुर्घट इव भवति।स्वातत्र्यपारतंत्र्यादिधर्माणां मायाकल्पितत्वेन मिथ्यात्वात् । मिथ्याभूतविरुद्धधर्माणामेकत्रावस्थानांगीकारे घटे मिथ्याभूतगोत्वाश्वत्वाद्यवस्थानांगीकारवन्न विरुद्ध इति देवानां हरिस्वातंत्र्यादेर्मिथ्यात्वनिश्चयोऽस्तीति च भाति । तदुभयं प्रमाणबाधितमित्यतस्तेषां गद्यानां भिन्नवाक्यत्वमभिप्रेत्याभिप्रेतार्थमाह ॥ अथ तत्र भगवानित्यादिना । न हि विरोध उभयं भगवतीति गद्ये उपरतसमस्तमायामय इति पदस्योपरतमध्यस्थपद समस्तं मायामयं मायोपादानकं जगद्यस्मिन्स तथेति जगदारोपाधिष्ठानत्वभ्रांतिनिरासाय तथा केवलस्वात्ममायामिति पदस्य स्वाश्रिता-

ज्ञानार्थत्वभ्रांतिनिरासाय च तत्पदद्वयमनूद्य यथावद्व्याचष्टे ॥ उपरतेति । स्वरूपद्वयाभावादित्यादिवाक्यस्य पूर्ववाक्यवदाक्षेपार्थत्वभ्रांतिं निवारयति ॥ स्वतंत्रः परतंत्रो वेत्यादि । अपरिगणितगुणगण इत्यस्यार्थः ॥ तस्यानंतगुणत्वादिति । ईश्वर इत्यस्यार्थः ॥ पूर्णशक्तित्वत इति । अनवगाह्यमाहात्म्य इत्यस्यार्थः ॥ दुर्ज्ञेयत्वाच्च सर्वेश इति । अनेन तात्पर्यं सार्धश्लोकेन न हि विरोधा उभयमित्यारभ्यानवगाह्यमाहात्म्य इत्यंतभागवतगद्यं व्याख्यातं भवति । तत्र स्वातंत्र्यादिकमेवास्य जानंतीत्यनेन भगवति विरोधे सति उभयं स्वातंत्र्यादिकं पारतंत्र्यादिकं च न विदामः । किंतु स्वातंत्र्यादिकमेव विदाम इति गद्यावांतरवाक्यं व्याख्यातं भवति । तच्छक्तेरविदोऽज्ञानिनोऽमुं विष्णुं परतंत्रं जीवं जीवात्मकं वदंति । यथा रज्जुरज्ञानां भ्रांतानां सर्पधिया ज्ञानामभ्रांतानां रज्जुबुद्ध्याऽवगम्यते तथा परमेश्वर एवं दुर्घटया शक्त्या स्वेच्छयैव चाज्ञानं मिथ्याज्ञानिनामज्ञो मिथ्याभूतसार्वज्ञादिमानिति मिथ्याबुद्ध्याऽवगम्यते । ज्ञानां ज्ञानिनां ज्ञः सत्यसार्वज्ञादिमानिति यथार्थबुद्ध्याऽवगम्यते इत्यर्थः । अनेनैव भागवतगद्ययोजना सूचिता । भगवान्किं देवदत्तवदिह गुण विसर्गपतित इति कारणात्पारतंत्र्येण युक्तः । अहोस्विदात्मारामः स्वतंत्र उपशमशीलः समंजसदर्शन इति संशयं च ह वाव निश्चयेन न विदामो न विद्मः । अत्र व्यत्ययेन न शब्विकरणं ज्ञेयं । एतादृशः संशयो ज्ञानिनां नो नैव भवति किंतु हरिस्वातंत्र्यादि निश्चय एवास्माकमस्ति । कस्मात् । हि यस्मात्कारणाद्विरोधे सति उभयं स्वातंत्र्यादिकं पारतत्र्यादिकं च भगवति न विदामः । न च तर्हि पारतंत्र्यमेवास्त्विति वाच्यं । केवलं स्वात्ममायामंतर्धाय व्यवधानं कृत्वा स्वसामर्थ्येनैवोपरतसमस्तमायामये उपरतं निरस्तं समस्तं मायामयं प्रकृतिकार्यं यस्मिन्नीश्वरे स तथा तस्मिन् प्राकृतस्वभाववर्जितमपरिगणितगुणगणत्वादिविशेषणविशिष्टेश्वरे दुर्घट इव दुर्घट एव प्रमाणबाधित एव पारतंत्र्यादिः को नु भवति । कुतो नु भवति । न कुतोऽपि । न चास्मिन्हरिस्वरूपे पारतंत्राद्यसं

भवेऽपि द्वितीये हरिस्वरूपे पारतंत्र्यादिसंभवतीति वाच्यं । स्वरूपद्वयाभावात् । एकस्वरूप एव त्वं यथा रज्जुखंडो भ्रांतस्य सर्पधिया विषयीकृतः पुनः स एवाभ्रांतस्य रज्जुधिया विषयीक्रियते । तथा समविषममतीनां तत्त्वातत्त्वज्ञानिनां मतं । भावे क्तप्रत्ययः । मतमनुसरसि । तेषां यथार्थायथार्थबुद्धिविषयो भवसि । वस्तुतस्तु त्वं वस्तुस्वरूपः । तत्तद्वस्त्वात्मकाकारसदृशाकारः सन् सर्ववस्तुषु संस्थितः सर्वेश्वरत्वादिविशिष्ट एक एव पर्यवशेषितः परिशेषितः । सकलवेदादिप्रमाणसिद्ध इति । त्रिभुवनात्मभवनेति गद्ये त्रिनयनपदस्य रुद्रार्थत्वभ्रांतिनिरासाय स्वयं विवक्षितमर्थमुक्त्वा तत्राभिधानं पठति ॥ त्रिनयन इति । नृसिंहरूपस्य नामानि नृसिंहनामानि । तुशब्दो मुख्यत्वरूपविशेषार्थकः । अस्मिन्नेव गद्ये दितिजदनुजादयस्तवैव विभूतय इति दितिजादीनामणिमाद्यैश्वर्यस्वरूपत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव विभूतिपदार्थमाह ॥ विविधमिति । विविधं यथा भवति तथा भावपात्रत्वाद्भावस्य सत्तायाः स्थानत्वात् । अनेन विविधरूपस्य हरेर्भूतिः स्थितिर्येषु ते विभूतय इति विग्रहः सूचितः ॥ ३३ ॥ हंसाय दह्ननिलयायेति श्लोकार्धे उपक्रमात्कार्यारंभान्निष्क्रांतो निरुपक्रम इति हरेः सत्त्वात्मना कार्यानारंभकत्वमुच्यत इति भाति । तच्च स इदं सर्वमसृजतेत्यादिबहुप्रमाणविरुद्धमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ निरुपक्रम इति । उपक्रमे तु कार्यारंभं कुर्यादित्यर्थः ॥ ३५ ॥ मय्येकांतमतिर्नान्यादित्यनेन भगवदेकांतमतिरहितस्यैवान्यकाम उक्तः । तेन भगवदन्यवृत्रवधकामवतां देवानां हर्येकांतमतिराहित्यं प्राप्तं । तन्निरासाय भागवते यदि सोऽपि तथा विध इत्युक्तं । तेन तन्निरासः स्पष्टं न प्रतीयते । ततस्तदनूद्य सम्यग्व्याचष्टे ॥ यदि सोऽपीति । एवं व्याख्यानेनापि देवानामेकांतमतिराहित्यनिरासो न प्रतीयते । ततस्तदभिप्रायमाह ॥ युष्मदिति । अभिप्रेतार्थे प्रमाणमाह ॥ विष्णोः प्रियमिति । देवा यद्यप्रियं कामयंते तर्हि सकामा हि यस्माद्धरे रहितोऽप्रियस्तस्मादीशस्तं कामं देवेभ्यो न राति न ददाती

त्यर्थः । अनेन भगवदप्रियान्यकामवतामेव भगवदेकांतमतिराहित्यं न तु देवानां । तेषां भगवत्प्रियान्यकामवत्त्वात् । अतो न देवानामन्यकामित्वेनैकांतमतिराहित्यमित्युक्तं भवति ॥ ३८–३९ ॥ भगवन्यात भद्रं व इति श्लोके दध्यंचमृषिसत्तमं गात्र मुद्दिश्य याचतेति हरिणा देवानामृषिः प्रार्थनीय इत्याज्ञाकृता। तेन देवानामृष्यपेक्षया समर्थत्वं देवापेक्षया ऋषेः समर्थत्वं प्रतीयते। तत्तु प्रमाणबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ समर्था अपीति । तेषां मुन्यादीनां ॥ ४१ ॥ इति श्रीभागवत तात्पर्यटिप्पण्यां नवमोऽध्यायः ॥ ६–९ ॥

॥ हरिः ॐ ॥ यद्यप्यथाऽपि याचित इति श्लोकस्यान्यार्थप्रतीतिनिरासस्तात्पर्यार्थश्च मघवन्यात भद्रं व इति श्लोक व्याख्यानरूपेण समर्था अपि याचंतीत्यादितंत्रभागवतप्रमाणेनैव सिद्धस्तथाऽपि तद्दाढ्यार्थ तत्र प्रमाणांतरं दर्शयंस्तेनैव प्रमाणां तरेण पूर्वप्रमाणोक्तप्रमेयादधिकप्रमेयं च दर्शयति ॥ आज्ञयैवेत्यादिना । स्वात्मनो नीचानामपीति संबंधः । यथाऽर्भकेऽर्भकं प्रति जनकस्य पितुः प्रार्थना नीचवाक्यं च न तेजः क्षयकारणं तथेत्यर्थः ॥ ६ ॥ इति श्रीभागवतात्पर्यटिप्पण्यां दशमोऽध्यायः ॥ ६–१० ॥ छ ॥

॥ हरिः ॐ ॥ अविद्वानेवमिति श्लोके अविद्वाननीशमसमर्थमेवात्मानमीश्वर समर्थ मन्यत इत्यर्थभ्रांतिनिरासाय मन्यतेऽनीशमीश्वरमित्येतत्स्वयमनूद्य प्रमाणेनैव व्याचष्टे ॥ मन्यत इति । ये परमात्मानमीश्वरमपि जीवरूपेणानीशं मन्यंते तान् यः स्नेहात्समीक्ष्य वर्तते सोऽपि निरयभाग्भवेदित्यर्थः । अनीशजीवरूपेणेति क्वचित्पाठः ॥ पुरुषः प्रकृतिर्व्यक्त इत्यत्रैं पुरुषव्यक्तात्माक्षयपदानां मनुष्यजीवप्राकव्यदेहाभिप्रायार्थभ्रांतिनिरासाय सिंहावलोकनन्यायेन प्रमाणेनैव विवक्षितमर्थमाह ॥ हिरण्यगर्भ इति ॥ ११ ॥ वज्रस्तु तत्कंधरमिति श्लोके वज्रस्तत्कंधरं न्यपातयदिति वज्रेण वृत्रशिरश्छेद उच्यते । स तु

अपां फेनेन वृत्रस्य शिर इंद्रो न्यपातयदित्यादिप्रमाणविरुद्धमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ संधित इत्यादिना। वृत्रेण समयेन केनचित्कालेन संधितः संधानं सख्यं प्राप्तवान्। अथो सख्यप्राप्त्यनंतरं करग्रहो वृत्रस्य हस्तग्राहकः। अस्य वृत्रस्य फेनेन। बंधकर्तुमिति शेषः। समुद्रतीरे विचरन्फेनेन मां जहीति नर्मणोपहासेन वृत्रेण वाचित्वा। उक्त इति यावत्। सुरेश्वरः पादस्पर्शविवादं च पादस्पर्शसहितविवादं च कृत्वा युद्धाय दंशितः कवचयुक्तोऽभवदित्यन्वयः॥ फेने वज्रं समावेश्येत्यनेन भागवतवाक्यस्य प्रमाणविरोधः परिहृतः। वत्सरेणेत्यनेन ॥ ज्योतिषामयन इति भागवतवाक्यं व्याख्यात भवति ॥ ३३ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां द्वादशोऽध्यायः ॥ ६-१२ ॥ छ ॥

॥ हरिः ॐ ॥ तथेंद्रं स्म हेति श्लोके हत्यया तप्तमितीदानींतनवृत्रहत्याया इंद्रदुःखसाधनत्वमुच्यत इति भ्रांतिं सर्वदेवानामिदानींतनकर्मण एव दुःखहेतुत्वप्रतिपादकत्वप्रतीयमानग्रंथांतरव्याख्यानरूपप्रमाणेनैव परिहरति ॥ प्रारब्धकर्मणेत्यादिना। एतेषां देवानां प्रारब्धकर्मणा। क्लृप्तदुःखस्येत्यन्वयः। व्रणहेतुः रणो युद्धं यथा पूर्वकर्मक्लृप्तदुःखस्य सूचकं तथेत्यर्थः। कुत एतदित्यत आह ॥ देवानामिति। स्थितप्रज्ञभावात्स्थितप्रज्ञस्यापरोक्षज्ञानित्वस्य सत्वात्। अपरोक्षज्ञानिनां तु प्रारब्धं विनाऽन्यस्यानिष्टकर्मणः फलसाधनत्वाभावादिति भावः। अन्यथोक्तस्य वैपरीत्येनैव भवेत्। क्वापि प्रारब्धमपि किंचिद्विघटितमुपमर्दितं भवेदेवेत्यर्थः ॥ ११ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां त्रयोदशोऽध्यायः ॥ ६-१३ ॥ छ ॥

॥ हरिः ॐ ॥ मुक्तानामपीति श्लोके नारायणपरायणः सुदुर्लभ इति नारायणपरायणस्य सुदुर्लभत्वोक्त्याऽर्थान्नारायणायनस्य दुर्लभत्वमेव। न तु सुदुर्लभत्वमित्युक्तं भवति। तत्र नारायणायनः को नारायणपरायणश्च क इति जिज्ञासायां तौ प्रमाणेनैव दर्शयति ॥ नवकोट्य इति। तुरवधारणे। केचिदित्यनेन संबध्यते। देवनां नवकोट्यो नवकोटिसंख्याका देवाः

शतकोट्यर्षयश्च ते सर्वे नारायणायना एतत्परायणा नारायणपरायणास्ते केचिदेवेत्यर्थः । अस्मिन्प्रमाणे केचिदित्युक्त्या यस्य कस्यचिन्नारायणपरायणत्वभ्रांतिर्भवति । तां प्रमाणेनैव परिहरंस्तेनैव प्रमाणेन सिद्धशब्दार्थं चाह ॥ नारायणायना इति । केचन ब्रह्माद्या एव तत्परायणाः स्युरित्यन्वयः । ब्रह्माद्या इत्याद्यपदेन न वाय्वादयो ग्राह्याः । योग्यं सुखं लभन्सिद्ध इत्युच्यत इत्यर्थः ॥ ५ ॥ अहो विधातस्त्वमित्यारभ्य नाहं तनूज ददृशे हतमंगला त इत्यंत श्लोकेषु मृतबालकमातुः कृतद्युते र्मिथ्यार्थशब्दप्रयोगबलात्तस्याः स्वरूपतो मिथ्याज्ञानत्वभ्रांतिर्भवति । तां प्रमाणेनैव परिहरति ॥ संतापेति । आदिपदेन द्वेषः संतापक्रोधरागादिषु सत्सु क्वचिदनर्थकवचोऽर्थज्ञाद्भिन्नोऽनर्थज्ञोऽज्ञानी तस्य वच इत्यन्वयः । भवतीति शेषः । अनेन कृतद्युतेर्वचनानि संतापादिमूलान्येव । न तु स्वरूपमिथ्याज्ञानमूलानीत्युक्तं भवति ॥ ५४ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां चतुर्दशोऽध्यायः ॥ ६–१४ ॥

॥ हरिः ॐ ॥ कर्माभिध्यायत इति श्लोके कर्माभिध्यायतो देहिनो मनसः सकाशात् । नानाकर्माण्ययं देहश्च पुत्रादिदेहश्चाभवन्निति मनसः साक्षादेव कर्मपुत्रादिदेहे कारणत्वमुच्यत इति भ्रांतिं प्रमाणेनैव परिहराति ॥ मनस इति । मनसः । जाताभ्यामिति शेषः । पुण्यपापाभ्यां पुत्रादिदेहो जायत इति शेषः । ननु ज्ञानकर्मास्वरूपस्य देहस्य ज्ञानकर्मरूपत्वं प्रमाणबाधितमतो ज्ञानक्रियात्मक इत्यनेन तदुक्तिरयुक्तेत्यतः प्रमाणेन तदर्थमाह ॥ द्रव्यात्मक इति । ज्ञानेंद्रियाणि मनश्च ज्ञानात्मकं ज्ञानात्मकानि उदाहृतमुदाहृतानीत्यर्थः । अनेन देहस्य द्रव्यात्मकत्वमेव न तु ज्ञानाद्यात्मकत्वमतो न प्रमाणबाध इत्युक्तं भवति । ननु ज्ञानादिनिमित्तकारणानामिंद्रियाणा ज्ञानक्रियात्मकत्वाभावाज्ज्ञानक्रियात्मक इति शब्दव्यवहारः कथमित्याशंकां प्रमाणेनैव परिहरति ॥ कार्यकारणयोरिति । कार्ययोर्ज्ञानकर्मणोर्ज्ञानात्मकं

क्रियात्मकामिति शब्दव्यवहारात्तत्कारणेष्विंद्रियेष्वपि ज्ञानात्मकादिशब्दव्यवहारोपपत्तिरिति भावः ॥ २८–२९ ॥ द्वैते ध्रुवार्थविस्रंभमिति श्लोकार्धे द्वैते जीवेश्वरभेदे ध्रुवार्थविस्रंभं सत्यार्थत्वेन विश्वासं त्यजेति जीवेश्वरभेदस्य मिथ्यात्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव द्वैतशब्दार्थं तत्प्रसंगात् द्वयशब्दार्थं च दर्शयति ॥ अनन्येति । अन्यद्धरेरन्यज्जीवाख्यवस्तु । कुतो द्वयं स्मृतमित्यत आह ॥ अन्येति । अन्यापेक्षत्वतः स्वस्मादन्यस्येश्वरादृष्टादेरपेक्षत्वतोऽपेक्षां कृत्वैव । तेन जीवेन देहादेः प्राप्तत्वाद्देहादिकं द्वैतमुच्यत इत्यर्थः ॥ ३० ॥ यत्पादमूलमुपसृत्येति श्लोके रुद्रादीनां संकर्षणनामकशेषपादोपसर्पणेनैव शेषमाहात्म्यप्राप्तिरुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ रुद्राद्या इति । शेषदेहस्थितमितिपदस्याकाशवच्छेषदेहस्थत्वार्थभ्रांतिनिरासायोक्तं । शेषांतर्यामिणामिति । अनेन शेषांतर्नियामकत्वेन शेषदेहस्थं ज्ञात्वेति ज्ञाने प्रकारः कथितो भवति । अस्मिन्नेव श्लोके द्वितयं विसृज्येति द्वितीयशब्दोक्तदेहादेः स्वरूपतो त्याग उच्यत इति भ्रांतिनिरासाय प्रमाणेनैव द्वितयत्यागशब्दार्थमाह ॥ तेनेति । द्वैतेन सह स्वस्य संबंधो नियम्यनियामकभावसंबंधस्तस्य संत्यागीत्यर्थः । अत्रैव श्लोके इमं भ्रममित्यत्र भ्रमशब्दस्य शुक्तिरजतभ्रमाद्यर्थत्वभ्रांतिनिरासाय स्वयं तदर्थमाह ॥ देहादीति । देहादावहंममाभिमान इत्यर्थः । अस्मिन्नेव श्लोके अतुलानधिकं तदीयं तस्य हरेः संबंधिमहिमत्वं प्रापुरिति रुद्रादीनां संकर्षणाख्यविष्णुसंबंधिसर्वोत्तमत्वप्राप्तिरुच्यते । तत्तु प्रमाणबाधिनमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ तेषां तेषामिति । तेषां ब्रह्मरुद्रादीनां तेषामिंद्रादीनां यानि पदानि तानि पदानि तु विशेषेण वैष्णवान्येव । तथा तेषां महित्वं च यतस्तद्वशं गतस्य हरेरधीन । अतो हरेः संबंधीत्युच्यत इति शेषः । अनेन भागवतस्थमहित्वशब्दो रुद्रादिपदोपलक्षकस्तथा भागवतस्थतदीयशब्दो विष्ण्वधीनत्वार्थक एव न तु विष्ण्वात्मको विष्णुसंबंध्यर्थक इत्युक्तं भवति । ननु यदि विष्ण्वात्मकविष्णुसंबंधिदं

माहित्वं न स्यात् । तर्ह्यस्यातुलानाधिकमित्यनेनोक्तमतुलानाधिकत्वं न घटते । तस्य विष्ण्वात्मकमहत्वैकनिष्ठत्वादित्यतस्तद्घटयति ॥ अतुल्येति । प्रथमैवशब्दो नेत्यनेन संबध्यते । चस्तस्येत्यनेन संबध्यते । तस्य तस्य च ब्रह्मरुद्रादेरिंद्रादेश्च यन्मुक्तिगं माहित्वं तदेव स्वस्य ब्रह्मरुद्रादेः पूर्वमाहात्म्यं संसारावस्थायां विद्यमानमाहात्म्यमेवापेक्ष्यातुल्यानधिकं न तु हरिमाहात्म्यवत्सर्वमपेक्ष्येत्यर्थः। अनेन तुला यस्यास्तीति तत्तुल न तुलं तुल्यं संसारस्थमाहात्म्यं यस्य मुक्तिगमाहात्म्यस्य तदतुलं । नाधिकं संसारस्थमाहात्म्यं यस्मान्मुक्तिगमाहात्म्यात्तत्तथा । अतुलं च तदनधिकं चातुलानधिकमिति तत्पदविग्रहः सूचितो भवति । नन्वेवं कुतो व्याख्यायेति विष्ण्वात्मकमाहात्म्यप्राप्तिरेवार्थः किं न स्यादित्यत आह ॥ न हरेरिति । हरेः । स्वरूपभूतमिति शेषः । तंत्रभागवतोक्तार्थदा र्ढ्याय स्वयं तत्र प्रमाणमाह ॥ ब्रह्मेशानेति । हे हरे । यत्कैवल्यं सर्वोत्तमत्वं यत्स्वभावो यस्य स्वभावः स्वरूपं स केवलः सर्वोत्तमो भवानेवेत्यर्थः । एवमतुलानधिकमिति भागवतपदमेकेन प्रकारेण प्रमाणेनैव व्याख्याय प्रकारांतरेणापि स्वयं व्याचष्टे ॥ तत्प्रसादेति । अन्यमाहात्म्यं तत्प्रसादलभ्यत्वाद्विष्णुप्रसादलभ्यत्वात्तदीयमपि वैष्णवमपि तेन विष्णुमाहात्म्येनातुल्यं न भवति । अनधिकं च विष्णुमाहात्म्यादधिक च न भवतीत्यर्थः । अनेन न तुलं तुल्यमतुल्यं नाधिकमनधिकं अतुलं च तदन धिकं चेति पदविग्रहः सूचितः । तथा हरिमाहात्म्यपदाध्याहारश्च सूचितो भवति ॥ ३६ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां पंचदशोऽध्यायः ॥ ६–१५ ॥

॥ हरिः ॐ ॥ एष नित्योऽव्यय इति श्लोके नित्यशब्दाव्ययशब्दयोरेकार्थत्वभ्रांतिपरिहाराय स्वयं तद्वाक्यमनूद्य तत्र नित्यशब्दं प्रमाणेनैव व्याकुर्वंस्तेनैव प्रमाणेन नित्यस्यार्थस्य संबंध इति श्लोकतात्पर्यार्थं चाह ॥ एष इति । हरिर्नित्ययुक् । अनेनाव्ययो नाशरहितो हरिर्नित्यो नित्ययुक् । जीवेन नित्यसंबंध इति भागवतवाक्यं व्याख्यातं भवति ॥ आत्ममायागुणै

र्विश्वमित्यर्थे प्रभुर्हरिरात्मानं स्वात्मानं विश्वं विश्वाकारं सृजत इति हरेर्विश्वोपादानकारणत्वमुच्यत इति भ्रांतिनिरासाय स्वयम पेक्षिताध्याहारेणात्मानं सृजत इत्येतद्व्याचष्टे ।। आत्मानमिति ।। ९ ।। नादत्त आत्मा हीति श्लोके आत्मा परमात्मा क्रियाफलं गुण शुभं नादत्ते भुंक्ते । दोषमशुभं च नादत्त इति हरेः शुभाशुभफलभोक्तृत्वमुच्यते । तत्र हरेः शुभाशुभ-फलभोक्तृत्वं ऋतं पिबंतावित्यादिश्रुत्यादिबाधितमित्यतः प्रमाणेनैव तत्तात्पर्यार्थमाह ।। भोक्तेति। स हरिः। गुणभोक्तृत्वाच्छुभ भोक्तृत्वात् । तदवृद्धितस्तेन सुखभोगेन सुखवृद्ध्यभावात् ।। ११ ।। मनस्युपरते प्राप्य इति श्लोकार्धे मनस्युपरते नष्टे सति मनसा सहेति ध्वस्तमनसा साहित्यमुच्यते । तदयुक्तं । ध्वस्तेन साहित्यासंभवादित्यतः स्वयं सम्यक् तद्व्याचष्टे।। वाच्येति ।।२१।। यस्मिन्निदमिति श्लोके मृन्मयेष्विव मृज्जातिरिति वाक्यस्य मृज्जातिर्मृत्त्वरूपजातिर्मृन्मयेषु घटादिषु यथा तिष्ठतीत्यर्थभ्रांति-निरासाय स्वयं तद्वाक्यमनूद्य प्रमाणेनैव व्याचष्टे ।। मृन्मयेष्विति । तेषु पृथिवीपर्वतेषु मृज्जातयो मृदोजातिरु-त्पत्तिर्येषां ते तथा ।। यद्वा ।। मृज्जातयः ।। भावप्रधानो निर्देशः । मृदो मृत्त्वस्य जातिरवांतरजातिर्वृक्षत्वादिर्येषु स्थावरादिषु तथोक्ताः ।। २२ ।। ततश्च सप्तरात्रांत इति श्लोकद्वये स चित्रकेतुर्धार्यमाणया विद्यया नमस्तुभ्यं भगवते वासुदेवाय धीमही त्यादिनारदोपदिष्टविद्यया विद्याधराधिपत्यं लेभे । शेषस्य चरणांतिकं जगामेति भगवदुपासनाख्यविद्याया भगवत्प्राप्तितरफल मुच्यते। तदयुक्तं । यांति देवव्रता देवानित्यादिगीतावाक्ये यांति मद्याजिनोऽपि मामित्यंतेन विष्णूपासनाया विष्णुप्राप्तेरेव फलत्वेनोक्तत्वेन तद्विरुद्धत्वादित्याशंकां प्रमाणेनैव परिहरति ।। अंतर्यामिणामिति । नरोऽन्यपदायोग्योऽन्यसमीपगः । अन्यस्य शेषविद्याधरादेः पदं वा पदमेव प्राप्नुयादित्यर्थः । अनेन गीतायामन्यातर्गतभगवदुपासनाया भगवत्प्राप्तिः फलमुक्तं । भागवते त्वन्यातर्गतभगवदुपासनाया विष्णुप्राप्तीतरफलमप्युक्तमतो न विरोध इत्युक्तं भवति ।। २८ ।। तद्दर्शनध्वस्तेति श्लोके तस्य

शेषस्य दर्शनेन ध्वस्तसमस्तपापश्चित्रकेतुरनादिपुरुषं तं शेषमभ्यात्प्राप्तेति चित्रकेतोः शेषस्यैव प्राप्तिरुच्यत इति भ्रांतिनिरासाय स्वयं तत्तात्पर्यार्थमाह ॥ अनेनेति । अनेन प्रकारेण नमस्तुभ्यं भगवते वासुदेवाय धीमहीत्यादिनारदोपदिष्टप्रकारेण मुहुः शेषांतर्यामिणं विष्णुमुपास्य तत्सकाशं तस्य शेषांतर्यामिविष्णोः सकाशं समीपमभ्यथादित्यर्थः । स्वोक्तार्थे प्रमाणमाह ॥ शेषांतर्यामिणमिति । गम्यत इति गतिः स चासौ गतिश्चेति तद्गतिः । त । शेषांतर्गतं गम्यं हरिमापेत्यर्थः । अनेन जगाम देवदेवस्य शेषस्य चरणांतिकमित्यारभ्य तस्मै नमो भगवतेस्तु सहस्रमूर्ध्ने इत्यंतभागवतस्थश्लोकाः केवलशेषप्रतिपादका न भवंति किंतु मुख्यतः शेषांतर्गतविष्णुप्रतिपादका इति सूचितं भवति ॥ २८ ॥ अहं वै सर्वभूतानीति श्लोके सर्वभूतान्यहमिति भगवता स्वस्य सर्वभूतैक्यमुच्यत इति भ्रांतिं प्रमाणेनैव परिहरति ॥ हरिरिति । तुरवधारणे । तदंतर्याम्यपेक्षयैव सर्वभूतांतर्नियामकत्वापेक्षयैव सर्वभूतानीत्युच्यते न तु तदैक्येन । सर्वाणि तिङ्पदानि तु अस्मीत्यादितिङ्पदानि च तथैव सुप् पदानि च अहमादि सुबंत पदानि च तस्मिन्नेव तदंतर्यामिहरावेव मुख्यवृत्त्या विशेषतो भेदप्रतिनिधिविशेषबलादेवापर्यायभूतानि वर्तंत इत्यर्थः । अनेनैव प्रमाणेन भूतानि विष्णुभुवनानि विष्णुरिति स्थलांतरस्थैक्योक्तेरप्यर्थ उक्तो भवति ॥ ५१ ॥ लोके विततमिति श्लोकार्धे आत्मपदेन परमात्मग्रहणे उभयं च मया व्याप्तमित्युत्तरार्धे विरोधो भवत्यतो जीव एव ग्राह्यः । तस्य तु लोकं चात्मनि संततमित्युक्तलोकाधारत्वं प्रमाणविरुद्धं कथं घटत इत्यतोऽपेक्षिताध्याहारेण तद्घटयति ॥ लोकं चेति । संततं सम्यक् ततं व्याप्तं । स्थितमिति यावत् ॥ ५२ ॥ एवं जागरणादीनिति श्लोके जीवसंस्थानानि जागरणादीन्यात्मनो जीवस्य मायामात्राण्यविद्याकल्पितानीति जाग्रदाद्यवस्थानां मिथ्यात्वमुच्यत इति भ्रांतिनिरासाय स्वयमनूद्य यथावद्व्याचष्टे ॥ मायेति ॥ ५४ ॥ उभयं स्मरत इति श्लोके यद्ब्रह्म पुंसः प्रस्वापप्रतिबोधयोरुभयोः प्रस्वापं प्रतिबोधं चान्वेति प्राप्नोति

व्यतिरिच्येत भिन्नं च भवति तद्ब्रह्म परं ज्ञानात्मकमिति परब्रह्मणो जाग्रदाद्यवस्थोच्यत इत्यन्यथाप्रतीतिनिरासाय स्वयमन्वयं दर्शयन् सम्यक् तद्व्याचष्टे ॥ प्रतिबोध इति । प्रतिबोधेऽन्वेतीति पदान्वयप्रदर्शनं । तत्रान्वेतीत्यस्यार्थः ॥ स्वमपि प्रतिबुद्ध इति ॥ अस्वपन्निति च । अनेन यतः कारणाज्ज्ञानं ज्ञानात्मकं ब्रह्म प्रस्वापप्रतिबोधयोरन्वेति । प्रस्वापेऽस्वपन्प्रतिबोधे स्वयमपि स्वातंत्र्येणैव प्रतिबुद्धं भवति । तत्तस्मात्कारणाद्व्यतिरिच्यते विशेषेण स्वापाद्यवस्थामतिक्रम्य वर्तते स्वप्नाद्यवस्थारहितं भवति । यतश्च ब्रह्म स्वप्नाद्यवस्थारहितं । तत्तस्मात्कारणं सर्वोत्कृष्टमिति भागवतवाक्यं व्याख्यातं भवति ॥ ५६ ॥ यद्येष विस्मृत इति श्लोके एष आत्मनो जीवादभिन्नो मद्भावो मम स्वभावो यदि पुंसो विस्मृतः स्यात्तर्हि ततो विस्मरणादेकस्य वस्तुनो ब्रह्माभिन्नस्य तस्य पुंसः संसारो भवेत् । यथा देहाद्देहो मृतेर्मृतिः पुनः पुनर्जन्ममरणं च भवेदिति जीवाभिन्नहरिस्वभावविस्मरणस्यानिष्टसाधनत्वमुच्यत इति भ्रांतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ सर्वाभिन्नमिति । अनेनात्मनो जीवाद्भिन्न एषो मद्भावो मम जगत्कर्तृत्वादिस्वभावो यदि पुंसो विस्मृतः स्याद्यदि चैषो मद्भाव आत्मनो जीवादभिन्न इति पुंसो विस्मृतो विशेषेण स्मृतः स्यात्तर्हि तयोरेकस्यास्मरणवतस्ततोऽस्मरणाद्देहाद्देहरूपः संसारः स्यात् । जीवाभिन्नमद्भावविशेषस्मरणवतोऽन्यस्य मृतेर्मृतिरूपतमःप्राप्तिर्भवेदिति भागवतवाक्यं व्याख्यातं भवति ॥ ५७ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां षोडशोऽध्यायः ॥ ६–१६ ॥

॥ हरिः ॐ ॥ एषामनुध्येयपदाब्जेति श्लोके एषां पूर्वोक्तपद्मयोन्यादीनामनुध्येयं पदाब्जयुग्मं हरस्येति रुद्रस्य चतुर्मुखादिध्येयपादत्वमुच्यते । तत्तु प्रमाणबाधितमित्यतोऽपेक्षिताध्याहारेण स्वयं तद्व्याचष्टे ॥ एषामिति । तदवराणां रुद्रादवराणां। अनेन एषां पद्मयोन्यादीनां पक्षे सिद्धांते रुद्रादवराणां नीचानामनुसंधेयपदाब्जयुग्मो हरस्तान् सूरीन् परिभूय पराभाव्य यो क्षत्रबंधुस्तं हरं हि यस्मात्प्रशास्ति तस्मादयं दंड्य इति भागवतवाक्यं व्याख्यातं भवति । नन्वेवं कुतो व्याख्यायते पद्मयोन्याद्यनु-

संधेयपदत्वमेव किंन स्यादिति चेन्न । अस्यार्थस्य प्रमाणबाधितत्वादित्याशयवांस्तत्प्रमाणं पठति ॥ विष्ण्विति । सप्तसु प्रथमेति सूत्रात्प्राणवींद्रा इति प्रथमा द्वितीयार्थे । तद्दारान् रमासरस्वतीभारतीसौपर्णीः ऋते ध्येयः । अन्यैरिति शेषः । एषा हरिविरिंच प्राणानां । ध्यायन्हरः क्वचिदपि रमां तथा सदारविरिंचप्राणौ स्वतंत्रतया न ध्यायतीत्यर्थः ॥ १३ ॥ न चास्य कश्चिद्दयित इति श्लोके सर्वत्र समस्येति हरेः समत्वमुच्यते । तच्च स्वभक्तद्वेषिणोरेकप्रकारफलदत्वमिति भ्रांतिर्भवति । ता प्रमाणनैव परिहरति ॥ सेवेति । सेवायोग्यपदस्य । कडारादिषूपसंख्यानात् कडाराः कर्मधारय इति व्याकरणसूत्रेण सेवायोग्येत्यत्र योग्येति विशेषणस्य परनिपातः । योग्या च सा सेवा च तस्या अतिरेकेणाभावेन । योग्यसेवां विनेति यावत् । अपराधातिरेकेण । योग्यापराधं विनेति यावत् । अन्यस्यापराधिनो न दास्यति । फलमिति शेषः । अनेन तत्तद्योग्यसेवापराधानुसारेण तस्य तस्य फलदत्वादत्रोक्तं हरेः समत्वमित्युक्तं भवति ॥ १३ ॥ देहिनां देहसंयोगादित्यादि श्लोके स्वप्नकल्पिता भिदाभेद इवेश्वरलीलया इह संसारावस्थायां देहसंयोगनिमित्ताद्देहिनां देहवतां सुखदुःखादिद्वंद्वान्यविवेककृतान्यज्ञानकल्पितानि तथा पुंसोऽर्थभेदोऽर्थात्परमार्थभूताद्ब्रह्मणो भेदश्च । तथाऽऽत्मानि जीवे गुणदोषविकल्पश्चाविवेककृत इति सुखदुःखादिसर्वप्रपंचस्य मिथ्यात्वमुच्यत इत्यन्यथा प्रतीतिनिरासाय प्रमाणेनैव तत्तात्पर्यार्थमाह ॥ यत्तद्भगवतेत्यादिना । यतः कारणाद्भगवता यस्य यद्यत्सुखवरादिकं क्लृप्तं संकल्पितं तस्य तत्तदेव नियतं भवेत् । अतः कारणदतो हरेरन्येषा सकाशाद्यो वरः शापश्च या चान्येषा भेदकृतिः भेदस्य कृतिरुत्पत्तिर्यस्या गुणदोषप्रकर्तृतायाः सा तथा भेदहेतुगुणदोषप्रकर्तृता च प्राप्तात् । आप्लृ व्याप्ताविति धातोः प्रकर्षेणाप्तात् । अन्येष्वंतर्व्याप्तात्स्वतः स्वातंत्र्यात्स्वशब्दवाच्याद्धरेरेव भवति न त्वन्येषा तत्र स्वातंत्र्यमित्यर्थः । अत्र दृष्टांतत्वेनोक्तस्य देवस्वप्नकल्पितेति भागवतवाक्यस्यार्थमाह ॥ वासनेति । स्वप्नेषु दर्शनं हरेरेव भवतीति शेषः । अस्य वाक्यस्य तथेत्यभ्याहृत्यातोऽन्येषा वरः शाप

इत्यादिपूर्ववाक्येनान्वयो द्रष्टव्यः । यस्मादेवं सर्वेषां जडाजडानां भगवद्वशता तस्मात्तदेव भगवदाख्यं ब्रह्मैव ज्ञेयमुपास्यमित्यर्थः । अनेन भिदेव गजतुरगादिभेदो यथा स्वप्नकल्पिता स्वप्ने हरीच्छया कल्पितोत्पादिता तथेह संसारे देहिना देहयोगाद्देहे सम्यग्योगादहंममेति संबंधाज्जातानि सुखदुःखजन्ममृतिशापानुग्रहरूपाणि द्वंद्वान्यपीश्वरलीलयैवेश्वरक्रीडात्मकेच्छयैव क्लृप्तानि तथाऽविवेककृतो जीवेश्वरस्वरूपविषयविवेकज्ञानाभावेन कृतोऽर्थभेदोऽर्थस्यजीवस्य भेदो येन गुणदोषविकल्पेन स तथा । जीवभेदहेतुः पुंसः पुरुषस्यात्मनि मनसि विद्यमानो गुणदोषविकल्पश्च गुणदोषयोर्विशेषेण स्वातंत्र्येण कल्पः कल्पकत्वं कर्तृत्वाभिमानश्चेश्वरलीलयैव भवतीति भागवतश्लोकद्वयं व्याख्यातं भवति ॥ २९ ॥ ३० ॥ इति भागवतो देव्या इति श्लोके भागवतश्चित्रकेतुर्देव्या उमायाः प्रतिशप्तुमलंतमोऽतिशयेन समर्थ इति चित्रकेतोरुमायाः सकाशादधिकशक्तिमत्त्वमुच्यते । तत्तु प्रमाणबाधितमित्यतस्तद्वाक्यं स्वयमनूद्य प्रमाणेनैव तदभिप्रेतार्थमाह ॥ प्रतिशप्तुमिति । अपि यद्यप्यशक्ता देवा अन्ये शक्तानां देवाना शापादिषु स्फुटं शक्तास्तथाऽपि शक्तिमत्सु शक्तैर्विहिताः शापाद्या अत्यल्पा अत्यल्पफलाश्चाल्पकालाश्च भवंति । अतो न सम्यक् प्रभवंति । यत्नेन यत्नेनैव तु विशेषेणोत्तमैरपोहितुं निराकर्तुं शक्याश्चात्र संशयो नास्तीत्यर्थः । यद्युत्तमाः शापनिराकरणे शक्तास्तर्हि कुतो नीचशाप गृण्हंतीत्यत आह ॥ उत्तमेष्विति । तदनुग्रहं तेषां स्वोत्तमानामनुग्रहमंतरा विना निःशेषेण निहंतार इत्यन्वयः । तथाऽप्यशक्तैर्विहिता इति सर्वशक्तविषयवचनेनैव यच्छक्तविष्ण्वादिष्वशक्तविहितशापस्यात्यल्पफलत्वादिकं प्राप्तं तत्स्वयमेव परिहराति ॥ सदा रयोरिति । वरशापादय इत्यत्रादिपदेनाशीर्वचनं ग्राह्यं । तदन्येन विष्ण्वादिभ्योऽन्येन कृता अखिलाः खिलरहिताः सर्वसमस्ता इत्यर्थः । ननु विष्ण्वादिषु पारलौकिकशापादेर्निष्फलत्वेऽप्यैहिकशापादेः सफलत्वं स्यादित्यत आह ॥ न चेति । एषां विष्ण्वादीनामवातरा अप्यैहिका अपि शापाः कुत्राचित्कुत्रचिदपि देशे काले च न भवंति । तेनैव सफला भवंतीत्यर्थः । एवमुत्तमेष्वधम-

कृतशापादिस्थितिमुक्त्वेदानीमधमैरुत्तमकृतवरादिस्थितिमाह ॥ वरा इत्यादिना । यथोदितमितिपदं सर्वत्र संबध्यते । विष्णोः सकाशादिति या वराः यथोदितं येन प्रकारेणोदितमुदिता भेदेनोदितास्तथैव संपूर्णफलदाः स्युः । व्यत्ययोऽतिशयकुत्सनभेदेष्विति महाव्याकरणसूत्रादुदितमित्यत्र भेदार्थको लिंगवचनव्यत्ययो ज्ञेयः । विष्णोः श्रियश्च सकाशाद्ब्रह्मणो वरास्तथा विष्णोः श्रियः ब्रह्मणश्च सकाशाच्छेषादेर्वराश्च यथोदितं संपूर्णफलदाः । एवं यथाक्रमं तु क्रममनतिक्रम्यैवोत्तमैरधमानां दत्ता वराः शापाश्च यथोदितं संपूर्णफलदा नात्र कार्या विचारणेत्यर्थः ॥ ३७ ॥ इति श्रीभागवततात्पर्यटिप्पण्यां सप्तदशोऽध्यायः ॥६–१७॥

॥ हरिः ॐ ॥ त्वं सर्वयज्ञेति श्लोके इयमिज्येयं क्रियेत्यन्वयेनेज्याक्रियाशब्दयोः परस्परनिरपेक्षार्थवाचकत्वं प्रतीयते । तां प्रतीतिं निराकरोति ॥ इज्येति । इज्या पूजाक्रियेत्यर्थः । अनेन पूज्यत्वविशेषणेनापूज्यक्रियां निवारयति । तस्या अलक्ष्म्याद्यंतर्यामित्वात् । अत्र त्वं सर्वयज्ञ इत्यादिसामानाधिकरण्योक्त्या लक्ष्मीनारायणयोर्जडयज्ञाद्यैक्यभ्रांतिर्भवति । तथा विष्णोर्यज्ञाद्यभिमानित्वभ्रांतिश्च भवति । अतस्तां प्रमाणेनैव परिहरति ॥ अंतर्यामीत्यादिना । तुर्विशेषे । यज्ञादेरित्यादिपदेन भागवतोक्तव्यंजकादिप्रत्ययांतानां ग्रहणं । इज्यादीत्यादिपदेन भागवतोक्तगुणव्यक्त्यादिनामरूपांतानां ग्रहणं । ततोऽतर्यामित्वादेव विष्णुर्न केवलं यज्ञादेरेवांतर्याम्यपि तु श्रियश्चांतर्यामी । विष्णोस्तु क्वापि कुतश्चन कश्चिदपि नांतर्याम्यस्तीत्यर्थः । अंतर्यामी श्रियश्चापीत्यनेन त्वमियं लक्ष्मीश्च लक्ष्यंतर्यामी चेति भागवतस्थक्रियेयमिति द्वितीयेयंशब्दस्यार्थ उक्तो भवति । तेन तस्यैव व्यर्थशंका निरस्ता भवति ॥ ११ ॥ इति श्रीभागवततात्पर्यटिप्पण्यामेकोनविंशोऽध्यायः ॥ ६–१९ ॥ छ ॥

॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितश्रीमद्भागवततात्पर्यनिर्णयस्य टीकायां प्रबोधिन्यां छलारीनारायणाचार्यविरचितायां षष्ठः स्कंधः समाप्तः ॥ ६ ॥ छ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ छ ॥ छ ॥